दर्शपूर्णमासौ



समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कुरुते। ६।

समौ पृथुत्वेन ॥

पवित्रे स्थो वैष्णवी वायुर्वां मनसा पुनात्विति तृणं काष्ठं वान्तर्धाय छिनत्ति। ७।

तृणं काष्ठं वान्तर्धाय दर्भयोर्दात्रस्य च मध्ये कृत्वा तेन सह छिनत्ति ॥

न नखेन। ८।

गतः ॥

विष्णोर्मनसा पूते स्थ इत्यद्भिरनुमृज्य पवित्रान्तर्हितायामग्निहोत्रहवण्यामप आनीयोदगग्राभ्यां पवित्राभ्यां प्रोक्षणीरुत्पुनाति देवो वः सवितोत्पुनात्विति प्रथमम्। अच्छिद्रेण पवित्रेणेति द्वितीयम्। वसोः सूर्यस्य रश्मिभिरिति तृतीयम्। ९।

अनुमार्जनं पवित्रक्रियाङ्गम्। अतः पवित्रे कृत्वेत्यादौ तदङ्गं क्रियते ॥ उत्पवने लाहाश्वलायनः नानान्तयोर्गृहीत्वाङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यामिति ॥

आपो देवीरग्रेपुव इत्यभिमन्त्र्योत्तानानि पात्राणि पर्यावर्त्य शुन्धध्वं दैव्याय कर्मण इति त्रिः प्रोक्ष्य प्रज्ञाते पवित्रे निदधाति ॥ आपो देवीः शुद्धा स्थेमा पात्राणि

शुन्धत। उपातङ्क्याय देवानां पर्णवल्कमुत शुन्धत॥ देवेन सवित्रोत्पूता वसोः सूर्यस्य रश्मिभिः। गां दोहपवित्रे रज्जुं सर्वा पात्राणि शुन्धतेति प्रोक्ष्यमाणान्यभिमन्त्र्यैता आचरन्ति मधुमद्दुहाना: प्रजावतीर्यशसो विश्वरूपाः। बह्वीर्भवन्तीरुपजायमाना इह व इन्द्रो रमयतु गाव इति गा आयतीः प्रतीक्षते यजमानः।१०।

उपातङ्क्याय देवानां पर्णवल्कमुत शुन्धतेति लिङ्गात्परिवासनशकलस्यापि प्रोक्षणमिष्यते। प्रातर्दोहे त्वभिमन्त्रणनिवृत्तिः अत एव लिङ्गात्। तथा शमीशकले मन्त्रनिवृत्तिः पूर्ववत्॥ गोष्ठाद्विहारसमीपं प्रत्यायतीर्गाः प्रतीक्षते। महेन्द्रोपलक्षणं चात्र पूर्ववत्॥ तथा चाह बौधायनः। इह व इन्द्रो रमयतु गावो महेन्द्र इति वा यदि महेन्द्रयाजी भवतीति॥

इत्येकादशी कण्डिका।

निष्टप्तं रक्षो निष्टप्तो ऽघशंस इति गार्हपत्ये सांनाय्यपात्राणि प्रतितप्य वृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय निरूढं जन्यं भयं निरूढाः सेना अभीत्वर्यांरिति गार्हपत्यादुदीचो ऽङ्गारान्निरूह्य मातरिश्वनो घर्मो ऽसीति तेषु कुम्भीमधिश्रयति।१।

अन्तरायतनमेव निरूहणं यन्त्राङ्क्तलेति कचिद्ब्रन्तकरणात्॥

दर्शपूर्णमासौ



अग्रस्रंसाय यज्ञस्योखे उपदधाम्यहम्। पशुभिः संनीतं बिभृतामिन्द्राय शृतं दधीति वा। २।

प्रातर्दोहकुम्भ्यपेक्षमुखे इति द्विलम्। तेन केवले पयसि दधनि च यथार्थमूहः॥

भृगूणामङ्गिरसां तपसा तप्यस्वेति प्रदक्षिणमङ्गारैः पर्यूह्य वसूनां पवित्रमसीति तस्यां प्रागग्रं शाखापवित्र-मत्यादधाति। ३।

प्रदक्षिणवचनमविस्मरणाय॥

उदक् प्रातः। ४।

प्रातर्दोह उदगग्रमत्यादधाति॥

कुम्भीमन्वारभ्य वाचं यच्छति। ५।

मन्त्रादन्यस्याव्याहरणं वाग्यमनं यदि प्रमत्तो व्याहरेदिति लिङ्गात्। आश्वलायनस्त्वाह अन्ययज्ञस्य साधनादापद्येति॥

पवित्रं वा धारयन्नास्ते। ६।

कुम्भ्यन्वारम्भेणेदं विकल्पते। कुम्भ्या उपरि पवित्रं धारयन्वाग्यत आस्त इति॥

अदित्यै रास्नासीत्यभिधानीमादत्ते। ७।

इयं दोहचेष्टा दोग्धृकर्तृका सामर्थ्यात्॥

त्रयस्त्रिंशो ऽसि तन्तूनां पवित्रेण सहागहि। शिवेयं रज्जुरभिधान्यघ्नियामुपसेवतामित्यादीयमानामभिमन्त्रयते यजमानः। ८।

गतः॥

पूषासीति वत्समभिदधाति। ९।

अभिदधाति बध्नाति। अत्र निदानाभ्यां गोः पादौ च बध्नाति॥

उपसृष्टां मे प्रब्रूतादिति संप्रेष्यति। १०।

उपसृष्टां उपगतवत्सां मे प्रब्रूहीति दोग्धारं प्रेष्यत्यध्वर्युः॥

उपसृजामीत्यामन्त्रयते। अयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीरिति वत्समुपसृजति। ११।

आमन्त्रयते ऽध्वर्युं दोग्धा तत उपसृजत्यर्धर्चेन॥

गां चोपसृष्टां विहारं चान्तरेण मा संचारिष्टेति संप्रेष्यति। १२।

जनानध्वर्युः॥

यद्युपसृष्टां व्यवेयात्सांनाय्यं मा विलोपीति ब्रूयात्। १३।

यदि कश्चिदन्तरा गच्छेत्तत्र प्रायश्चित्तार्थमेतद्यजुर्जपेत्॥

दर्शपूर्णमासौ



उपसीदामीत्यामन्त्रयते । अयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः । ऊर्जं पयः पिन्वमाना घृतं च जीवन्तीरुप वः सदेयमिति दोग्धोपसीदति । १४ ।

दोहयाजमानार्थं यजमानमामन्त्रयते तत उपसीदति ॥

न शूद्रो दुह्यादुह्याद्वा । १५ ।

शूद्र एव न दुह्यादित्यादि ब्राह्मणे तस्य निषेधादनुज्ञानाच्चेति । शूद्रस्यापि दोग्धुर्मन्त्रा भवन्तीति वचनात् ॥

दारुपात्रे दोग्धि । १६ ।

गतः ॥

उपसृष्टां दुह्यमानां धाराघोषं च यजमानोऽनुमन्त्रयते ॥ अयक्ष्मा वः प्रजया संसृजामीत्युपसृष्टाम् । द्यौश्चेमं यज्ञं पृथिवी च संदुहाताम् । धाता सोमेन सह वातेन वायुः । यजमानाय द्रविणं दधात्विति दुह्यमानाम् । १७ ।

इति द्वादशी कण्डिका ।

उत्सं दुहन्ति कलशं चतुर्बिलमिडां देवीं मधुमतीं सुवर्विदम् । तदिन्द्राग्नी जिन्वतं सूनृतावत्तद्यजमानममृतत्वे दधात्विति धाराघोषम् । १ ।

द्विरुपस्पृष्टादिग्रहणं वैचित्र्यार्थम् ॥

दुग्ध्वा हरति । २ ।

हरत्यध्वर्यवे दोग्धा ॥

तं पृच्छति कामधुक्षः प्र णो ब्रूहीन्द्राय हविरिन्द्रियमिति । ३ ।

तं दोग्धारमध्वर्युः पृच्छति कां गां दुग्धवानसीति ॥

अमूमिति निर्दिशति । यस्यां देवानां मनुष्याणां पयो हितमिति प्रत्याह । ४ ।

स च दुग्धां गां नाम्ना निर्दिशन्नेवं प्रत्याह ॥

सा विश्वायुरित्यनुमन्त्रयते । ५ ।

निर्दिष्टां गामध्वर्युः ॥

देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुपुवेति कुम्भ्यां तिरः पवित्रमासिञ्चति । ६ ।

तिरो ऽन्तर्धौ । आसिञ्चति पय आदायानयत्यध्वर्युः ॥

हुत स्तोको हुतो द्रप्स इति विप्रुषो ऽनुमन्त्रयते । ७ ।

गतः ॥

एवं द्वितीयां तृतीयां च दोहयति । ८ ।

रज्ज्वादानस्य सर्वार्थत्वाद्दत्ताभिधानाद्यावर्तते ॥

सा विश्वव्यचा इति द्वितीयामनुमन्त्रयते। सा विश्वकर्मेति तृतीयाम्। ९।

गतः॥

तिस्रो दोहयित्वा बहु दुग्धीन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः। वत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पतामिति त्रिर्वाचं विसृज्यानन्वारभ्य तूष्णीमुत्तरा दोहयित्वा दोहने ऽप आनीय संपृच्यध्वमृतावरीरिति कुम्भ्यां संक्षालनमानीयाविष्यन्दयन्सुशृतं करोति।१०।

बहु दुग्धीति संप्रैषं त्रिरुक्त्वा ततः परं वाङ्नियमान्निवर्तेत इत्यर्थः। अनन्वारभ्य कुम्भीमिति शेषः॥ बौधायनस्त्वत्रानुग्रहमाह दुग्धं लभमानस्य। वत्सापाकरणप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः। आसेचनप्रभृतीनिति शालीकिरिति॥

दृंह गा दृंह गोपतिं मा वो यज्ञपती रिषदिति वर्त्म कुर्वन्प्रागुद्वासयत्युदक् प्रागुदग्वा। ११।

वर्त्म कुर्वन्कर्षन्॥

एकस्या द्वयोस्तिसृणां वैकाहे द्व्यहे त्र्यहे वा पुरस्तादुपवसथादातञ्चनार्थं दोहयित्वा संततमभिदुहन्त्योपवसथात्। १२।

संततं सायंप्रातरविच्छेदः। अभिदोहः उपरिदोहः। प्रथमं महत्यां कुम्भ्यां दोहयित्वा तस्यामेव कालेकाले दुहन्तीति यावत्॥

तेन शीतबुध्नमातनक्ति। १३।

शीतमनुष्णं कुम्भीपृष्ठं यस्य तच्छीतबुध्नम्॥

सोमेन त्वातनच्मीन्द्राय दधीति दध्ना। १४।

पयस्तेन दध्नातनक्ति॥

यज्ञस्य संततिरसि यज्ञस्य त्वा संततिमनुसंतनोमी-त्यग्निहोत्रोच्छेषणमन्ववधायायं पयः सोमं कृत्वा स्वां योनिमपिगच्छतु। पर्णवल्कः पवित्रं सौम्यः सोमाद्धि निर्मित इति परिवासनशकलमन्ववदधाति। १५।

द्वितीयमन्त्रस्य पलाशलिङ्गत्वाच्छम्यां निवृत्तिः पूर्ववत्॥ अथ प्रथमा-तञ्चनद्रव्यस्य दध्नो विकल्पानाह॥

इति त्रयोदशी कण्डिका।

---

ओषधयः पूतिकाः क्वलास्तण्डुलाः पर्णवल्का इत्या-तञ्चनविकल्पाः। १।

ओषधयो व्रीह्यादयः। पूतिका लताविशेषाः। क्वला बदरीफलानि। पर्णवल्काः पलाशशकलानि॥ अथ द्वितीयातञ्चनद्रव्यस्योच्छेषणस्य नाशादौ प्रतिनिधिमाह॥

उच्छेषणाभावे तण्डुलैरातञ्च्यात्तण्डुलाभाव ओष-धीभिः। २।

दर्शपूर्णमासौ



असत्युच्छेषणे न तत्पुनरागमयितव्यं न च लोपः कर्मणः। अपि तु तण्डुलैरातञ्च्यात्तदभावे व्रीह्यादिभिरित्यर्थः॥ एतेन सौमिके च पयस्यादावपि द्वितीयातञ्चनं व्याख्यातम्॥

आपो हविःषु जागृत यथा देवेषु जाग्रथ। एवमस्मिन्यज्ञे यजमानाय जागृतेत्ययस्पात्रे दारुपात्रे वाप आनीयादस्तमसि विष्णवे त्वा यज्ञायापि दधाम्यहम्। अद्भिररिक्तेन पात्रेण याः पूताः परिशेरत इति तेनापिदधाति॥ अमृन्मयं देवपात्रं यज्ञस्यायुषि प्रयुज्यताम्। तिरः पवित्रमतिनीता आपो धारय मातिगुरिति यजमानो जपति। ३।

गतौ॥

यदि मृन्मयेनापिदध्यात्तृणं काष्ठं वापिधानेऽनुप्रविध्येत्। ४।

मृन्मयेन वापिदध्यात्। तदा तस्मिंस्तृणं काष्ठं वा क्षिपेदित्यर्थः। तत्रामृन्मयमिति मन्त्रो लिङ्गविरोधान्निवर्तते॥

विष्णो हव्यं रक्षस्वेत्यनधो निदधाति। ५।

गतः॥

इमौ पर्णं च दर्भं च देवानां हव्यशोधनौ। प्रातर्वेषाय गोपाय विष्णो हव्यं हि रक्षसीति प्रज्ञातं शाखापवित्रं निदधाति। ६।

शाखापवित्रनिधानं प्रातर्दोहार्थं तत्रोपयोगात्प्रातर्वैषायेति लिङ्गाच्च ॥ तेन तद्विकारे पशुपयस्यादौ सद्यस्काले ऽपि भवत्येव । न च भवति केवले दध्नि ॥

तयैव शाखया दर्भैर्वा सायंदोहवत्प्रातर्दोहाय वत्सानपाकरोति । ७ ।

तयैवेति शाखान्तरस्य निरासः पवित्रस्य चेत्येके । गवां प्रस्थापनादिलर्थलोपान्निवृत्तं रात्रावसंचारात् ॥

उपधाय कपालानि सायंदोहवत्प्रातर्दोहं दोहयति । आतञ्चनापिधाने निधानं च निवर्तते । नासोमयाजी संनयेत्संनयेद्वा । ८ ।

गताः ॥ अथ सांनाय्यदेवताव्यवस्थां ब्राह्मणोक्तां दर्शयति ॥

नागतश्रीर्महेन्द्रं यजेत । त्रयो वै गतश्रिय इत्युक्तम् । ९ ।

एवंप्रतीके ब्राह्मणे यदुक्तं तन्नत्रैवानुसंधातव्यम् । न पृथगभिधास्यत इति भावः । तत्र नागतश्रीर्महेन्द्रं यजेतेति प्रकृत्य गतश्रीशब्दार्थस्तावद्व्याख्यातः ॥ त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राजन्य इति । तत्र शुश्रुवान्वेदतदर्थयोः श्रुतवान् । ग्रामणीर्वैश्यपरिवृढः । राजन्यः क्षत्रियः ॥ अत्र केचिच्छुश्रुवच्छब्दार्थे विवदन्ते वदन्ति च शुश्रुवानिति त्रिवेदविदेवोच्यते नैकवेदवित् । गतश्रीशब्दव्युत्पत्तिवशाद्गता प्राप्ता श्रीर्येन स गतश्रीः । श्रीश्च त्रिवेदविदुषामृचः सामानि

दर्शपूर्णमासौ



यजूंषि सा हि श्रीरमृता सतामिति श्रुतेरिति ॥ तत्र विश्रब्ध-व्यम् । धृतश्रुवच्छन्दव्युत्पत्त्या धृतश्रुवांसो वै कवय इति श्रुतेरेकवे-दविदो ऽपि गतश्रीत्वाविरोधाच्च । नहि सा हि श्रीरमृता सता-मित्यत्रर्गादिसमुच्चयः प्रमाणवान्येन विरोधः स्यादेकैकस्यापि वेदस्य श्रीत्वोपपत्तेः । नहि गोहिरण्यव्रीह्यो नृणां धनमित्युक्ते तेष्वेकैक-वतां धनवत्ता न गम्यते । अतो गतश्रीशब्दाविरोधात् धृतश्रुव-च्छब्दाविरोधाच्च ॥ यथोक्त एव धृतश्रुवान्गतश्रीशब्दार्थः एवं नित्यो गतश्रियो भ्रियत इत्यादावपि द्रष्टव्यम् ॥ अथ तेषां महेन्द्रो देवते-त्यस्यार्थः । तेषां गतश्रियां नित्यं महेन्द्रो देवता ततो ऽन्येषां सर्वेषां नित्यमिन्द्रः । यदि ते ऽपि महेन्द्रं यियक्षेरंस्तदा सांना-य्योपक्रमप्रभृति संवत्सरमिन्द्रमिष्ट्वा ततो व्रातपतीमिष्टिं निरूप्य तत ऊर्ध्वं कामं महेन्द्रं यजेरन्निति ॥ अयं चार्थः कल्पान्तरेषु व्यक्तो ऽनुसंधेयः । यथा धृतश्रुवदादीनां नित्यं महेन्द्रयागमुक्त्वाह भार-द्वाजः अथेतर इन्द्रयाजिनः स य इन्द्रयाजी महेन्द्रं यियक्षेत संवत्सरमिन्द्रमिष्ट्वेत्यादि ॥ अथ गतश्रियामपि मध्ये केषांचिच्छाखा-न्तरोक्तं विशेषमाह ॥

**और्वो गौतमो भारद्वाजस्ते ऽनन्तरं सोमेज्याया महेन्द्रं यजेरन् । १० ।**

ये ऽमी त्रयस्ते सोमयागात्प्रभृति नित्यं महेन्द्रं यजेरन्प्राक् सोमात्तु नित्यमिन्द्रम् । न तु तेषां संवत्सरमिन्द्रयागादिनियमः । स चायं कल्पः पूर्वोक्तेन वा विकल्पते शाखान्तरत्वात् । व्यवस्थितो

ऽयं विकल्प औवोदीनामित्यन्ये॥ अथेमं विधिं सर्वेषां गतश्रिया- मगतश्रियां च विकल्पयति॥

योवा कश्चित्।११।

अनन्तरमित्यादेरनुषङ्गो यजेतेति विपरिणामश्च॥

ततः संप्रेष्यति परिस्तृणीत परिधत्ताग्निं परिहितो ऽग्निर्यजमानं भुनक्तु। अपां रस ओषधीनां सुवर्णो निष्का इमे यजमानस्य सन्तु कामदुघा अमुत्रामुष्मिं- ल्लोक इति।१२।

अध्वर्योरन्यस्य परिस्तरितुरवचनात्स्वयमात्मानमनुजानीयादितिवदा- त्मन एव संस्कारार्थः संप्रैषः। तेनाध्वर्युरेव परिस्तृणाति। संप्रैष- मन्त्रस्तत्रैरेकश्रुत्या सकृद्भवति॥

परिस्तरणीमेतामेके समामनन्ति।१३।

अस्मिंस्तु कल्पे मन्त्रः करणत्वादुपांशु चातुःस्वर्येण प्रत्यग्नि भवति॥

उदगग्रैः प्रागग्रैश्च दर्भैरग्नीन्परिस्तृणाति।१४।

दर्भैः परिस्तरणीयैराधानक्रमेण परिस्तृणाति सर्वान्। द्वयोरेव तु परिस्तरणमुक्तं ब्राह्मणे यथोपस्तीर्थः पूर्वस्याग्निरपरस्येति श्रुतेः॥

उदगग्राः पश्चात्पुरस्ताच्च।१५।

तेषु पश्चात्पुरस्ताच्च ये दर्भास्त उदगग्रा भवन्ति। तत्र दक्षिणः पक्ष उपरिष्टाद्भवत्यधस्तादुत्तर इति भारद्वाजः॥

दर्शपूर्णमासौ



**एतत्कृत्वोपवसति। १६।**

यदेतदग्न्यन्वाधानादि परिस्तरणान्तं कर्मोक्तं एतावति कृते यजमान उपवसति। अथवैतत्परिस्तरणं कृत्वेत्यर्थः॥ श्वोयागार्थो ऽग्निसमीपे नियमविशिष्टो वास उपवासः। नियमाश्च वक्ष्यन्ते। एवं ताव-द्यथाब्राह्मणमुपवासप्रकार उक्तः॥ तत्रैवेदानीं शाखान्तरीयं विधिं दर्शयति॥

**अग्न्यन्वाधानं वत्सापाकरणमिध्माबर्हिर्वेदो वेदिः। प्रागुत्तरात्परिग्राहात्कृत्वा श्वोभूत आप्यलेपं निनीयो-त्तरं परिगृह्णीयात्। परिस्तरणं च। पूर्वेद्युरमावा-स्यायां पौर्णमास्यां त्वन्वाधानपरिस्तरणोपवासाः।१७।**

वत्सापाकरणशब्देनात्र सर्वपूर्वोक्तदोहतन्त्रलक्षणा। इध्माबर्हिरिति बर्हिःप्राथम्ये ऽपीध्मशब्दस्याजाद्यदन्तत्वात्पूर्वनिपातः। वेदो वेदि-र्वेदानन्तरं वेदिकर्म तच्चोत्तरपरिग्रहावधि कृत्वा विरम्य शेषं श्वोभूत आप्यलेपनिनयनानन्तरं कुर्यात्। तत उत्तरकाले परिस्तरणं चेति॥ एतानि कर्माण्यमावास्यायां पूर्वेद्युर्भवन्ति। पौर्णमास्यां त्वन्वाधानादि त्रयमेव पूर्वेद्युः सर्वमन्यदिध्माबर्हिराद्युत्तरेद्युः॥ नन्वेतौ कल्पौ किमिति वैकल्पिकौ व्याख्यायेते। यावता उक्तानामेव कर्मणां विषयव्यवस्थयेमावेव नित्यौ भवितुं युक्तौ विकल्पलिङ्गाभावात्। नैवं युक्तौ। कुतः। पूर्वत्र तावद्वेदेरनुक्तत्वात् तदनुक्रमानुपपत्तेः पुरा बर्हिष आहर्तोरिति लिङ्गविरोधात् तथा मन्त्रब्राह्मणयो-रविशेषेणोत्तरेद्युराप्यलेपनिनयनानन्तरमाम्नातक्रमाया वेदेरमावास्या-

यां पूर्वेद्युःप्रतिकर्षविरोधात् पूर्वेद्युरिध्माबर्हिः करोतीत्यविशेषश्रुतयोरिध्माबर्हिषोः पौर्णमास्यामुत्तरेद्युरुत्कर्षविरोधाच्च तथा कल्पान्तरदृष्टिर्नियमविकल्पाभ्यां चतुर्णामपि कल्पानामुपन्यासाच्च। तस्माद्यथोक्तैव व्याख्या साधीयसी॥

## सद्यो वा सद्यस्कालायां सर्वं क्रियते। १८।

आनन्तर्यादत्र पौर्णमास्यामित्येव संबध्यते नामावास्यायामिति। न चाधिकारादुभयसंबन्धः एकवचनात् तथा सद्यस्कालां पौर्णमासीमिति भारद्वाजादिभिर्व्येकवचनाच्च॥ तत्र सद्यस्कालानुवादेन शाखान्तरीयसद्यस्कालविधिः सूचितः। स एव पुनर्व्याक्रियत इति तदयमर्थः। सद्यस्कालां पौर्णमासीं कुर्वता सद्यः समाने ऽहनि प्रधानस्य काले यजनीये ऽहनि सर्वमग्न्यन्वाधानादि क्रियते न किंचिदपि पूर्वेद्युरिति। केचित्तु पूर्वाह्णे पूर्यमाणचन्द्रां प्रतिपदं सद्यस्कालेत्याचक्षते। तत्र मृग्यं प्रमाणम्॥

इति चतुर्दशी कण्डिका।

इति चतुर्थः पटलः॥

---

## उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमयति प्रागुदयादमावास्यायाः। १।

अङ्गसमुदायस्तन्त्रम्। तत्प्रक्रमयति यजमानो ऽध्वर्युणा। स्वार्थिको वा णिच् द्रष्टव्यः गत्यर्थाश्चेति चुरादिषु पाठात्॥ तत्रोदितहोमे

दर्शपूर्णमासौ



अपि प्रागुदयात्प्रक्रमो अमावास्यायाः। दृश्यते तु तन्त्रमध्ये अपि स्वकाले अग्निहोत्रम्। एवमन्यत्र विप्रक्रान्त इति लिङ्गात्॥

**चत्वार ऋत्विजः। २।**

यजमानेन परस्वरेण यागसमासार्थं वचनं ब्राह्मणानुकरणार्थं वा॥

**पूर्ववदग्नीन्परिस्तृणाति यद्यपरिस्तीर्णा भवन्ति। ३।**

यद्यपरिस्तीर्णा भवन्तीत्यनेन परिस्तरणस्य कालविकल्पः सूच्यते अर्थान्तरस्याग्निरूपणाङ्गारत्वाजादिभिर्नैव परिस्तरणवचनाच्च॥

**कर्मणे वां देवेभ्यः शकेयमिति हस्ताववनिज्य यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्येति गार्हपत्यात्प्रक्रम्य संततामुलपराजीं स्तृणात्याहवनीयात्तूष्णीं दक्षिणामुत्तरां च। ४।**

स्तुम्बं बर्हिस्तृणमुलप इत्याचक्षत उशीरतृणमित्यन्ये॥

**दक्षिणेनाहवनीयं ब्रह्मयजमानयोरासने प्रकल्पयति पूर्वं ब्रह्मणोऽपरं यजमानस्य। ५।**

गतः॥

**उत्तरेण गार्हपत्याहवनीयौ दर्भान्संस्तीर्य द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति दक्षिणापराणि दक्षिणपूर्वाणि। ६।**

तत्र यथास्थेव प्रयुनक्तीति कल्पान्तराणि॥

**स्फ्यश्च कपालानि चेति यथासमाम्नातमपराणि**

**प्रयुज्य स्रुवं जुहूमुपभृतं ध्रुवां वेदं पात्रीमाज्यस्थालीं प्राशित्रहरणमिडापात्रं प्रणीताप्रणयनमिति पूर्वाणि ।७।**

एवमत्र संख्येयोपदेशादेव सिद्धे पूर्वत्र दशत्वसंख्यावचनम् । विकृतिष्वनयोर्दशकयोर्मध्ये पात्रविवृद्धौ सत्यां तैः सहापि दशत्वसंपत्तिरेव यथा स्यान्नाधिका संख्येति ॥ तत्र च लिङ्गं कपालभूयस्त्वे ऽपि एतानि वै दश यज्ञायुधानीति दशत्ववचनम् । तेनाग्रयणादावुलूखलादीनां नानात्वे ऽपि कपालवत्समानकार्याणामनेकेषामप्येकैकवत्करणे न द्वन्द्वप्रयोगः । एवं पूर्वदशके ऽपि पश्वादिषु द्वितीयां जुहूं द्वितीयामुपभृतमित्यादौ जुह्वादीनां द्रष्टव्यम् ॥

**तान्युत्तरेणावशिष्टानि । ८ ।**

द्वन्द्वं न्यञ्चि प्रयुनक्तीत्यन्वयः । तान्येवावशिष्टानि दर्शयति ॥

**अन्वाहार्यस्थालीमश्मानमुपवेषं प्रातर्दोहपात्राणीति । ९ ।**

उपवेषमसंनयतः प्रातर्दोहपात्राणीत्येव सिद्धत्वात् । इतिः प्रकारवचनः । एवंप्रकाराणि वेदयोक्त्रवेदाग्रादीनि यैरर्थो भवतीत्यर्थः ॥

**प्रणीताप्रणयनं पात्रसंसादनात्पूर्वमेके समामनन्ति । खादिरः स्रुवः पर्णमयी जुहूराश्वत्थ्युपभृद्वैकङ्कती ध्रुवा । १० ।**

गताः ॥

**एतेषां वा वृक्षाणामेकस्य स्रुचः कारयेत् । ११ ।**

दर्शपूर्णमासौ



सर्वेषामलाभे तेषामन्यतमेनापि सर्वाः स्रुचः कारयेत्। स्रुग्ग्रहणेन स्रुवो ऽपि गृह्यते स्रुचः संमार्ष्टि स्रुवमग्र इति लिङ्गात् एतावद्वदतामिति लिङ्गाच्च॥

**बाहुमात्र्यो ऽरत्निमात्र्यो वाग्राग्रास्त्वक्तोबिला हंसमुख्यः। १२।**

अग्रभागे ऽग्रं मुखं यासां ता अग्राग्राः। त्वग्भागे बिलं यासां तास्त्वक्तोबिलाः। हंसमुखमिव मुखं यासां ता हंसमुख्यः। कर्तव्या इति शेषः॥ वायसपुच्छा हंसमुखप्रसेचना इति भारद्वाजः। तथाङ्गुष्ठपर्वमात्रबिलः स्रुवो भवत्यर्धप्रादेशमात्रबिलाः स्रुच इति च॥

**स्फ्यः शम्या प्राशित्रहरणमिति खादिराणि। १३।**

स्फ्यो ऽस्याकृतिरादर्शाकृति प्राशित्रहरणं चमसाकृति वेति कात्यायनः। शम्याकृतिः समाख्यया व्याख्याता। बाहुमात्राः परिधयः शम्या चेति भारद्वाजः। तथाङ्गुल्यधिकारे चत्वारो ऽष्टकाः शम्येति कात्यायनः॥

**वारणान्यहोमार्थानि भवन्ति। १४।**

गतः॥

इति पञ्चदशी कण्डिका।

अथ पूर्ववत्पवित्रे करोति यदि न संनयति ।१।

अत्र पात्रप्रयोगान्ते ॥

संनयतस्तु ते विभवतः ।२।

संनयतस्तु ये सायंदोहार्थे ते एवाद्यापि कर्मणि प्रभवतः ॥

वानस्पत्योऽसि देवेभ्यः शुन्धस्वेति प्रणीताप्रणयनं चमसमद्भिः परिक्षालयति तूष्णीं कांसं मृन्मयं च । कांसेन प्रणयेद्ब्रह्मवर्चसकामस्य मृन्मयेन प्रतिष्ठाकामस्य गोदोहनेन पशुकामस्य । अपरेण गार्हपत्यं पवित्रान्तर्हितं चमसं निधाय तस्मिन्को वो गृह्णाति स वो गृह्णातु कस्मै वो गृह्णामि तस्मै वो गृह्णामि पोषाय व इत्यप आनयति ।३।

मताः ॥

अपो गृह्णन्प्रदीप्यांश्च पृथिवीं मनसा ध्यायति ।४।

मनसेति वचनान्न वाचा कीर्तयति ॥ ध्यानं चात्र पृथिव्याद्यो प्रदीप्यामीति विशिष्टप्रकारं केचिदिच्छन्ति । न तदादृत्यम् । यत्र हि विशिष्टध्यानमाचार्यो मन्यते तत्र स्वयं विशेषं दर्शयति यथा वायविता ते मातेति वायुं मनसा ध्यायेत् । यदत्रस्कन्नमपि हव्यं तदिहास्त्विति मनसा ध्यायति । स्रुचा त्वार्धयामीति देवं मनसा ध्यायमित्यादि । अतः केवलेषु ध्यानविधिषु न कश्चिद्विशेष इति ॥

दर्शपूर्णमासौ



उपबिलं चमसं पूरयित्वा प्रोक्षणीवदुत्पूयाभिमन्त्र्य ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति संप्रेष्यति । ५ ।

उपबिलमा बिलसमीपात् ॥

सर्वत्र प्रसव उक्ते करोति । ६ ।

प्रसवो ऽनुज्ञा ॥

प्रणीयमानासु वाचं यच्छतो ऽध्वर्युर्यजमानश्चा हविष्कृतः । ७ ।

वाग्यमनं व्याख्यातम् ॥

को वः प्रणयति स वः प्रणयत्वपो देवीः प्रणयानि यज्ञं संतादयन्तु नः । दूरं मदन्तीर्घृतपृष्ठा उदाकुः सहस्रपोषं यजमाने न्यञ्चतीरिति समं प्राणैर्धारयमाणः स्फ्येनोपसंगृह्याविषिञ्चन्हरति । ८ ।

समं प्राणैर्नासिकया संमितं स्फ्येनोपसंगृह्य स्फ्येन चमसमुपगृह्य ॥

पृथिवीं च मनसा ध्यायति । ९ ।

व्याख्यातः पूर्वेण ॥

को वो युनक्ति स वो युनक्त्वित्युत्तरेणाहवनीयमसंस्पृष्टा दर्भेषु सादयति । १० ।

असंस्पृष्टा द्रव्यान्तरेण ॥

नेङ्गयन्ति नेलयन्त्या संस्थातोर्दर्भैरभिच्छाद्य । ११ ।

ता दर्भैरभिच्छाद्या संस्थानान्नेङ्गयन्ति न कम्पयन्ति । नेलयन्ति नान्यत्र प्रेरयन्ति ॥ ता आहृताः पिष्टसंयवनार्थाः तत्रासां विनियोगात् । दृष्टार्था भविष्यन्ति न त्वदृष्टार्थाः दृष्टे संभवत्यदृष्टकल्पनानवकाशात् पशूपसदादिषु संयवनाभावेन द्वारा दर्शनाच्च । यथा तत्रतत्राह पवित्रे कृत्वा यजमान वाचं यच्छेति संप्रेष्यति वाग्यतः पात्राणि संमृशतीति च । इष्टिविधे तु पशौ संयवनाभावे ऽपि वचनादित्यविरोधः । तत्रापि पशुपुरोडाशार्था भविष्यन्ति । तस्मात्पुरोडाशतन्त्र एव प्रणीता नान्यत्रेति सिद्धं भवति ॥ अन्यत्तु मतं ब्राह्मणे तासां रक्षःशान्त्यादिद्वारा यज्ञरक्षार्थत्वेन स्तवनात् पाकयज्ञेष्वपि तद्विधानाच्च ॥ अदृष्टार्था एव सत्यः प्रभुत्वात्संयवनायापि स्मर्यन्ते तस्मादनिवृत्तिः सर्वत्रेति ॥ तदुक्तं भारद्वाजेन सर्वसंस्थासु वा प्रणीता इति ॥

संविशन्तां दैवीर्विशः पात्राणि देवयज्याया इति सपवित्रेण पाणिना पात्राणि संमृश्य । १२ ।

इति षोडशी कण्डिका ।

वानस्पत्यासि दक्षाय त्वेत्यग्निहोत्रहवणीमादत्ते । वेषाय त्वेति शूर्पम् । १ ।

समानदेशानां बहूनामपि सकृत्संमर्शनमन्त्रो बह्वभिधायित्वात् । देशभेदे त्वावर्तते ॥ तथा च भारद्वाजः मन्त्रव्यवाये मन्त्राभ्यासो

दर्शपूर्णमासौ



द्रव्यपृथक्त्वे ऽर्थपृथक्त्वे देशपृथक्त्वे चेति ॥ तस्य चादितश्चतुर्णां पदानां पात्राभिधायित्वाद्द्वित्वे पात्रैकत्वद्वित्वयोर्यथार्थमूहः ॥

प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्य यजमान हविर्निर्वप्स्यामीत्यामन्त्रयते । २ ।

यजमानमिति शेषः ॥

प्रवसत्यग्ने हविर्निर्वप्स्यामीति । ३ ।

प्रवसति यजमाने ऽग्निमामन्त्रयते ॥

उर्वन्तरिक्षमन्विहीति शकटायाभिप्रव्रजति । ४ ।

शकटाय शकटं प्रति ॥

अपरेण गार्हपत्यं प्रागीषमुदगीषं वा नद्धयुगं शकटमवस्थितं भवति व्रीहिमद्यवमद्वा । ५ ।

मुक्तानुडुत्कमपि नद्धयुगमेवावतिष्ठते ॥

धूरसीति दक्षिणां युगधुरमभिमृशत्युत्तरां वा । ६ ।

धूरिति युगच्छिद्रयोरन्तरालमाख्यायते। ते द्वे भवतो युगस्य तयोरन्यतरामभिमृशति नोभयम्। यस्त्वत्र कैश्चिद्दर्शपूर्णमासवद्धुरावभिमृश्येति लिङ्गविरोधश्चोदितः स तु तत्र मन्त्रमात्रातिदेशार्थतया तत्रैव परिहरिष्यते ॥

त्वं देवानामसि सस्नितममित्युत्तरामीषामालभ्य जपति।७।

दर्शपूर्णमासौ



ईषे युगशकटयोः संबन्धिनी दारुणी ॥

विष्णुस्त्वाक्रंस्तेति सव्ये पाणौ दक्षिणं पादमत्याधाया-ध्रुतमसि हविर्धानमित्यारोहति ।८।

गतः ॥

उरु वातायेति परीणाहमपच्छाद्य मित्रस्य त्वा चक्षु-षा प्रेक्ष इति पुरोडाशीयान्प्रेक्षते ।९।

परितो नीते नद्धः कटः परीणाहः । अपच्छाद्य अपोद्धृत्य । पुरोडाशीयास्तदर्था व्रीहियवाः ॥

निरस्तं रक्षो निरस्तो ऽघशंस इति यदन्यत्पुरोडा-शीयेभ्यस्तन्निरस्योर्जाय वः पयो मयि धेहीत्यभिमन्त्र्य दशहोतारं व्याख्याय शूर्पे पवित्रे निधाय तस्मिन्नग्नि-होत्रहवण्या हवींषि निर्वपति तया वा पवित्रवत्या ।१०।

व्याख्यानमिव जपो ऽभिप्रेतः यच्च जपा याजमाना इति लिङ्गात् । देवतार्थत्वेन पृथक्करणं निर्वापः । तया वा पवित्रवत्येति तस्यां पवि-त्रनिधानविकल्पः ॥

व्रीहीन्यवान्वा ।११।

हवींषि निर्वपतीत्यन्वयः ॥ यद्यपि प्राग्व्रीहिमयमिति एकहवि-ष्ट्वेन व्रीहियवयोर्वैविध्यं सूचितं तथापि तयोस्तुल्यतानुग्रहणार्थः पुनरुपन्यासः ॥

दर्शपूर्णमासौ



यच्छन्तां पञ्चेति मुष्टिं गृहीत्वा मुष्टिं मुष्टिमोप्य देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टं निर्वपामीति त्रिर्यजुषा तूष्णीं चतुर्थम्। १२।

निर्वपतीत्यन्वयः ॥

इति सप्तदशी कण्डिका।

---

एवमुत्तरं यथादेवतमग्नीषोमाभ्यामिति पौर्णमास्याम्। इन्द्राग्निभ्यामित्यमावास्यायाम्। १।

पूर्वेण सह निर्वाप उत्तरत्वविभागवचनात्। संनयद्योमयाजिनो ऐन्द्राग्नाग्नीषोमीयनिवृत्तिर्यथादेवतमिति वचनात्। यथादेवतमित्यनेनैव सिद्धे पुनरग्नीषोमाभ्यामिति वचनं क्रमप्राप्तमन्त्रविनियोगार्थं इन्द्राग्निभ्यामिति तु शाखान्तरमन्त्रप्रदर्शनार्थम्। अथवा यथादेवतमित्यस्यैव व्याकरणार्थमुभयमित्यलमतिक्लेशेन ॥ तत्रासोमयाजिनः सांनाय्याग्नीषोमीयविकारानपि नेच्छन्ति चोदकप्राप्तानेषामपि प्रकृतिधर्मः सोमोत्तरकालभावित्वमिति। यथाहुर्मीमांसकाः सांनाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात्प्रकृतिवदिति। यत्तु वचनाद्भविष्यति ॥

चतुरो मुष्टीन्निरुप्य निरुप्तेभ्योऽप्येदं देवानामिति निरुप्तानभिमृशति। इदमु नः सहेत्यवशिष्टान्। २।

पुनश्चतुर्मुष्टिग्रहणात्प्रतिदेवतमन्वावापः। निरुप्येति निरुप्तैरेव सहै=

त्यर्थः ॥ अथापरा व्याख्या । कैश्चित्कल्पकारैरुक्तं चतुरो मुष्टीन्निरुप्यान्वोप्यैवमुत्तरं निर्वपतीति । तन्निरासायोच्यते चतुरो मुष्टीन्निरुप्य ततः सर्वेष्वपि हविःषु निरुप्तेष्वन्वोप्य तत इदं देवानामित्यभिमृशतीति ॥ चतुरो मुष्टीन्निरुप्येत्यनेन यत्र चतुर्मुष्टिनिर्वापस्तत्रैवान्वावापो नान्यत्र । तस्मादातिथ्यायामन्वावापो न विद्यत इत्युक्तं भवति । तथा च सवनीयेष्वनुवदिष्यति निरुप्तेष्वन्वोप्येदं देवानामित्येतदादि कर्म प्रतिपद्यत इति ॥

स्फात्यै त्वा नारात्या इति निरुप्तानेवाभिमन्त्र्येदमहं निर्वरुणस्य पाशादित्युपनिष्क्रम्य स्वरभिव्यख्यमिति प्राङ् प्रेक्षते । ३ ।

निरुप्तानेव नावशिष्टान् । उपनिष्क्रम्य किंचिच्चलित्वा ॥

सुवरभिविख्येषमिति सर्वं विहारमनुवीक्षते । वैश्वानरं ज्योतिरित्याहवनीयं स्वाहा द्यावापृथिवीभ्यामिति स्कन्नानभिमन्त्र्य दृंहन्तां दुर्या द्यावापृथिव्योरिति प्रत्यवरोह्योर्वन्तरिक्षमन्विहीति हरति । ४ ।

गतः ॥

अदित्यास्त्वोपस्थे सादयामीत्यपरेण गार्हपत्यं यथादेवतमुपसादयति । ५ ।

यथादेवतमिति वचनादुत्तरापि देवतानुक्रमणीया । तत्र तु मन्त्रस्थमाख्यातमयोग्यान्वयत्वाद्विपरिणतमन्वीयते यथाग्ने हव्यं रक्षस्वाग्नी-

दर्शपूर्णमासौ



षोमौ हव्यं रक्षेथामिति ॥ वैमृधे तु समानतन्त्रे योग्यान्वयमपि तद्व्यवायान्नानुषज्यत इति न्यायेनालब्धान्वयमिति रक्षस्वेति पुनःप्रयोगः ॥

**आहवनीयं वा यद्याहवनीये श्रपयति । ६ ।**

आहवनीयमपरेणोपसादयतीत्यन्वयः ॥

**यदि पात्र्या निर्वपेद्दक्षिणतः स्फ्यमुपधाय तस्यां सर्वाञ्छकटमन्त्राञ्जपेत् । ७ ।**

यदि पात्र्या इति विकल्पविधिरनुवादसरूपः । पात्र्यां पुरोडाशीयानोप्य तां शकटस्थानस्थामन्वारभ्य मन्त्राञ्जपेत् । सर्वानिति न कस्यचिदर्थलोपाल्लोप इत्यर्थः ॥

इत्यष्टादशी कण्डिका ।

इति पञ्चमः पटलः ॥

---

**सशूकायामग्निहोत्रहवण्यामप आनीय पूर्ववदुत्पूयाभिमन्त्र्य ब्रह्मन्प्रोक्षिष्यामीति ब्रह्माणमामन्त्र्य देवस्य त्वेत्यनुद्रुत्याग्नये वो जुष्टं प्रोक्षामीति यथादेवतं हविस्त्रिः प्रोक्षन्नाग्निमभिप्रोक्षेत् । १ ।**

शूका धान्यपुच्छानि । सकृन्मन्त्रप्रोक्षणे संख्यायुक्तेति न्यायात् त्रिर्यजुषेत्यवचनाच्च ॥ स च सावित्रादिरग्नीषोमाभ्यामित्यन्तः पौर्णमासे। दर्शे तु देवतावशादिकर्तव्यो यथादेवतमिति वचनात्। केचित्तु

वो जुष्टं प्रोक्षामीत्यस्य त्रिपदस्य प्रतिदैवतमनुषङ्गमिच्छन्ति । तद्=युक्तं सावित्रप्रसवादिविशिष्टैकप्रोक्षणाभिधायिनो यथोक्तैकमन्त्रस्य मध्यपठितैरेव निर्वापमन्त्रैर्निराकाङ्क्षत्वात् साकाङ्क्षत्वादितरत्र त्वाचा=नुषङ्गस्य । मन्त्रभेदाभ्युपगमे सावित्रस्याप्यनुषङ्गप्रसङ्गः । किं चाभ=विष्यदप्यनुषङ्गो मन्त्रभेदश्च यदि निर्वापवत् प्रोक्षणमपि पृथग्वि=धानेव क्रियेत । न चैवमिष्यते संहतत्वात्तेषामेकत्वाच्च । वक्ष्यति च यानि विभवन्ति सकृत्तानि क्रियन्त इति । तस्माद्यथोक्तमेव युक्तं मन्त्ररूपम् ॥ तथा च पेठुः कल्पान्तरकाराः यथाग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्याममुष्मा अमुष्मा इति यथादैवतमित्यादि ॥

**यं द्विष्यात्तस्याभिप्रोक्षेत् । २ ।**

अभिप्रोक्षणे यज्ञोपघातप्रायश्चित्तं च वक्ष्यति । अतो न प्रमदित=व्यमिति भावः ॥

**उत्तानानि पात्राणि पर्यावर्त्य शुन्धध्वं दैव्याय कर्मण इति त्रिः प्रोक्ष्य प्रोक्षणीशेषमग्रेण गार्हपत्यं निधाय देवस्य त्वा सवितुः प्रसव इति कृष्णाजिनमादायाव=धूतं रक्षोऽवधूता अरातय इत्युत्करे त्रिरवधूनोत्यूर्ध्व=ग्रीवं बहिष्टाद्विशसनम् । ३ ।**

शुन्धध्वमिति पात्राभिधानाद्विकृतौ यथार्थमूहः । अपामभिधाना=दनूह इति केचित् । तदयुक्तं कर्मणो ऽश्रुतत्वादिति शोधकद्रव्या=भिधायिनः सकर्मकस्य शुन्धतेः सर्वत्र श्रवणात्प्रायः परस्मैपदवर्ज=नाच्च तथा शोध्यद्रव्याभिधायिनः शुन्धतिपदस्याकर्मकस्य विपर्य=

दर्शपूर्णमासौ



याच। यथा आपो अस्मान्मातरः शुन्धन्तु। ता नः शुन्धन्तु शुन्धनीः। शुन्धन्तु शुन्धयः शुचिम्। सर्वा पापानि शुन्धत। पर्णवल्कमुत शुन्धतेत्यादि तथा शुन्धतां लोकः पितृषदनः। शुन्धन्तां पितरः। देवेभ्यः शुन्धध्वं। वानस्पत्यो ऽसि देवेभ्यः शुन्धस्वेत्यादि। तस्माद्यथार्थमूहः॥ समानदेशानां च सहमन्त्रः पूर्ववत्॥ प्रोक्षणीशेषनिधानमभावार्थं वेदिप्रोक्षणार्थम्। अतो ऽबभृथे ऽस्य बर्हिराद्यभावे निवृत्तिः॥ बहिष्टाद्ग्रीवमिति यथावधू-यमानस्य बहिः पृष्ठभागो भवत्यन्तर्लोमभागस्तथेत्यर्थः॥

अदित्यास्त्वगसीत्युत्तरेण गार्हपत्यमुत्करदेशे वा प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति। ४।

गतः॥

पुरस्तात्प्रतीचीं भसदमुपसमस्यति। ५।

भसदं कटिप्रदेशं पुरस्ताद्भागेनाधस्तात्प्रतीचीं गमयित्वानन्तरप्रदेशेन सह द्विगुणितां करोतीत्यर्थः। पुरस्तादिति सिद्धानुवादो ब्राह्मणानुकरणेन॥

अनुत्सृजन्कृष्णाजिनमधिषवणमसीति तस्मिन्नुलूखलमधिवर्तयति। ६।

अधिवर्तयति प्रतिष्ठापयति॥

अनुत्सृजन्नुलूखलमग्नेस्तनूरसीति तस्मिन्हविरावपति त्रिर्यजुषा तूष्णीं चतुर्थम्। ७।

वामेनानुत्सर्गः सामर्थ्यात् ॥

अद्रिरसि वानस्पत्य इति मुसलमादाय हविष्कृदेहीति त्रिरवहन्ति। अनवघ्नन्वा हविष्कृतं ह्वयति। ८।

चातुःस्वर्येणोपांशु सकृच्च मन्त्रः करणमन्त्रत्वे। विपर्ययस्त्वाह्वानार्थत्वे। आह्वानं चात्र देवतारूपस्य हविष्कृतो वेदितव्यं य एव देवानां हविष्कृतस्तान्ह्वयतीति श्रुतेः मानुषस्यैवावहन्तुर्वक्ष्यमानस्याह्वानं संनिधेः ॥ तथा च बौधायनः। हविष्कृदेहीति पर्जन्य एवैष उक्तो भवति। अथाप्युदाहरन्ति हविःसंस्कारिणमेवैतदाहेति ॥

हविष्कृदेहीति ब्राह्मणस्य हविष्कृदागहीति राजन्यस्य हविष्कृदाद्रवेति वैश्यस्य हविष्कृदाधावेति शूद्रस्य। ९।

शूद्रस्येति निषादस्थपत्यर्थम् ॥

प्रथमं वा सर्वेषाम्। १०।

यजुरिति शेषः ॥

अव रक्षो दिवः सपत्नं वध्यासमित्यवहन्ति। ११।

पूर्वं त्रिरवहतमनवहतं वा हविर्यावद्वैतुष्यमध्वर्युरवहन्ति ॥

इत्येकोनविंशी कण्डिका।

दर्शपूर्णमासौ



उच्चैः समाहन्तवा इति संप्रेष्यति। १।

समाहन्तवै समाहन्तव्यम्॥

कुटरुरसि मधुजिह्व इत्याग्नीध्रो ऽश्मानमादायेषमावदोर्जमावदेति दृषदुपले समाहन्ति। २।

दृषच्चोपला च दृषदुपलम्। तस्मिन्समाहन्ति। तत्र तु

द्विर्दृषदि सकृदुपलायां त्रिः संचारयन्नवकृत्वः संपादयति। ३।

सकृदुक्तेन मन्त्रेण द्विर्दृषदि सकृदुपलायां च क्रियासंचारणमेकः संचारणपर्यायः। तस्यैव द्विरावृत्त्या नवकृत्वः समाहननं संपादयति। यत्र पर्यायसमाप्तिस्तत्रोपक्रमः पर्यायान्तरस्येत्येके॥ समाहननं चैतद्दृषदुपलसंस्कारार्थत्वाच्चर्वादितन्त्रे निवर्तते। यथोक्तं भारद्वाजेन असति द्रव्ये कर्मलोपो यथा चरौ समाहननमाप्येभ्यो निनयनमिति॥

सावित्रेण वा शम्यामादाय तथा समाहन्ति। ४।

सावित्रो देवस्य त्वेत्यादिः। स यत्रादानार्थस्तत्रादद इति मन्त्रान्तः आदद इन्द्रस्य आदद ऋतस्य त्वा आददे ग्रावेत्यादिलिङ्गात्॥

वर्षवृद्धमसीति पुरस्ताच्छूर्पमुपोहत्युत्तरतो वा। ५।

पुरस्तादुलूखलस्योपोहत्युपयच्छति॥

वर्षवृद्धा स्थेत्यभिमन्त्र्य प्रति त्वा वर्षवृद्धं वेत्त्वित्युद्वपति। ६।

पुरोडाशीयानिति शेषः॥

परापूतं रक्षः परापूता अरातय इत्युत्करे परापुनाति । ७ ।

परापवनं व्याख्यातम् ॥

प्रविद्धं रक्षः पराध्माता अभिचा इति तुषान्प्रस्कन्दतो ऽनुमन्त्रयते । ८ ।

गतः ॥

मध्यमे पुरोडाशकपाले तुषानोप्य रक्षसां भागो ऽसीत्यधस्तात्कृष्णाजिनस्योपवपत्युत्तरमपरमवान्तरदेशम् । ९ ।

प्रथमोपधेयस्यापि कपालयोगे मध्यमभावित्वादस्य मध्यमत्ववादः । पुरोडाशकपाल इति वचनात्पुरोडाशार्थं प्रयुक्तेनैव कपालेनोपवपति । अवान्तरदेशं कोणदेशं प्रति ॥

हस्तेनोपवपतीति बह्वृचब्राह्मणम् । १० ।

हस्तकपालविकल्पः पुरोडाशतन्त्रेषु । चर्वादितन्त्रे तु हस्तो व्यवतिष्ठते कपालाभावात् ॥

अद्भिः कपालं संस्पर्श्य प्रज्ञातं निधायाप उपस्पृश्य वायुर्वो वि विनक्त्विति विविच्य देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति पात्र्यां तण्डुलान्प्रस्कन्दयित्वादब्धेन वश्चक्षुषावपश्यामि रायस्पोषाय वर्चसे सुप्रजास्त्वाय चक्षुषो गोपीथायाशिषमाशास इत्यवेक्ष्य त्रिष्फलीकर्तवा इति संप्रेष्यति । ११ ।

दर्शपूर्णमासौ



तुषोपवपनस्य राक्षसत्वादेव सिद्धे ऽपामुपस्पर्शनवचनं क्रमार्थम्। तथा यदेव रक्षसामुपकारकं तदेव राक्षसं न तु रक्षःसंबन्धमात्रादिति ज्ञापनार्थं च। अतः परापवनादौ न भवति। विवेकफलीकरणे व्याख्याते। त्रिष्फलीकर्तवै फलीकरणं त्रिः कर्तव्यमित्यर्थः॥

## या यजमानस्य पत्नी साभिद्रुत्यावहन्ति। १२।

गतः॥

## यो वा कश्चिदविद्यमानायाम्। १३।

अविद्यमानायामनालम्भुकत्वादिना निमित्तेनासंनिहितायामभावे च तस्या इत्यर्थो ऽविशेषात्। वक्ष्यति च पत्न्यभावे तेजन्यादि लुप्यत इति। ननु पत्नीवदस्याग्निहोत्रं भवति। युक्ता मे यज्ञमन्वासाता इत्यादिना कर्मणः पत्नीवत्त्ववचनात्तदभावे कर्मैव न संवर्तेत। नैवम्। कर्म न संवर्तेतानङ्गत्वे अङ्गत्वे तु संवृत्तं स्यात्। कुतः। अस्याग्निहोत्रं मे यज्ञमिति यजमानस्यैव स्वामित्वख्यापनाच्च न पत्न्याः तथा व्रीहियवपश्वाज्यपयःकपालपत्नीसंबन्धानीति तस्याः प्रसिद्धाङ्गसमभिव्याहाराच्च॥ तथा कर्मचोदना अपि यजमानमेवाधिकुर्वन्ति न पत्नीं। यथा वसन्ते ब्राह्मणो ऽग्निमादधीताग्निहोत्रं जुहुयाद्दर्शपूर्णमासाभ्यां यजेत स्वर्गकाम इत्यादि। बह्वृचब्राह्मणे चोक्तं तस्मादपत्नीको ऽप्यग्निहोत्रमाहरेदिति॥ किं चोद्घाटितमेतत्कल्पान्तरकारैः पत्न्यभावे ऽप्यग्निसद्भावं वदद्भिः। भारद्वाजस्तावत् अथ यद्यपत्नीकः स्यादुभाभ्यां तस्य संस्कार औपासनाग्निहोत्राभ्यामिति। तथा च तलवकारकल्पे जैमिनिः आहिताग्नेश्चेत्पूर्वं जाया म्रियेत तां निर्मन्थ्येन दहेत्संतपनेन वेति। तथाहार्येणानाहिताग्निं

पत्नीं चेत्याश्वलायनः॥ किं चाचारो ऽप्यत्र दृष्टः शिष्टतमानां पूर्वेषां यथा कण्वविभाण्डकभीष्मादीनां यथा च भगवतो दाशरथेः। किं च सहाधिकारे ऽपि पत्न्या यजमानसाम्यं तावन्नास्त्येव। यथोक्तं मीमांसकैः यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वादिति तस्मात्सिद्धमभावे ऽपि पत्न्या न कर्मणो निवृत्तिरिति॥

इति विंशी कण्डिका।

---

देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वं देवेभ्यः शुम्भध्वमिति सुफलीकृतान्करोति। तूष्णीं वा।१।

मन्त्रत्रयान्ते ऽवघातः प्रतिमन्त्रमित्यवचनात्॥

प्रक्षाल्य तुण्डुलांस्त्रिष्फलीक्रियमाणानां यो न्यङ्गो अवशिष्यते। रक्षसां भागधेयमापस्तत्प्रवहतादित इत्युत्करे त्रिर्निनयति।२।

फलीकरणोदकनिनयनमपि तुषोपवपनवद्राक्षसं रक्षसां भागधेयमिति मन्त्रलिङ्गात् तुषैर्वै फलीकरणैर्वा हविर्यज्ञेभ्यो रक्षांसि निरभजन्निति बह्वृचश्रुतेश्च। तस्मान्निनीयोदकमुपस्पृशति॥

अथ कृष्णाजिनस्यादानादि प्रागधिवर्तनात्कृत्वा दिव स्कम्भनिरसीति कृष्णाजिन उदीचीनकुम्बां शम्यां निधाय धिषणासि पर्वत्येति शम्यायां दृषदमत्याधाय धिषणासि पार्वतेयीति दृषद्युपलामत्यादधाति।३।

दर्शपूर्णमासौ



गम्याया: स्वविष्टो ऽन्त: कुम्बम् ॥

पूर्ववदनुत्सर्गः । ४ ।

उलूखलादिवदुत्तरोत्तरस्य निहतस्य गम्यादेर्वामेनानुत्सर्गः ॥

अंशव स्थ मधुमन्त इति तण्डुलानभिमन्त्र्य देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टमधिवपामीति यथादेवतं दृषदि तण्डुलानधिवपति चिर्यजुषा तूष्णीं चतुर्थम् । ५ ।

अधिवपनमन्त्रः प्रोक्षणमन्त्रेण व्याख्यात: । तद्यथाग्नये जुष्टमधिवपाम्यग्नीषोमाभ्यामिन्द्राय वैमृधाय धान्यमसि धिनुहि देवानित्यादि । तण्डुलास्तु यावन्तः सकृत्पेष्टुं शक्यन्ते तावतो ऽधिवपति ॥

प्राणाय त्वेति प्राचीमुपलां प्रोहत्यपानाय त्वेति प्रतीचीं व्यानाय त्वेति मध्यदेशे व्यवधारयति प्राणाय त्वापानाय त्वा व्यानाय त्वेति संततं पिनष्टि । ६ ।

गता: ॥

दीर्घामनु प्रसितिमायुषे धामिति प्राचीमन्ततो ऽनुप्रोह्य देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति कृष्णाजिने पिष्टानि प्रस्कन्दयित्वादब्धेन वश्चक्षुषावेक्ष इत्यवेक्ष्यासंवपन्ती पिंषाणूनि कुरुतादिति संप्रेष्यति । ७ ।

असंवपन्ती दृषदि तण्डुलानसंगतानावपन्ती पिंष पिण्डपिष्टानि चाणूनि कुर्वित्यवशिष्टतण्डुलार्थ: पत्न्या दास्या वा प्रैष: ॥

दासी पिनष्टि पत्नी वा। ८।

ते अपि कृष्णाजिन एव पिंष्टः॥

अपि वा पत्न्यवहन्ति शूद्रा पिनष्टि। ९।

पूर्वं पत्न्याः फलीकरणावघातमुक्त्वा ततः पेषणेऽपि दास्या सह विकल्प उक्तः। अनेन पुनःपेषणे दास्या नियमो वर्ण्यते। पत्न्यवघातमेव करोति न पेषणं तत्तु शूद्रा दास्येव करोति॥

इत्येकविंशी कण्डिका।

इति षष्ठः पटलः॥

---

आहवनीये गार्हपत्ये वा हवींषि श्रपयति। १।

अधिकारादौषधहविर्विषयोऽयमग्निविकल्पः। हवींषीति बहुवचनमैन्द्राग्नापेक्षया। सांनाय्ययोरुपदेशातिदेशाभ्यां गार्हपत्य एव व्यवतिष्ठते श्रपणम्॥

धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय रक्षसः पाणिं दहाहिरसि बुध्निय इत्यभिमन्त्र्यापाग्नेऽग्निमामादं जहीति गार्हपत्यात्प्रत्यञ्चावङ्गारौ निर्वर्त्य निष्क्रव्यादं सेधेति तयोरन्यतरमुत्तरमपरमवान्तरदेशं निरस्या देवयजं वहेति दक्षिणमवस्थाप्य ध्रुवमसीति तस्मिन्मध्यमं पुरोडाशकपालमुपदधाति। २।

दर्शपूर्णमासौ



अभिमन्त्रणस्याग्निलिङ्गत्वे ऽपि कर्मतया प्रकृत उपवेष एवाभिमन्त्रणेनान्वयमर्हति कर्मान्तरानुपादानात्। न च लिङ्गविरोधस्तस्यैवाग्निप्रेरकस्याग्निवदुपचारात्॥ तथा चैतं मन्त्रमुपवेषादान एव सत्याषाढो विकल्पितवान्॥ निर्वर्त्य निष्कृष्य दक्षिणमवस्थाप्य निरस्तादन्यं दक्षिणतो ऽवस्थाप्य॥

निर्दग्धं रक्षो निर्दग्धा अरातय इति कपाले ऽङ्गारमत्याधाय धर्त्रमसीति पूर्वं द्वितीयं संस्पृष्टम्। धरुणमसीति पूर्वं तृतीयम्। चिदसि विश्वासु दिक्षु सीदेति मध्यमाद्दक्षिणम्। परिचिदसि विश्वासु दिक्षु सीदेति मध्यमादुत्तरम्।३।

उपदधातीति शेषः॥

यथायोगमितराणि।४।

अतः पराणि यथायोगमुपदधाति यथा पुरोडाशप्रतिष्ठापनयोग्यो योगः संपद्यते तथेत्यर्थः॥

इति द्वाविंशी कण्डिका।

---

मरुतां शर्धो ऽसीति षष्ठम्। धर्मासीति सप्तमम्। चित स्थेत्यष्टमम्।१।

गतः। न्युब्जानि सर्वाण्युपधेयानि उत्तानेषु कपालेष्वधिश्रयतीति क्वचिद्वाक्यदर्शनात्॥

एवमुत्तरं कपालयोगमुपदधाति। २।

एवमङ्गारनिर्वर्तनादिना विधिनोपदधाति। तन्त्रमुपवेषादानं विभुत्वात् ॥

अपि वा मध्यममुपधाय सव्यस्य पाणेरङ्गुल्याभिनिधाय निर्दग्धं रक्षो निर्दग्धा अरातय इति कपालेऽङ्गारमत्याधाय धर्त्रमसीति तस्मादपरं धरुणमसीति तस्मात्पूर्वं यथायोगमितराणि। ३।

अभिनिधायावपीड्य ॥

तस्यतस्याङ्गुल्याभिनिधानमङ्गाराधिवर्तनं च वाजसनेयिनः समामनन्ति। ४।

तस्यतस्य प्रतिकपालमित्यर्थः ॥

चित स्थोर्ध्वचित इत्यूर्ध्वमष्टाभ्य उपदधाति तूष्णीं वा। ५।

उत्तरकपालयोगविषयोऽयं विधिः। प्रथमेऽसंभवात्तेनाग्नेयविकारेषु न भवति। तत्र तु कपालाधिक्ये सभशः प्रतिविभज्येति न्यायेनाष्टानामेव मन्त्राणां प्रतिविभागः ॥

भृगूणामङ्गिरसां तपसा तप्यध्वमिति वेदेन कपालेष्वङ्गारानध्यूह्य मदन्तीरधिश्रयति। ६।

अङ्गाराध्यूहनस्य प्रतिकपालयोगमावृत्तिः। आपस्ता मदन्त्य इत्या-

दर्शपूर्णमासौ



च्यायन्ते तासामर्थे ऽपः प्रणीताभ्यो ऽधिश्रयति प्रणीताभिः संयौतीति वचनादासामपि संयवनार्थत्वाच्च। लौकिकीभ्य इत्यन्ये॥ अत्र गोप्रतीक्षणादिविधिना प्रातर्दोहं दोहयति। व्याख्याता ऽस्य श्रपणाग्निः॥

इति त्रयोविंशी कण्डिका।

इति सप्तमः पटलः॥

---

प्रक्षालितायां पात्र्यां निष्टप्तोपवातायां पवित्रवत्यां पिष्टानि संवपति देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टं संवपामीति यथादेवतं त्रिर्यजुषा तूष्णीं चतुर्थम्। १।

शुद्धायामपि तदानीं प्रक्षालितायां निष्टपनेन शुष्कायां पात्र्यां कृष्णाजिनात्पिष्टानि संवपति। शेषस्तु व्याख्यातः॥

संवपन्वाचं यच्छति तामभिवासयन्विसृजते। २।

वक्ष्यति पुरोडाशं भस्मनाऽभ्यूहतीति तदभिवासनमित्युच्यते भस्मनाभिवासयतीति ब्राह्मणानुकारात्॥

प्रोक्षणीवत्पिष्टान्युत्पूय प्रणीताभिः संयौति। ३।

संयौति मिश्रयति॥

अन्या वा यजुषोत्पूय यदि प्रणीता नाधिगच्छेत्। ४।

यानि प्रणीतारहिततन्त्राणि प्रसङ्गीनि प्रणीतापेक्षाणि कर्माणि यथा सोमविधे पशौ पशुपुरोडाशः सौमिकेषु पशुषु सवनीया

देविका देवसुवां हवींषीत्यादि तद्विषयो ऽयं विधिः॥ किमर्थस्तर्हि वाशब्दः। प्रणीताभिर्विकल्पार्थः। तदर्थमपः प्रणीय ताभिर्वा संयौत्यन्याभिर्वेत्यर्थः। सत्याषाढस्त्वाह यदि प्रणीता नाधिगच्छेदित्यापदर्थो वाद इति॥ नात्रापामभिमन्त्रणमुत्पूयाभिमन्त्र्येत्यन्यत्र विशेषवचनात्। चरुषु अपणार्थान्ययाज्यदधिपयांसि यथार्थमूहेनोत्पूय सपवित्रायां स्थाल्यामानीय तेषूत्पूतांस्तण्डुलानावपति पवित्रवत्याज्ये कणानावपतीति लिङ्गात्। तत्र पयोघृतादेस्तच्छ्रपणार्थस्योहेनोत्पवनमभिमन्त्रणं चाह सत्याषाढो यथा देवस्त्वा सवितोत्पूनात्वित्युत्पवनं संनमति पयो देवाग्रेष्वग्रेग्वग्र इत्यभिमन्त्रणमिति। शृते नेदीयसि वाज्यमानयतीति बौधायनः॥

**स्रुवेण प्रणीताभ्य आदाय वेदेनोपयम्य समापो अद्भिरग्मतेति पिष्टेष्वानीयाद्भिः परि प्रजाता इति ताभिरनुपरिस्राव्य जनयत्यै त्वा संयौमीति संयुत्य मखस्य शिरो ऽसीति पिण्डं कृत्वा यथाभागं व्यावर्तेथामिति विभज्य समौ पिण्डौ कृत्वा यथादेवतमभिमृशतीदमग्नेरित्याग्नेयम्। इदमग्नीषोमयोरित्यग्नीषोमीयम्।५।**

परिस्राव्य परितः सिक्त्वा। संयुत्य पिष्टान्यपश्च मेलयित्वेत्यर्थः॥ तत्र तु संयवनमन्त्रो ऽग्नीषोमाभ्यामित्यन्त उत्तरस्यादिनेति न्यायात्। स च देवतादिभेदे प्रोक्षणादिमन्त्रवद्यथादेवतं विकर्तव्यो ऽन्यथा लिङ्गविरोधात्। न चार्थवादत्वं समवेताभिधायित्वादग्नये त्वाग्नीषोमाभ्यामित्याह व्यावृत्त्या इति श्रुतेश्च। न च यथादेवतमित्यव-

दर्शपूर्णमासौ



चनादविकार इति वाच्यं प्रोक्षणादिमन्त्रस्वरूपतया तत्तुल्यन्यायतया च तैरेव व्याख्यातविकारत्वाद्युक्तवचनाच्च बौधायनेन यथाग्नये त्वाग्नीषोमाभ्याममुष्मा इति यथादैवतमिति॥ अन्ये तु जनयत्यै त्वा संयौमीत्यन्तं संयवनमन्त्रमिष्ट्वा शेषं विभक्ताभिमर्शने सौत्रेण मन्त्रेण सह विकल्पयन्ति। नायं सूत्रकृतो ऽभिप्रायः अपृथग्विनियोगात्। कथं चायमाचार्यः। कार्त्स्न्येनैतं मन्त्रसमाम्नायं विनियुञ्जानो मन्त्रमेकं भ्रंशितवानिति संभावयामः। तस्मात्सूक्तमेकमन्त्र्येण विकर्तव्यमिति। तदयं प्रयोगात्मा। जनयत्यै त्वा संयौम्यग्नये त्वाग्नीषोमाभ्यामिन्द्राय वैमृधायेत्यादि। मखस्य शिरो ऽसीति सर्वमेकं पिण्डं कृत्वा ततो विभज्य द्वौ समौ कृत्वा तयोराग्नेयमितरं चाभिमर्शने नियच्छति॥ वैमृधसमानतन्त्रत्वे तु पुरोडाशगणे यथाभागमित्यादिन्यायेन विभज्योत्तमयोरेव देवतोपदेशनं करोति नाग्नेयस्य। तथा न केवलाग्नेयाभिमर्शनं विभागाभावात्॥

**इदमहं सेनाया अभीत्वर्यै मुखमपोहामीति वेदेन कपालेभ्यो ऽङ्गारानपोह्य घर्मो ऽसि विश्वायुरित्याग्नेयं पुरोडाशमष्टासु कपालेष्वधिश्रयति। ६।**

अपोहने कपालेभ्य इत्यविशेषवचनादधिश्रयणे ऽष्टासु कपालेष्विति विशेषणाच्चोत्तरस्मादपि कपालयोगादङ्गारानपोह्य ततो ऽधिश्रयणमाग्नेयस्य। तथा दक्षिणस्मादपोह्योत्तरस्मादपोहतीत्येव सत्याषाढः। तत्र प्रतिकपालयोगं मन्त्राभ्यासो देशभेदादसंभवात्॥

**एवमुत्तरमुत्तरेषु। ७।**

अधिश्रयतीत्यन्वयः। उत्तरत्वमुत्पत्त्यपेक्षया हविषाम्। एवमिति मन्त्रातिदेशः॥

एवमनुपूर्वाण्येवैष्वत ऊर्ध्वं कर्माणि क्रियन्ते। ८।

अधिश्रयणादूर्ध्वं ये संस्काराः प्रथनादयस्ते ऽप्येषु पुरोडाशेष्वेवमधिश्रयणोक्तेनोत्पत्तिक्रमेणैव कर्तव्याः। एष्विति बहुवचनमैन्द्राग्नापेक्षया समानस्त्वायं न्यायः सर्वहविषां विशेषहेत्वभावात्। तेन हविर्गणेषु चरुदोहादिव्यतिषङ्गे ऽप्युत्पत्तिक्रमेणैव हविःषु संस्कारा भवन्ति॥ अत ऊर्ध्वमिति चातः पूर्वमविभक्तत्वाद्धविषामानुपूर्व्यासंभवादुक्तं न तु तत्र न्यायत्वात्। अतो विकृतिषु सति संभवे पूर्वत्राप्ययमेव न्यायो द्रष्टव्यः यथा नानाबीजादिषु निरुप्ताभिमर्शनादीनाम्॥ अस्त्वेवमुत्पत्तिक्रमेण हविःषु संस्काराणां प्रवृत्तिस्त एव संस्काराः किं काण्डानुसमयन्यायेनैकैकत्र काण्डशः कार्याः उत पदार्थानुसमयन्यायेनैकैकः संस्कारः सर्वेषु परिनिष्ठापनीय इत्यपेक्षायामभिमतं न्यायं दर्शयति॥

इति चतुर्विंशी कण्डिका।

---

समानजातीयेन कर्मणैकैकमपवर्जयति। १।

एकविधिचोदित एको व्यापारः समानजातीयं कर्म। तस्य बहुषु क्रियमाणस्य व्यक्तिनानात्वात्समानजातीयत्वाभिमानः। तेनैकैकं हविरनुसमेत्यापवर्जयति निर्वृत्तार्थं करोति। न तु भिन्नजातीयैरनेकैरेकैकमित्यर्थः। तद्यथा प्रथमस्य कृत्वा प्रथनं द्वितीयस्य करोति

तथैव स्रुच्द्धीकरणादीनि। एवं च पदार्थानुसमय एव सर्वत्रा-भिमत इत्युक्तं भवति॥ तत्राह सत्याषाढः संयुक्तानि लेकापवर्गाणि यथावदानप्रदाने उद्वपननिष्पवने चेति। मीमांसकास्त्वाहुः संयुक्ते तु प्रक्रमात्तदन्तं स्यादितरस्य तदर्थत्वादिति॥

**यानि विभवन्ति सकृत्तानि क्रियन्ते।२।**

तत्र यानि कर्माणि सकृत्कृतान्येव सर्वेषामुपकाराय प्रभवन्ति तानि सकृदेव क्रियन्ते। न त्वेकैकस्य। यथा पर्यग्निकरणादीनि बहुवच-नात्प्रोक्षणादीनि च सर्वाणि॥

**उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयन्सर्वाणि कपालान्यभिप्रथयति।३।**

यथा सर्वाणि कपालान्यभितिष्ठति पुरोडाशस्तथा प्रथयतीत्यर्थः॥

**अतुङ्गमनपूपाकृतिं कूर्मस्येव प्रतिकृतिमश्वशफमात्रं करोति।४।**

अतुङ्गो ऽनुच्चपृष्ठः। अनपूपाकृतिर्न चापूपवदतिनीचः। किं तु यथायं कूर्मस्य प्रतिकृतिरिव भवति तथा करोति। ते ऽपश्यन्पुरोडाशं कूर्मं भूतमिति कूर्माकृतिसंस्तवादिति भावः॥ शफः खुरः॥

**यावन्तं वा मन्यते।५।**

यावन्तमिज्यायाः शेषकार्याणां च पर्याप्तं मन्यते तावन्तमिति शफप्रमाणविकल्पः॥

**तं न सचा पृथुं करोतीत्येके।६।**

तमुक्तात्प्रमाणात्सचा पृथुमत्यर्थं पृथं न कुर्यात्। अल्पं तु पार्थवं संमतमित्येके मन्यन्त इत्यर्थः ॥

त्वचं गृह्णीष्वेत्यद्भिः श्लक्ष्णीकरोत्यनतिक्षारयन्।७।

अनतिक्षारयन्यथा पुरोडाशमतीत्य नापः क्षरन्ति तथा ॥

अन्तरितं रक्षो ऽन्तरिता अरातय इति सर्वाणि हवींषि त्रिः पर्यग्नि कृत्वा देवस्त्वा सविता श्रपयत्वि-त्युल्मुकैः परितपति।८।

परित उल्मुकनयनं पर्यग्निकरणं तद्दोहयोरपि करोति सर्वाणीति वचनात्। तथा च भारद्वाजः पर्यग्निकरणकाले दध्युपदधातीति। तत्र यदाप्याहवनीये हविःश्रपणं भवति तदापि प्रातर्दोहस्य गार्हपत्यस्थत्वात्तेनाग्निना पर्यग्निकरणं सामर्थ्यात्। परितपति परित-स्तपति पुरोडाशम् ॥

अग्निस्ते तनुवं मातिधागिति दर्भैरभिज्वलयति ज्वालैर्वा।९।

अभिज्वलयत्युपरि ज्वलयति। ज्वालैर्ज्वलद्भिस्तृणादिभिः ॥

अविदहन्तः श्रपयतेति वाचं विसृजते।१०।

तामभिवासयन्विसृजत इति प्रागुक्तस्य वाग्विसर्गस्यायं कालः प्रदर्श्यते तामभिवासयन्निति लक्षणार्थं। भस्मनाभिवासनात्पूर्वकालस्य लक्षणे-त्युक्तं भवति। संप्रैषो ऽयमाग्नीध्रं प्रत्यविवक्षितबहुवचनस्तस्यैवोत्तरत्र श्रपणविधानात् ॥

दर्शपूर्णमासौ



आग्नीध्रो हवींषि सुश्रृतानि करोति। ११।

गतः॥

सं ब्रह्मणा पृच्यस्वेति वेदेन पुरोडाशे साङ्गारं भस्माध्यूहति। १२।

अध्यूहत्यध्वर्युरभिवासयतीत्यर्थः॥

अत्र वा वाचं विसृजेत्। १३।

अस्मिंस्तु कल्पे तामभिवासयन्निति अन्नाभिवासनोत्तरकालो लक्षितो भवति। तेनाविदहन्त इति संप्रैषो ऽप्यत्रोत्क्रष्यते॥

अङ्गुलिप्रक्षालनं पात्रीनिर्णेजनं चोल्मुकेनाभितप्य स्फ्येनान्तर्वेदि तिस्रो लेखा लिखति प्राचीरुदीचीर्वा। १४।

अङ्गुलयः प्रक्षाल्यन्ते येन येन च पात्री निर्णिज्यते तदुभयमपि सहगृहीतं जलमुल्मुकेनापरिगृहीतेन तापयति॥ तथा च ब्राह्मणं उल्मुकेनाभिगृह्णाति शृतत्वायेति॥ प्राचीः प्रागायतास्तथोदीचीः। तास्वोभय्यो ऽपि पश्चिमायामारभ्य पूर्वान्ता लेखा लेखितव्याः॥

तास्वसंस्यन्दयंस्त्रिर्निनयति प्रत्यगपवर्गमेकताय स्वाहेत्येतैः प्रतिमन्त्रम्। १५।

तासु बहिरस्यन्दयन्नेकैकेन मन्त्रेणैकैकत्र सकृत्सकृन्निनयति। न त्वेकैकत्र निनयनावृत्तिः त्रिस्त्रिरित्यवचनात्॥

निनीय वाभितपेदभितपेत्। १६।

रेखासूदकं निनीय तत्र वा पृथगुल्मुकेनाभितपेत्। द्विरुक्तिः प्रश्नसमाप्तिसूचिका ॥

इति पञ्चविंशी कण्डिका।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायामष्टमः पटलः।

इति प्रथमः प्रश्नः ॥

दर्शपूर्णमासौ

ओम् ॥

देवस्य त्वा सवितुः प्रसव इति स्फ्यमादायेन्द्रस्य बाहुरसि दक्षिण इत्यभिमन्त्र्य हरस्ते मा प्रतिगामिति दर्भेण संमृज्यापरेणाहवनीयं यजमानमात्रीमपरिमितां वा प्राचीं वेदिं करोति। १।

गार्हपत्याहवनीययोरन्तरालमहत्त्वे ऽप्याहवनीयानन्तर्यं वेदेर्दर्शयन्नप-रेणाहवनीयमिति ॥ अपरिमितशब्दः सर्वत्रोक्तात्प्रमाणादधिकविषय इति न्यायविदः। कात्यायनश्चाह अपरिमितं प्रमाणाद्भूय इति। तथापरिमितशब्दे संख्याया ऊर्ध्वमिति भारद्वाजः ॥

यथासन्नानि हवींषि संभवेदेवं तिरश्चीम्। २।

यथासन्नानि हवींषि वेदिः संभवेत्संगृह्णीयात्तथा तिरश्चीं तिर्यग्वि-स्तीर्णाम् ॥

वेदेन वेदिं विविदुः पृथिवीं सा पप्रथे पृथिवी पार्थिवानि। गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञो जायते विश्वदानिरिति पुरस्तात्स्तम्बयजुषो वेदेन वेदिं त्रिः संमार्ष्ट्युपरिष्टाद्वा। ३।

स्तम्बयजुरित्यनन्तरस्य कर्मणो नाम। तस्य पुरस्तादुपरिष्टाद्वा संमार्ष्टि ॥

**पूर्वार्धाद्वेदेर्वितृतीयदेशात्स्तम्बयजुर्हरति। ४।**

वेदेः पूर्वार्धात्तत्रापि विगतवेदितृतीयदेशात्। किमुक्तं भवति पूर्वं वेदितृतीयं हित्वा मध्यमस्य वेदितृतीयस्य पूर्वार्धादिति यावत्। स्तम्बयजुरिति सतृणाः पांसवो ऽभिधीयन्ते तद्योगात्कर्म च क्वचित् ॥

**पृथिव्यै वर्मासीति तत्रोदगग्रं प्रागग्रं वा दर्भं निधाय पृथिवि देवयजनीति तस्मिन्स्फ्येन प्रहृत्यापहतो ऽररुः पृथिव्या इति स्फ्येन सतृणान्पांसूनपादाय व्रजं गच्छ गोस्थानमिति हरति। वर्षतु ते द्यौरिति वेदिं प्रत्यवेक्षते यजमानं वा। ५।**

गतौ ॥

**बधान देव सवितरित्युत्तरतः पुरस्ताद्वितृतीयदेश उदग्द्विपदे ऽपरिमिते वा वेदेर्निवपति। ६।**

वेदेरुत्तरतो निवपति। कस्माद्वेदिप्रदेशादुत्तरतः कियति वाध्वन्युत्तरतः। पुरस्ताद्वितृतीयदेश उदग्द्विपदे ऽपरिमिते वा। एतदुक्तं भवति पूर्वं वेदितृतीयं हित्वानन्तरदेशादुदग्द्विपदे ततो ऽधिके वा देशे ऽतीते निवपतीति ॥ वक्ष्यति च महावेद्यां चात्वालाद्द्वादशसु प्रक्रमेषु प्रत्यगुत्करस्तावत्येवाध्वन्युदग्यया चात्वाल इति ॥

**स उत्करः। ७।**

दर्शपूर्णमासौ



यत्र न्युप्तं स्तम्बयजुः स देश उत्कर इत्यर्थः । तथा चान्यत्रानुवदि-ष्यत्युत्करे निवपति समान उत्कर इति । उक्तं च प्रागुत्करे परा-पुनातीत्यादि ॥

अररुस्ते दिवं मा स्कानिति न्युप्तमाग्नीध्रो ऽञ्जलि-नाभिगृह्णाति । ८ ।

उत्करे न्युप्तं स्तम्बयजुरुपर्यञ्जलिना गृह्णातीत्यर्थः । याजमाने तूत्क-रमभिगृह्यमाणमिति तात्स्थ्याभिप्रायं वेदितव्यम् ॥

एवं द्वितीयं तृतीयं च हरति । ९ ।

एवं त्रयो हरणपर्याया भवन्ति ॥

तूष्णीं चतुर्थं हरन्सर्वं दर्भशेषं हरति । १० ।

गतः ॥

इति प्रथमा कण्डिका ।

---

अपाररुमदेवयजनं पृथिव्या इति द्वितीये प्रहरणे ऽररुर्द्यां मा पप्तदिति तृतीये । अपहतो ऽररुः पृथिव्यै देवयजन्या इति द्वितीये ऽपादानो ऽपहतो ऽररुः पृथिव्या अदेवयजन इति तृतीये । १ ।

प्रह्रियते येन मन्त्रः प्रहरणः । तथापादानः ॥

अवबाढं रक्ष इति द्वितीये निवपन आग्नीध्रो ऽभिगृह्णात्यवबाढो ऽघशंस इति तृतीये ऽवबाढा यातुधाना इति चतुर्थे। २।

द्वितीये निवपने न्युप्तमभिगृह्णातीत्यर्थः। आग्नीध्रग्रहणमव्यामोहार्थम्॥

द्रप्सस्ते द्यां मा स्कानिति खनिं प्रत्यवेक्ष्य स्फ्येन वेदिं परिगृह्णाति वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसेति दक्षिणतो रुद्रा इति पश्चादादित्या इत्युत्तरतः। ३।

यतः पांसव उपात्ताः स प्रदेशः खनिः। परिगृह्णाति परितः स्वीकारचिह्नं रेखादि करोति। रुद्रास्त्वेत्यत्र नापामुपस्पर्शनं रुद्रानुपकाराद्रुद्रगणत्वाच्च। तद्धि क्रूरैकरुद्रार्थकर्मविषयमिति ब्राह्मणप्रसिद्धिः॥

अपाररुमदेवयजनं पृथिव्या अदेवयजनो जहीति स्फ्येनोत्तमां त्वचमुद्धन्ति। ४।

उत्तमां त्वचं वेदिभूमेरुपरितनीं मृदम्॥

समुद्धतस्याग्नीध्र उत्करे त्रिर्निवपति। ५।

समुद्धतस्य समुद्धृतम्॥

इमां नराः कृणुत वेदिमेत देवेभ्यो जुष्टामदित्या उपस्थे। इमां देवा अजुषन्त विश्वे रायस्पोषा यजमानं विशन्त्विति संप्रेष्यति। ६।

दर्शपूर्णमासौ



संप्रेष्यतीति परिस्तरणसंप्रैषेण व्याख्यातम् । अथवा परिकर्मिणश्च वेदिं कुर्वन्ति सौमिके ऽस्मिन्संप्रैषे तथादर्शनात् ॥

**देवस्य सवितुः सव इति खनति द्व्यङ्गुलां त्र्यङ्गुलां चतुरङ्गुलां यावत्पार्ष्ण्याः शुल्कं तावतीं पृथमात्रीं रथवर्त्ममात्रीं सीतामात्रीं प्रादेशमात्रीं वा पुरीषवतीम् । ७ ।**

पार्ष्णिः पादस्य पश्चिमभागस्तस्य यावाञ्छुल्को देशस्तावत्खनति । पृथमात्रं त्रयोदशाङ्गुलमिति बौधायनः । रथवर्त्म रथचक्रवर्त्म । सीता फालकृष्टा रेखा । पुरीषवतीं पुरीषं पांसुः तद्वती यथा भवति तथा खनति ॥

**नैता मात्रा अतिखनति । ८ ।**

उक्तासु मात्रासु यया मात्राङ्गीकृता तांतामतीत्य न खनति । न्यूनत्वे तु नातीव दोष इति भावः ॥

**दक्षिणतो वर्षीयसीं प्राक्प्रवणां प्रागुदक्प्रवणां वा । ९ ।**

पुरीषभूम्ना यथा दक्षिणत उन्नता तद्ध्रासाच्च प्राक्प्रवणा स्यात्तथा करोतीत्यर्थः ॥ तथा च श्रुतिः यथा वै दक्षिणः पाणिरेवं देवयजनमिति ॥

इति द्वितीया कण्डिका ।

**प्राञ्चौ वेद्यंसावुन्नयति प्रतीची श्रोणी। १।**

प्राञ्चावुन्नयत्यभित आहवनीयमुन्नयत्युदूहति। श्रोणी च प्रतीच्यावभितो गार्हपत्यम्॥

**पुरस्तादंहीयसी पश्चात्प्रथीयसी मध्ये संनततरा भवति। २।**

अंहीयसी तनीयसी। संनमनं पूर्वत्र व्याख्यास्यते॥

**यन्मूलमतिशेते स्फ्येन तच्छिनत्ति न नखेन। ३।**

यत्तदौषध्यादेश्छिन्नस्य मूलमतिशेते ऽतितिष्ठति पुरीषं तत्स्फ्येन छिनत्ति न नखेन सहकारिणा॥

**यत्पुरीषमतिशेत उत्करे तन्निवपति। ४।**

अतिशेते ऽतिरिच्यते॥

**आहार्यपुरीषां पशुकामस्य कुर्यात्। ५।**

आहार्यं पुरीषं देशान्तराद्यस्याः सा तथोक्ता। तत्र प्रकारमाह॥

**यत्प्राक् खननात्तत्कृत्वा यदाहरेत्तन्मन्त्रेण खनेत्।६।**

प्राक् खननाद्यदाहरेत्पुरीषं तत्खननमन्त्रेण खनेत्। तदा तु द्व्यङ्गुलादिनियमो वेद्यां पुरीषे भवति॥

**ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामीति ब्रह्माणमामन्त्र्य स्फ्येन वेदिं परिगृह्णात्यृतमसीति दक्षिणतः। ऋतसदनमसीति पश्चात्। ऋतश्रीरसीत्युत्तरतः।७।**

गतः॥

दर्शपूर्णमासौ



**विपरीतौ परिग्राहावेके समामनन्ति। ८।**

विपरीतत्वं मन्त्रव्यत्यासात्। तत्र केचिद्वदन्ति ते ऽग्निना प्राञ्चो ऽजयन्निति लिङ्गाद्यत्राविहृत आहवनीये वेदिस्तत्र विपरीतावेव परिग्राहावन्यत्रानियम इति। तत्तु न मृष्यते प्रकृतौ तुल्यार्थयो- र्धर्मयोः प्रकृतिवद्विकृतावपि तुल्यवत्प्राप्तेरनिवारणात्। अर्थवादे च प्राग्भागपरिग्रहार्थायाः प्रागग्निना परिग्रहस्तुतेरुभावपि परिग्राहौ प्रत्यविशेषाद्विशेषे चोत्तरपरिग्राहे प्राग्भागपरिग्रहप्रसङ्गाच्च। तस्मा- त्तुल्यवद्विकल्पः सर्वत्र ॥

**धा असि स्वधा असीति प्रतीचीं वेदिं स्फ्येन योयु- प्यते। ९।**

प्रतीचीं प्रत्यगपवर्गां योयुप्यते निम्नोन्नतसमीकरणार्थं घट्टयति ॥

**उदादाय पृथिवीं जीरदानुरिति वेदिमनुवीक्षते । १०।**

गतः ॥

**पश्चार्धे वेदेर्वितृतीयदेशे स्फ्यं तिर्यञ्चं स्तब्ध्वा संप्रे- ष्यति प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि पत्नीं संनह्याज्येनोदेहीति। ११।**

पश्चार्धे वेदेरित्यादिः पूर्वार्धाद्वेदेरित्यादिना व्याख्यातः। पाश्चात्यं वेदितृतीयं हित्वा मध्यमस्य वेदितृतीयस्यापरार्ध इत्युक्तं भवति ॥ संप्रैषस्य परार्थत्वादाग्नीध्र एतानि कर्माणि कुर्यात्। अध्वर्युरेव वा करोति संप्रैषे परानुपादानात् आग्नीध्रो ऽग्मानमाग्नीध्रा हवीषी-

त्यादिवच्च विशेषावचनात् स्वयमात्मानमनुजानीयादिति न्यायेनात्म-न्यपि संप्रैषोपपत्तेश्च। न चैवं प्रैषानर्थक्यं कर्तृसंस्कारार्थत्वादित्या-द्यानुपूर्व्यताया इति श्रुतेश्च। तदुक्तं कात्यायनेन यथाप्रेषितमन्यः करोति पराधिकारात्स्वयं वाविरोधादिति। भारद्वाजश्च आग्नीध्र एतानि कर्माणि कुर्यादित्येकमध्वर्युरित्यपरमिति। पत्नीद्वित्वबहुत्व-योरपि पत्नीं संनह्येत्यविकारः प्रकृतावूहप्रतिषेधात्। न च संप्रैषस्य निवृत्तिः पत्नीप्रातिपदिकार्थसमवाये तद्गुणसंख्याविरोधमात्रेण मन्त्रबाधस्यायुक्तत्वात् जातिसंख्याविवक्षयापि कथंचिदेकवचनोपपत्तेश्च। एवं च प्रकृतिसिद्धस्यैवास्य विकृतावप्यनूहः॥

**अपि वा न संप्रैषं ब्रूयात्। १२।**

तदा तु परानधिकारादाध्वर्यवाण्येव कर्माणि॥

**प्रोक्षणीरभिपूर्योदञ्चं स्फ्यमपोह्य दक्षिणेन स्फ्यमसंस्पृष्टा उपनिनीय स्फ्यस्य वर्त्मन्सादयत्यृतसधस्थेति द्वेष्यं मनसा ध्यायन्। १३।**

स्फ्यमुदञ्चं कर्षन्नपोहति स्फ्यस्य वर्त्मन्निति वचनात्। असंस्पृष्टाः स्फ्येन। द्वेष्यं यजमानशत्रुम्। पाप्मापि शत्रुर्हिंसकत्वात् पाप्मानमेवास्य भ्रातृव्यं हन्तीति लिङ्गाच्च। मनसा ध्यायन्निति व्याख्यातं प्राक्॥

**शतभृष्टिरसि वानस्पत्यो द्विषतो वध इति पुरस्तात्प्रत्यञ्चमुत्करे स्फ्यमुदस्यति द्वेष्यं मनसा ध्यायन्। १४।**

स्फ्यं पुरस्ताद्भागे प्रत्यगग्रमुदस्यति॥

दर्शपूर्णमासौ



नानवनिज्य हस्तौ पात्राणि पराहन्ति। १५।

अभिमृशति॥

हस्तावनिज्य स्फ्यं प्रक्षालयत्यग्रमप्रतिमृशन्। १६।

स्फ्यप्रक्षालनमप्यवनिक्तहस्तेनैवेत्यत्रासंदेहार्थं पुनर्हस्तावनेजनवचनम्॥

उत्तरेणाहवनीयं प्रागग्रमिध्माबर्हिरुपसादयति द-
क्षिणमिध्ममुत्तरं बर्हिः। १७।

गतः॥

इति तृतीया कण्डिका।

इति प्रथमः पटलः॥

पत्नीसंनहनमेके पूर्वं समामनन्ति स्रुक्संमार्जन-
मेके। १।

यदा पत्नीसंनहनं पूर्वं तदा संप्रैषनिवृत्तिः। क्रमविरोधादित्याहानु-
पूर्वताया इति लिङ्गविरोधात् तूष्णीं यवमयमिति लिङ्गाच्च॥

घृताचीरेताग्निर्वो ह्वयति देवयज्याया इति स्रुच
आदाय प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इत्याहवनीये
गार्हपत्ये वा प्रतितप्यानिशिता स्थ सपत्नक्षयणीरि-
त्यभिमन्त्र्य वेदाग्राणि प्रतिविभज्याप्रतिविभज्य वा तैः
स्रुचः संमार्ष्टि प्राचीरुदीचीर्वोत्ताना धारयमाणः। २।

स्रुवप्राशित्रहरणयोरपि सह स्रुग्भिरादानं प्रतितपनं च तयोरपि संमार्गवचनात्। प्राचीरुदीचीर्वेत्यग्रविकल्प उपभृतो ऽन्यासां तस्या उपभृतमुदीचीमिति नियमात्॥

**उपभृतमेवोदीचीमित्येके। ३।**

उपभृतमेवोदीचीं प्राचीरन्या इत्येके व्यवस्थामाहुरित्यर्थः॥

**गोष्ठं मा निर्मृक्षमिति स्रुवमग्रैरन्तरतो ऽभ्याकारं सर्वतो बिलमभिसमाहारम्। मूलैर्दण्डम्। ४।**

अग्रैर्वेदाग्रैः। अन्तरतो बिलोदरम्। अभ्याकारमित्याभीक्ष्ण्ये णमुल्। अभ्याकारं संमार्ष्टि पुनःपुनः संमार्ष्टीत्यर्थः। सर्वतो बिलमभिसमाहारं सर्वेभ्यः पार्श्वेभ्यो बिलं प्रति समाहृत्यसमाहृत्य संमार्ष्टि। मूलैर्वेदाग्रमूलैर्दण्डमुपरिष्टात्प्राचीनमधस्तात्प्रतीचीनं च संमार्ष्टि तस्मादरत्नौ प्राञ्च्युपरिष्टाल्लोमानि प्रत्यञ्च्यधस्तादिति लिङ्गात्॥

**वाचं प्राणमिति जुहूमग्रैरन्तरतो ऽभ्याकारं प्राचीं मध्यैर्बाह्यतः प्रतीचीम्। मूलैर्दण्डम्। ५।**

प्राचीं प्रतीचीमिति क्रियापवर्गवादः। वेदाग्रमध्यैर्बिलादारभ्याग्रात्प्रागपवर्गमुपरिभागं संमृज्य तावन्तं बाह्यभागं प्रत्यगपवर्गं संमार्ष्टि। पूर्ववन्मूलैर्दण्डम्॥

**चक्षुः श्रोत्रमित्युपभृतमुदीचीमग्रैरन्तरतो ऽभ्याकारं प्रतीचीं मध्यैर्बाह्यतः प्राचीम्। मूलैर्दण्डम्। ६।**

उदीचीमुदगग्राम्। उदक्त्वनियमार्थं वचनम्। प्रतीचीं मध्यैर्बाह्यतः

दर्शपूर्णमासौ



प्राचीं विलख्य सव्यं पार्श्वमुपरिभागे प्रत्यगधोभागे प्राक् संमार्ष्टि ॥

प्रजां योनिमिति यथा स्रुवमेवं ध्रुवाम्। ७।

गतः ॥

रूपं वर्णं पशूनां मा निर्मृक्षं वाजि त्वा सपत्नसाहं संमार्ज्मीति प्राशित्रहरणं तूष्णीं वा। ८।

अनियमो ऽस्य संमार्गप्रकारे। यथा स्रुवमिति केचिदनुवर्तयन्ति ॥

न संमृष्टान्यसंमृष्टैः संस्पर्शयति। ९।

संमृज्यमानपात्रेषु न संमृष्टासंमृष्टयोः संसर्गः कार्यः। तत्र यदि स्पर्शयेत्पुनरेव निष्टप्य संमृजेदिति भारद्वाजः ॥

अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामीति पुनः प्रतितप्य प्रोक्ष्याग्रेणोत्करं दर्भेषु सादयति जघनेन वा। १०।

उत्करं जघनेनापरेणेत्यर्थः ॥

स्रुक्संमार्जनान्यद्भिः संस्पर्श्य। ११।

इति चतुर्थी कण्डिका।

दिवः शिल्पमवततं पृथिव्याः ककुभिः श्रितं तेन वयं सहस्रवल्शेन सपत्नं नाशयामसि स्वाहेत्यग्नौ प्रहरति यस्मिन्प्रतितपत्युत्करे वा न्यस्यति। १।

यस्यैतान्यन्यत्राग्नेर्दधतीत्यन्यनिन्दाग्निस्तुत्यर्थेति भावः ॥

**आशासाना सौमनसमित्यपरेण गार्हपत्यमूर्ध्वज्ञुमासीनां पत्नीं संनह्यति तिष्ठन्तीं वा । २ ।**

ऊर्ध्वे जानुनी यस्याः सोर्ध्वज्ञुः ॥

**वाचयतीत्येके । ३ ।**

पत्नीं वाचयति वा मन्त्रलिङ्गानुगुण्यार्थमिति भावः ॥

**मौञ्जेन दाम्नान्यतरतः पाशेन योक्त्रेण वाभ्यन्तरं वाससः । ४ ।**

संनह्यतीत्यन्वयः । योक्त्रमनोवाहबन्धनी रज्जुः । वाससो ऽभ्यन्तरं वस्त्राव्यवहिते शरीरे ॥

**न वासो ऽभिसंनह्यति । अभिसंनह्यतीत्येके । ५ ।**

न वासो ऽभिसंनह्यतीत्यस्य पूर्वेण सिद्धस्याभिसंनह्यतीत्यनेन विकल्पार्थो ऽनुवादः ॥

**उत्तरेण नाभिं निष्टर्क्यं ग्रन्थिं कृत्वा प्रदक्षिणं पर्यूह्य दक्षिणेन नाभिमवस्थाप्योपोत्थायाग्ने गृहपत उप मा ह्वयस्वेति गार्हपत्यमुपतिष्ठते । ६ ।**

उपोत्थानसमानकर्तृकत्वात्पत्नीकर्माण्येतानि । अध्वर्युस्तु योक्त्रान्ते पाशं प्रतिमुच्य विरमति ॥ निष्टर्क्यः शिखाकृतिर्ग्रन्थिः । तं दक्षिणेन नाभिं नयति प्रदक्षिणं नीत्वावस्थापयति न तु प्रसव्यम् ॥

**देवानां पत्नीरुप मा ह्वयध्वं पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिंसीरिति देवपत्नीरुपतिष्ठते । ७ ।**

अपरेण गार्हपत्यं देवपत्नीनां लोकस्तत्र ता उपतिष्ठते ॥

तस्माद्देशादपक्रम्य सुप्रजसस्त्वा वयमिति दक्षिणत उदीच्युपविशति । ८ ।

देशाद्दक्षिणत उदीच्यन्वास्त इति ब्राह्मणव्याचिख्यासयोक्तं तस्माद्देशादपक्रम्येति । दक्षिणतः कस्य । तस्यैव देशस्य ततो ऽन्यस्यानुपादानात् ॥ उक्तं च हिरण्यकेशिना दक्षिणतः पश्चाद्गार्हपत्यस्योदीच्युपविशतीति ॥

इन्द्राणीवाविधवा भूयासमदितिरिव सुपुत्रा । अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वायेति जपति । ९ ।

गतः ॥

युक्ता मे यज्ञमन्वासाता इति यजमानः संप्रेष्यति । १० ।

पत्नीमिति शेषः । संनहनादिः संप्रैषान्तो विधिः पत्नीसंस्कारत्वात्प्रतिपत्न्यावर्तते ॥

बह्वाज्याभ्यां दर्शपूर्णमासाभ्यां यजत इति विज्ञायते । ११ ।

गतः ॥

इति पञ्चमी कण्डिका ।

पूषा ते बिलं विष्यत्विति सर्पिर्धानस्य बिलमपावर्त्य दक्षिणाग्नावाज्यं विलाप्यादितिरस्यच्छिद्रपत्त्रेत्याज्यस्थालीमादाय महीनां पयो ऽस्योषधीनां रसस्तस्य ते ऽक्षीयमाणस्य निर्वपामि देवयज्याया इति तस्यां पवित्रान्तर्हितायामाज्यं निरुप्येदं विष्णुर्विचक्रम इति दक्षिणाग्नावधिश्रित्येषे त्वेति दक्षिणार्धे गार्हपत्यस्याधिश्रित्योर्जे त्वेत्यपादाय वेदेनोपयम्य पत्न्या उपहरति ।१।

सर्पिर्धीयते यस्मिन्भाण्डे तत्सर्पिर्धानम्। बहुभिरत्र कल्पकारैर्गव्यस्यालाभे ऽजामहिष्योराज्यं तदभावे तैलं च प्रतिनिधेयमुक्तं यथा तदभाव आजं माहिषं वा तदभावे तैलमित्यादि। तत्र प्रतिनिधित्वात्तैलस्याप्याज्यवद्धर्मा द्रष्टव्यास्ताच्छब्द्यं च। यथोक्तमाश्वलायनेन प्राकृतास्त्वेव मन्त्राणां शब्दाः प्रतिनिधिष्वपीति ॥

तत्सा निमील्य वीक्ष्यानुच्छ्वसन्त्यवेक्षते महीनां पयो ऽसीति ।२।

तूष्णीं निमील्य वीक्ष्य पश्चान्मन्त्रेणावेक्षते। पत्न्यनेकत्वे चावृत्तिर्बौधायनेनोक्ता यथैकैकामाज्यमीक्षयेदिति ॥

तेजो ऽसीत्युत्तरार्धे गार्हपत्यस्याधिश्रयति ।३।

गतः ॥

पत्न्यभावे तेजआदि लुप्यते गार्हपत्ये ऽधिश्रयणम् ।४।

तेज इति मन्त्रस्यादिर्यस्याधिश्रयणस्य तत्तेजआदि। तद्गार्हपत्ये-ऽधिश्रयणं पत्न्यभावे लुप्यते तदीक्षणाभावात्॥ तथा च ब्राह्मणं अमेध्यं वा एतत्करोति यत्पत्न्यवेक्षते गार्हपत्ये ऽधिश्रयति मेध्यत्वा-येति॥ अधिश्रयणान्तरं तु भवत्येव पत्न्यभावनिमित्तं च प्रागेव व्याख्यातम्॥ तत्र पत्नीमन्त्राणां प्रतिषेधमाह बौधायनः यथा यजमानायतन आसीनो जयमान एवैतान्मन्त्रान्निगदेदिति। तथा नैवैनानाद्रियेतेति च॥

तेजसे त्वेत्यपादाय तेजो ऽसि तेजो ऽनुप्रेहीति हर-ति। अग्निस्ते तेजो मा विनैदित्याहवनीये ऽधिश्रित्या-ग्नेर्जिह्वासीति स्फ्यस्य वर्त्मन्सादयति। ५।

गतौ॥

आज्यमसि सत्यमसीत्यध्वर्युर्यजमानश्च निमील्य वीक्ष्यानुच्छ्वसन्तावाज्यमवेक्षेते। ६।

पत्न्यवेक्षणेन व्याख्यातः॥

अथैनदुदगग्राभ्यां पवित्राभ्यां पुनराहारमुत्पुनाति। ७।

इति षष्ठी कण्डिका।

शुक्रमसीति प्रथमं ज्योतिरसीति द्वितीयं तेजो ऽसीति तृतीयम्। १।

पुनराहारमविच्छेदेन पुनराहृत्याहृत्य॥

पूर्ववदाज्यलिप्ताभ्यां प्रोक्षणीरुत्पूयानिष्कासिना स्रुवेण वेदमुपभृतं कृत्वान्तर्वेद्याज्यानि गृह्णाति २।

अनिष्कासिना निष्कासः शेषः वारुण्ये निष्कासेनेति दर्शनात्। स्रुवेोद्धृतं निःशेषं गृह्णातीत्यर्थः। वेदमुपभृतं कृत्वा वेदेनोपयम्य स्रुचम्॥

समंबिलं धारयमाणो जुह्वां मध्यदेश उपभृति भूमौ प्रतिष्ठितायां ध्रुवायाम्। ३।

समंबिलं जुह्वा बिलमाज्यस्थाल्या बिलेन समम्। मध्यदेश उपभृति तस्या एव मध्यदेश उपभृतो बिलं धारयमाण उपभृति गृह्णातीत्यर्थः। ध्रुवायां तु सह वेदेन प्रतिष्ठितायां गृह्णाति॥

चतुर्जुह्वामष्टावुपभृति चतुर्ध्रुवायाम्। ४।

गतः॥

पशुकामस्य वा पञ्चगृहीतं ध्रुवायां यथाप्रकृतीतरयोः। ५।

इतरयोर्यथाप्रकृति चतुरष्टकत्वस्येत्यर्थः। वाशब्दः पूर्वविधिविकल्पार्थः पदव्यावृत्त्यर्थो वा॥

दर्शपूर्णमासौ



दशगृहीतमुपभृति पञ्चगृहीतमितरयोरित्येके । ६ ।

नायं कल्पः काम्येन पूर्वेण विकल्पते किं तु पूर्वतरेण नित्येन । स चायं पञ्चावत्तिविषय इति केचित् । तदयुक्तं द्विः पञ्चावत्तिन इत्यादिवद्विशेषावचनात् आज्यभागप्रभृत्यवदानविधिष्वेव तद्वचनाच्च । तस्मादविशेषेण सर्वविषय एवायं कल्पो युक्तः ॥

भूयो जुह्वामल्पीय उपभृति भूयिष्ठं ध्रुवायाम् । ७ ।

गतः ॥

शुक्रं त्वा शुक्रायामिति त्रिभिः पञ्चानां त्वा वातानामिति च द्वाभ्यां जुह्वां चतुः पञ्चकृत्वो वा प्रतिमन्त्रम् । ८ ।

शुक्रं त्वेत्यादिषु त्रिषु धाम्नेधाम्न इत्यादेरनुषङ्गः ॥

पञ्चानां त्वा दिशां पञ्चानां त्वा पञ्चजनानां पञ्चानां त्वा सलिलानां धर्त्राय गृह्णामि पञ्चानां त्वा पृष्ठानां धर्त्राय गृह्णामि धामासि प्रियं देवानामनाधृष्टं देवयजनं देववीतये त्वा गृह्णामीति चरोस्त्वा पञ्चबिलस्येति च पञ्चभिरुपभृत्यष्टकृत्वो दशकृत्वो वा प्रतिमन्त्रम् । ९ ।

उपभृति प्रयाजानुयाजार्थौ द्वाविमौ पञ्चमन्त्रकौ गणौ तद्द्योतकश्च पञ्चममन्त्रान्त इतिकरणः । तत्र यदाष्टगृहीतं तदा गणाभ्यथोः

पञ्चमदशमयोर्लोपः। तथा प्रायणीयोदयनीययोः प्रयाजानुयाजानामन्यतराभावे तदर्थस्य गणस्य लोपः॥

**शेषेण ध्रुवायां चतुः पञ्चकृत्वो वा प्रतिमन्त्रम्।१०।**

शेषेणानुवाकशेषेण॥

**नोत्कर आज्यानि सादयति।११।**

गतः॥

**नान्तर्वेदि गृहीतस्य प्रतीचीनं हरन्ति।१२।**

अन्तर्वेदि गृहीतं स्रुग्गतमाज्यं न पश्चाद्धरन्ति॥ कः प्रसङ्गः। पत्नीसंयाजेषु ध्रौवप्राप्तेर्दर्विहोमाणाम्। केचित्त्वत एव प्रतिषेधात्पूर्वाग्निवर्तिनो दर्विहोमानपि ध्रौवादिच्छन्ति। तन्मन्दं तस्मादर्विहोमसमाचार्यत्वे ऽप्येवं प्रतिषेधोपपत्तेः स्रुवेण ध्रुवाया आज्यमादायेत्याघारे यत्नविशेषाच्च। ब्राह्मणमपि प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशदिति प्रकृत्य तस्माद्यजन्त्याज्यभागावुपस्तृणन्त्यभिघारयन्तीति यज्ञार्थतामेव ध्रौवस्य दर्शयति। श्रुत्यन्तरं चाचोदाहरन्ति सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमिति। कात्यायनश्चाह यजतयो ध्रौवादिडाप्राशित्राघारास्चेति॥ तस्माद्यागा एव ध्रौवात्कार्याः। दर्विहोमास्तु तृते वचनादाज्यस्थाल्या इत्येव सांप्रतम्॥

इति सप्तमी कण्डिका।

इति द्वितीयः पटलः॥

दर्शपूर्णमासौ



पूर्ववत्प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य विस्रस्येध्मं कृष्णो ऽस्याखरेष्ठ इति त्रिः प्रोक्षति। वेदिरसीति त्रिर्वेदिं बर्हिरसीति त्रिर्बर्हिः। अन्तर्वेदि पुरोग्रन्थि बर्हिरासाद्य दिवे त्वेत्यग्रं प्रोक्षत्यन्तरिक्षाय त्वेति मध्यं पृथिव्यै त्वेति मूलम्। १।

गताः॥

स्रुच्यग्राण्युपपाय्य मूलान्युपपाययति। २।

उपपाययति क्लेदयति॥

पोषाय त्वेति सहस्रुचा पुरस्तात्प्रत्यञ्चं ग्रन्थिं प्रत्युक्ष्य प्रोक्षणीशेषं स्वधा पितृभ्य इति दक्षिणायै श्रोणेरोत्तरस्याः संततं निनीय पूषा ते ग्रन्थिं विष्यत्विति ग्रन्थिं विस्रंसयति। ३।

सहस्रुचा हस्तेन पुरस्ताद्गतेन स्रुचः प्रत्यञ्चं संतं ग्रन्थिं प्रत्युक्षति। दक्षिणायै दक्षिणायाः॥

प्राञ्चमुद्गूढं प्रत्यञ्चमायच्छति। ४।

संनहनकाले यदि पश्चात्प्रागुद्गूढो ग्रन्थिस्तं पुच्छे गृहीत्वा पश्चादाकर्षति। प्रागपवर्गत्वापवादार्थं वचनम्॥

विष्णो स्तूपो ऽसीति कर्षन्निवाहवनीयं प्रति प्रस्तरमपादत्ते नोद्यौति न प्रयौति न प्रतियौति न विक्षिपति न प्रमार्ष्टि न प्रतिमार्ष्टि नानुमार्ष्टि। ५।

प्रस्तरमाहवनीयं प्रति बर्हिषः कर्षन्निव शनैरादत्ते। नोद्यौति नोर्ध्वं हरति। न च प्रयौति न च प्रकर्षेण पुरस्ताद्धरति। न च प्रतियौति न प्रतीचीनं हरति। न विक्षिपति इतस्ततो न चालयति। न प्रमार्ष्टि न तिर्यङ्मार्ष्टि सव्येन तत्सहहस्तेन वा दक्षिणेन। न प्रतिमार्ष्टि न प्रतिलोमं मार्ष्टि। नानुमार्ष्टि नानुलोमम् ॥

अयं प्राणश्चापानश्च यजमानमपिगच्छताम्। यज्ञे ह्यभूतां पोतारौ पवित्रे हव्यशोधने। यजमाने प्राणापानौ दधामीति तस्मिन्पवित्रे अपिसृज्य प्राणापानाभ्यां त्वा सतनुं करोमीति यजमानाय प्रयच्छति। यजमानो ब्रह्मणे। ६।

अपिसृज्य क्षिप्त्वा। गतः शेषः ॥

ब्रह्मा प्रस्तरं धारयति यजमानो वा। ७।

स्वयमेव वा यजमानो धारयति न ब्रह्मणे प्रयच्छतीति भावः ॥

इत्यष्टमी कण्डिका।

दर्भैर्वेदिमन्तर्धाय दक्षिणतः संनहनं स्तृणात्यक्ष्णया वा । १ ।

संनहनं शुल्बम्। दक्षिणतः प्राचीनं प्रागुदीचीनं वा स्तृणाति निदधाति यद्वा विस्रस्य दर्भान्स्तृणाति। तद्वत्संनहनं विस्रस्येति कात्यायनबौधायनौ ॥

ऊर्णाम्रदसं त्वा स्तृणामीति बर्हिषा वेदिं स्तृणाति बहुलमनतिदृश्यं प्रागपवर्गं प्रत्यगपवर्गं वा त्रिधातु पञ्चधातु वा । २ ।

बहुलं भूयिष्ठम्। अनतिदृश्यं यथा तृणान्यतीत्य न दृश्यते भूमिस्तथा। त्रिधातु त्रिसंधि ॥

अग्रैर्मूलान्यभिच्छादयति । ३ ।

प्रागपवर्गपक्षे ऽप्येतत्समानमित्यनुसंधातव्यम् ॥

धातौधातौ मन्त्रमावर्तयति । ४ ।

गतः ॥

प्रस्तरपाणिः संस्पृष्टान्परिधीन्परिदधाति गन्धर्वो ऽसि विश्वावसुरित्येतैः प्रतिमन्त्रमुदगग्रं मध्यमं प्रागग्रावितरौ । ५ ।

संस्पृष्टानन्योन्यम् ॥

आहवनीयमभ्यग्रं दक्षिणमवाग्रमुत्तरम् । ६ ।

आहवनीयं प्रत्यभिमुखाग्रं दक्षिणं परिदधाति विपरीताग्रमुत्तरम्॥

**सूर्यस्त्वा पुरस्तात्पात्वित्याहवनीयमभिमन्त्र्योपर्याहवनीये प्रस्तरं धारयन्नग्निं कल्पयति। ७।**

पुरोभागपरिधानार्थमभिमन्त्रणं मन्त्रलिङ्गात्। तथा न पुरस्तात्परिदधात्यादित्यो ह्येवोद्यन्पुरस्ताद्रक्षांस्यपहन्तीति वाक्यशेषात्। अथ सूर्येण पुरस्तात्परिदधाति सूर्यस्त्वा पुरस्तात्पात्विति बौधायनवचनाच्च। तेनोपसद्दवम्र्यादिषु परिध्यभावे न भवत्यभिमन्त्रणम्। कल्पयति बलवन्तं करोति॥

**अनूयाजार्थे प्राची उल्मुके उदूहतीति वाजसनेयकम्। ८।**

अथानूयाजार्थे द्वे उल्मुके उदूहति प्राग्भागगते करोति। वाजसनेयग्रहणमादरार्थं न तु कल्पनेन विकल्पार्थं अपिसृज्योल्मुके इत्युत्तरत्र नित्यवदनुवादात् उल्मुके उदूह्याहवनीयं कल्पयित्वेति सत्याषाढेन व्यक्तवचनाच्च॥

**मध्यमं परिधिमुपस्पृश्योर्ध्वे आघारसमिधावादधाति। ९।**

सकृदुपस्पृश्य परिधिं समिधावूर्ध्वाग्रे आदधाति। कुत्र। मध्येऽग्नेरिति भारद्वाजः॥

**वीतिहोत्रं त्वा कव इति दक्षिणां समिदस्यायुषे त्वेत्युत्तराम्। १०।**

दर्शपूर्णमासौ



दक्षिणोत्तरत्वं मिथः ॥

तूष्णीं वा । ११ ।

उत्तरामिति शेषः । आनन्तर्याद्यजुषान्यां तूष्णीमन्यामिति श्रुतेश्च ॥

समावनन्तर्गर्भौ दर्भौ विधृती कुरुते । १२ ।

विधृती कुरुते विधृतित्वेन कल्पयति ॥

विशो यन्त्रे स्थ इत्यन्तर्वेद्युदगग्रे निधाय वसूनां रुद्राणामादित्यानां सदसि सीदेति तयोः प्रस्तरमत्यादधाति । १३ ।

विशो यन्त्रे स्थ इति निधाने मन्त्रो न करणे । सादयति विशो यन्त्रे स्थ इति कल्पान्तरेषु व्यक्तदर्शनात् ॥

अभिहृततराणि प्रस्तरमूलानि बर्हिर्मूलेभ्यः । १४ ।

यत्र धातौ प्रस्तरः साद्यते तद्बर्हिर्मूलेभ्य प्रस्तरमूलान्यभिहृततराणि आहवनीयाभिमुखं पुरस्ताद्धृतानि भवन्ति ॥

जुहूरसि घृताचीत्येतैः प्रतिमन्त्रमनूचीरसंस्पृष्टाः स्रुचः प्रस्तरे सादयति । १५ ।

जुहूरसीत्यनुषक्तरूपनिर्देश उपभृद्ध्रुवयोरपि प्रदर्शनार्थः । अनूचीः प्राचीः । असंस्पृष्टा मिथः ॥

इति नवमी कण्डिका ।

अपि वा जुह्वमेव प्रस्तरे । १ ।

सादयतीत्यन्वयः । अस्मिन्कल्पे सर्वासां सादनप्रकारमाह ॥

समं मूलैर्जुह्वा दण्डं करोति। उत्तरेण जुह्वमुपभृतं प्रतिकृष्टतरामिवाधस्ताद्विधृत्योः । उत्तरेणोपभृतं ध्रुवां प्रतिकृष्टतरामिवोपरिष्टाद्विधृत्योः । २ ।

यथा प्रस्तरमूलसमं जुह्वमूलं भवति तथा जुह्वं सादयित्वा तस्या ईषत्प्रतिकृष्टां प्रत्यक्कृष्टामुपभृतं सादयति तस्या अपि प्रतिकृष्टतरां ध्रुवाम् ॥

ऋषभो ऽसि शाक्वरो घृताचीनां सूनुः प्रियेण नाम्ना प्रिये सदसि सीदेति दक्षिणेन जुह्वं स्रुवं सादयत्युत्तरेणोत्तरेण वा ध्रुवाम् । ३ ।

गतः ॥ तूष्णीमाज्यस्थाल्यप्यासाद्या तस्या अपि याजमानदर्शनात् ॥

एता असदन्निति स्रुचो ऽभिमन्त्र्य विष्णूनि स्थ वैष्णवानि धामानि स्थ प्राजापत्यानीत्याज्यानि कपालवत्पुरोडाशादङ्गारानपोह्य सूर्य ज्योतिर्विभाहि महत इन्द्रियायेत्यभिमन्त्र्याप्यायतां घृतयोनिरग्निर्हव्यानुमन्यताम् । खमङ्क्ष्व त्वचमङ्क्ष्व सुरूपं त्वा वसुविदं पशूनां तेजसाग्नये जुष्टमभिघारयामीत्याग्नेयं पुरोडाशमभिघारयति तूष्णीमुत्तरम् । ४ ।

स्रुच इति सस्रुवा गृह्यन्ते एतावसदतामिति लिङ्गात्। आज्यानीति च स्रुग्गतानि स्रुचामधिकारात्। केचित्त्वाज्यानीत्यविशेषवचनादाज्यस्थाल्या आसादितत्वाच्च तद्गतस्याप्यभिमन्त्रणमिच्छन्ति। समानजातीयेनेति न्यायेनाङ्गारापोहनादीनां प्रवृत्तिक्रमः। हविरभिमन्त्रणमन्त्रस्यैकाभिधायित्वादावृत्तिः अभिघारणमन्त्रस्याग्नेयार्थत्वात्तद्विकारेष्वेव भवति। तत्र च देवतावाचिनो द्वितीयाग्निशब्दस्यैवोहः॥

यस्त आत्मा पशुषु प्रविष्टो देवानां निष्ठामनु यो वितस्थे। आत्मन्वान्सोम घृतवान्हि भूत्वा देवान्गच्छ सुवर्विन्द यजमानाय मह्यमिति प्रातर्दोहम्। ५।

गतः॥

स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि त इति पात्र्यामुपस्तीर्याद्रिः प्रथस्तुर्भुवनस्य गोपाः शृत उत्स्नाति जनिता मतीनामित्यपर्यावर्तयन्पुरोडाशमुद्वास्य। ६।

इति दशमी कण्डिका।

---

वेदेन भस्म प्रमृज्य तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति पात्र्यां प्रतिष्ठापयति। १।

सदनकरणं सर्वस्य कृत्वोद्वासनादि प्रतिष्ठापनान्तमेकैकस्य करोति। सदनकरणाद्येकैकस्येत्यन्ये। ततः प्रातर्दोहमुद्वासयति॥

तूष्णीं यवमयम्। २।

यदा यवान्निर्वपति तदा तूष्णीं प्रतिष्ठापयति। व्रीहीणामिति लिङ्गविरोधादिति भावः। एवं च विकृतावपि यवमयं तूष्णीमिति सिद्धं भवति॥

इरा भूतिः पृथिव्यै रसो मोत्क्रमीदिति स्रुवेण कपालानि प्रत्यज्य देवस्त्वा सविता मध्वानक्त्विति स्रुवेण पुरोडाशमनक्ति स्वक्तमकूर्मपृषन्तमपरिवर्गमनिकाषम् । ३ ।

कपालाञ्जनमन्त्रस्य प्रतिकपालयोगमावृत्तिः। अविभवादेकैकशः कपालानीति तु सत्याषाढः। पुरोडाशग्रहणात्सांनाय्ययोर्न भवत्यलंकरणम्॥ पृषदिव पृषद्बिन्दुर्यस्य नास्ति सोऽकूर्मपृषन्। नुम् छान्दसः। क्वचित्क्वचिन्नानक्तो भवतीत्यर्थः॥ परिवर्गो विच्छेदः। निकाषो निकषणम्। तौ यथा न भवतस्तथानक्तीत्यर्थः। णमुलन्तौ वा। णकारश्छान्दसः॥

उपरिष्टादभ्यज्याधस्तादुपानक्ति। ४।

अधस्तादञ्जनं हस्तेन पर्यावर्तनप्रतिषेधात्। तथा हस्तेनाधस्तादुपानक्तीति सत्याषाढः॥

चतुर्होत्रा पौर्णमास्यां हवींष्यासादयेत्पञ्चहोत्रामावास्यायाम्। ५।

युगपदासादनं सर्वेषामसंभवे त्वावृत्तिर्मन्त्रस्य॥

दर्शपूर्णमासौ



प्रियेण नाम्ना प्रियं सद आसीदेति यदन्यद्धविर्दर्शपूर्णमासिकेभ्यस्तदेतेनासादयेदिति विज्ञायते। ६।

केचित्तु प्राकृत एव हविरासादने मन्त्रमेतं विदधति। तन्निरासार्थमस्य वैकृतत्वप्रदर्शनम्। तेनास्य विकृत्यर्थमुत्पन्नत्वाद्विवक्षय्वनूहः। एकवचनं तु अयं यज्ञः समसददित्यादिवद्यज्ञादिरूपेण हविःसमुदायाभिधानं द्रष्टव्यम्॥

अपरेण स्रुचः पुरोडाशावासादयति। ७।

गतः॥

उत्तरौ दोहौ। ८।

कस्मादुत्तरौ। स्रुग्भ्य इति ब्रूयात् तासामेवावधित्वेनाधिकारात्। पुरोडाशाभ्यां वा रौद्र उत्तर इत्यादावनवधिमत्तया कृतस्याप्यवधित्वदर्शनात्॥

अपि वा मध्ये वेद्याः सांनाय्यकुम्भ्यौ संदधाति पूर्वं शृतमपरं दधि। अथैने व्युदूहति दक्षिणस्यां श्रोण्यां शृतमासादयत्युत्तरस्यां दधि। ९।

हस्तस्थे एव कुम्भ्यौ सकृद्वेदिमध्ये संश्लेष्य ततस्ते व्युदूहति विभज्य गमयति॥

अयं वेदः पृथिवीमन्वविन्दद्गुहा सतीं गहने गह्वरेषु। स विन्दतु यजमानाय लोकमच्छिद्रं यज्ञं भूरि-

कर्मा करोत्वित्यग्रेणोत्तरेण वा ध्रुवां वेदं निधाय वेद्यन्तान्परिस्तीर्य होतृषदनं कल्पयित्वा सामिधेनीभ्यः प्रतिपद्यते । १० ।

वेदिं परिस्तीर्येति यावानर्थस्तावानेव वेद्यन्तान्परिस्तीर्येति । यद्वा यत्र हवींषि सादितानि तान्वेदिप्रदेशानित्यर्थः । तथा सति महावेद्यामपि परितो हवींषीदं स्तरणं न परितो वेदिमिति सिद्धं भवति । सामिधेनीभ्यः प्रतिपद्यते तदर्थमिध्माधानादि प्रक्रमते ॥

इत्येकादशी कण्डिका ।

इति तृतीयः पटलः ॥

अग्नये समिध्यमानायानुब्रूहीति संप्रेष्यति समिध्यमानायानुब्रूहीति वा । १ ।

ब्रूहीत्यूकारः श्रावयितव्यः ॥

पञ्चदश सामिधेनीरन्वाह । २ ।

होतेति शेषः । परिभाषायामथ पञ्चदशकल्पः सर्वेषामविशेषेणोक्तः पञ्चदश सामिधेन्यो दर्शपूर्णमासयोरिति । स एवात्रानूदितो वक्ष्यमाणैः कल्पैर्विकल्पार्थं तेन राजन्यवैश्यवज्ञयाजिकल्पैरपि स विकल्पते ॥

त्रींस्त्रचानित्युक्तम् । ३ ।

दर्शपूर्णमासौ



चौंसूचानित्यनुवाके नित्याः। काम्या नैमित्तिकाश्च सामिधेनीकल्पा उक्ताः। ते ऽपि यथाब्राह्मणमनुसंधेया इत्यर्थः॥

प्रणवेप्रणवे समिधमादधाति। ४।

गतः॥

सामिधेनीविवृद्धौ काष्ठानि विवर्धन्ते। प्रतिह्रसमानासु प्रकृतिवत्। ५।

वृद्धिह्रासौ पञ्चदशापेक्षया। प्रकृतिवत्प्रकृत्या पाञ्चदश्येन तुल्यमित्यर्थः। एतदुक्तं भवति चौंसूचाननुब्रूयात्। एकां सामिधेनीं त्रिरन्वाहेत्यादिषु सामिधेनीह्रासे न समिधामपि ह्रास उक्तः। किं तु ताः पञ्चदशैव समशो विभज्याधेया इति। वक्ष्यति च पित्र्यायां समश इध्मं चैधं विभज्य त्रिरादधातीति। परिधानीयायामाधेयाः शिष्टा इत्यन्ये॥

समिद्धो अग्न आहुतेत्यभिज्ञायैकामनूयाजसमिधमवशिष्य सर्वमिध्मशेषमभ्यादधाति परिधानीयायां वा। ६।

परिधानीयोत्तमा॥

वेदेनाग्निं त्रिरुपवाज्य स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्यासीन उत्तरं परिधिसंधिमन्ववहृत्य प्रजापतिं मनसा ध्यायन्दक्षिणाप्राञ्चमृजुं संततं ज्योतिष्मत्याघारमाघारयन्सर्वाणीध्मकाष्ठानि संस्पर्शयति। ७।

उपवाजनमुपवीजनम् । तच्चादृष्टार्थं न तु दीप्त्यर्थं त्रिरिति नियमात् उदकमुपवाज्येत्यवभृथे सत्याषाढवचनाच्च । तस्मादवभृथेऽपीष्यते ॥ परिधिसंधिमनु तेन मार्गेणावहृत्य प्रपाद्य प्रजापतिं मनसा ध्यायन्देवतात्वेन तस्मान्मनसा प्रजापतये जुह्वतीति श्रुतेः ॥ ऋजुमवक्रम् । संततमविच्छिन्नधारम् । ज्योतिष्मति ज्वलत्यग्नौ । आघारयन्दीर्घधारां कुर्वन् ॥

आघारयोर्वदत्यृजू प्राञ्चौ होतव्यौ तिर्यञ्चौ वा व्यतिषक्तावव्यतिषक्तौ वा । ८ ।

आघारयोरेतान्विकल्पान्वदति ब्राह्मणम् । के ते । ऋजू प्राञ्चावित्येकः कल्पः । तिर्यञ्चौ मिथो व्यतिषक्ताविति द्वितीयः । तावेवाव्यतिषक्तावृजू इति तृतीयः ॥

स्रुवेणाज्यस्थाल्या आज्यमादायाप्यायतां ध्रुवा घृतेनेत्यवदायावदाय ध्रुवामाप्याययतीति सार्वत्रिकम् । ९ ।

प्रतिस्रुवमाप्यायनं वीप्सावचनात् । सार्वत्रिकमिति न केवलमाघारे किं तु सर्वेष्वेव कर्मसु यत्र ध्रौवादवद्यादित्यर्थः । मन्त्रस्तु प्रकरणादैष्टिक एवाप्यायन इत्येके ॥

अग्नीत्परिधींश्चाग्निं च त्रिस्त्रिः संमृड्ढीति संप्रेष्यति । १० ।

गतः ॥

इति द्वादशी कण्डिका ।

दर्शपूर्णमासौ



इध्मसंनहनैः सहस्पर्यैर्ऋतेस्पर्यैर्वाग्नीध्रो ऽनुपरिक्रामं परिधीन्यथापरिधितमन्वग्रं त्रिस्त्रिः संमृज्याग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजं जेष्यन्तं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्यायेति त्रिरग्निं प्राञ्चम्। १।

अनुपरिक्रामं तंतं परिधिदेशं गत्वा। यथापरिधितं येन क्रमेण परिहितास्तेन क्रमेण। धकारश्छान्दसः। अन्वग्रं मूलादारभ्याग्रात्॥

भुवनमसीत्यग्रेण ध्रुवां जुहूं वाञ्जलिं कृत्वा जुह्वेहीति जुहूमादत्त उपभृदेहीत्युपभृतम्। २।

अञ्जलिराहवनीयनमस्कारार्थः। मन्त्रलिङ्गात्तस्मा एव नमस्करोतीति मन्त्रविधिवाक्यशेषात् आहवनीयायाञ्जलिं करोतीति भारद्वाजवचनाच्च। दक्षिणस्य व्यापृतत्वात्सव्येनादानमुपभृतः। तथा सव्येनोपभृतमित्येव बौधायनः॥

सुयमे मे अद्य घृताची भूयास्तं स्वावृतौ सूपावृतावित्युपभृति जुहूमत्यादधाति। ३।

अत्यादधाति स्थापयति॥

मुखतो ऽभिहृत्य मुखत उपावहरति। ४।

अत्यादधत् जुहूमुपभृति मुखेनाभिहृत्याभिमुखं हृत्वात्यादधाति। तथा होमार्थमुपावहरन्मुखत एवोपावहरति अपादत्ते॥

सर्वत्रैवमत्याधानोपावहरणे भवतः। ५।

अन्यत्राप्यत्याधानोपावहरणे एवमनन्तरोक्तप्रकारेण मुखतो भवतः। मन्त्रस्तु प्रकरणादाघारार्थ एवेष्टो नान्यत्र॥

न च संशिञ्जयति नाभिदेशे च स्रुचौ धारयति। ६।

चशब्दादेतदपि द्वयं सार्वत्रिकम्। संशिञ्जयति शब्दाययति॥

अग्नाविष्णू मा वामवक्रमिषमित्यग्रेण स्रुचो ऽपरेण मध्यमं परिधिमनवक्रामं प्रस्तरं दक्षिणेन पदा दक्षिणातिक्रामत्युदक् सव्येन। ७।

अनवक्राम पदा प्रस्तरमनवक्रम्यानवक्रम्य। दक्षिणेन सव्येनेति तयोः प्राथम्यनियमः अनवक्राममित्याभीक्ष्ण्यवचनात्। अयमपि मन्त्रवर्जं सार्वत्रिको विधिः। तथा चोत्तरत्र वक्ष्यति॥

एतद्वा विपरीतम्। ८।

सव्येनातिक्रम्य दक्षिणेन प्रत्याक्रामतीत्यर्थः॥

विष्णो स्थानमसीत्यवतिष्ठते। ९।

गतः॥

अन्तर्वेदि दक्षिणः पादो भवत्यवघ्रः सव्यः। १०।

दक्षिणावघ्रः सव्यः। तत्पार्ष्णिसंस्पृष्टाङ्गुलिरित्यर्थः॥

अथोर्ध्वस्तिष्ठन्दक्षिणं परिधिसंधिमन्ववहृत्य। ११।

इति त्रयोदशी कण्डिका।

दर्शपूर्णमासौ



समारभ्योर्ध्वो अध्वर इति प्राञ्चमुदञ्चमृजुं संततं ज्योतिष्मत्याघारमाघारयन्सर्वाणीध्मकाष्ठानि संस्पर्शयति। १।

ऊर्ध्वो ऽप्रक्तः। शेषस्तु व्याख्यातः पूर्वाघारे। तत्राघारे धारायां चादिसंयोग इति न प्रस्मर्तव्यम्॥

यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्येत्युक्तम्।२।

प्रमायुको मरणधर्मा। जिह्मं वक्रम्॥ ब्राह्मणप्रदर्शनमृजुत्वादरार्थम्॥

ऊर्ध्वमाघार्य विच्छिन्द्याद्द्वेष्यस्य। ३।

ऊर्ध्वमाघार्य नाभिदेशादूर्ध्वमुद्गृहीतया स्रुचा धारामारभ्य मध्ये विच्छिन्द्यात्॥

व्यृपरवा। ४।

इतइतो विकिरन्वा धारां विच्छिन्द्यादित्यर्थः। एकारश्छान्दसः। यजमानस्याद्वेष्यत्वान्नैवं विच्छेत्तव्यमिति भावः॥

न्यञ्चं वृष्टिकामस्य। ५।

न्यञ्चं नाभिदेशान्नीचैः सत्या स्रुचाघारयेदित्यर्थः॥

द्वेष्यस्येत्येके। ६।

नीचैराघारो द्वेष्यस्य। तस्मादर्जनीय इत्येक इति भावः॥

ऊर्ध्वमाघारं स्वर्गकामस्य भूयिष्ठमाहुतीनां जुहु-यात्। ७।

पूर्ववदूर्ध्वं सर्वाहुतीनां मध्ये भूयिष्ठं च स्वर्गकामस्य जुहुयात्॥

अपि वा नाघारयेत्पूर्वार्धे मध्ये पश्चार्धे वा जुहु-यात्। ८।

नाघारयेदित्याघारगुणप्रतिषेधः। दीर्घधारादिसंयोगादयो धर्मा न भवन्तीत्यर्थः॥

हुत्वाभिप्राणिति। ९।

आघारस्योपरि श्वसिति॥

बृहद्भा इति स्रुचमुद्गृह्य पाहि माग्ने दुश्चरितादा मा सुचरिते भजेत्यसंस्पर्शयन्स्रुचौ प्रत्याक्रामति। १०।

गतः॥

एते एवाक्रमणप्रत्याक्रमणे मन्त्रवती भवतः। ११।

इत्थमन्यत्र मन्त्रपर्युदासात्ततोऽन्येषामाक्रमणप्रत्याक्रमणधर्माणां सार्व-त्रिकत्वं स्पष्टीकृतं भवति। स्रुचोरसंस्पर्शननियमनं मन्त्रस्यात्रैवेष्यते प्राण आघारः यत्संस्पर्शयेदिति तन्निन्दार्थवादस्याघारसंयोगात्॥

मखस्य शिरोऽसीति जुह्वा ध्रुवां द्विस्त्रिर्वा सम-नक्ति। १२।

दर्शपूर्णमासौ



ध्रुवेति ध्रुवास्थमाज्यं लक्ष्यते ज्योतिषा ज्योतिरङ्क्तामिति लिङ्गात् ॥

उन्नीतं राय इति स्रुवेण ध्रुवाया आज्यमादाय सुवीराय स्वाहेति जुहूमभिघार्य जुह्वो ऽपादाय यज्ञेन यज्ञः संतत इति ध्रुवां प्रत्यभिघार्यायतने स्रुचौ सादयित्वा ॥ १३ ॥

इति चतुर्दशी कण्डिका ।

क इदमध्वर्युर्भविष्यति स इदमध्वर्युर्भविष्यति यज्ञो यज्ञस्य वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु वाचं प्रपद्ये भूर्भुवः सुवर्विष्णो स्थाने तिष्ठामीतीध्मसंनहनानि रूप्य उपसंगृह्य वेद्याश्च तृणमव्यन्तमादायोत्तरतः प्रवरायावतिष्ठेते पूर्वो ऽध्वर्युरपर आग्नीध्रः । १ ।

जुह्वो जुह्वाः । उपसंगृह्योपश्लिष्य । अव्यन्तं वेद्या अविगतमन्तं वेद्यन्तस्थमूलमिति यावत् वेद्या अविगतान्तं वा । उत्तरतः वेद्या एवोत्तरतः । तत्रोत्तरत उत्कर इति तु भारद्वाजबौधायनौ । प्रवराय प्रवरं वक्तुं तिष्ठति तल्लिङ्गत्वान्मन्त्रस्य । व्यवहितेनाप्यवतिष्ठेते इत्यनेनान्वयः ॥

इध्मसंनहनान्याग्नीध्रो ऽन्वारभ्य क इदमग्नीद्भविष्यति स इदमग्नीद्भविष्यतीति मन्त्रं संनमति । २ ।

इध्मसंनहनान्येवाग्नीध्रो ऽन्वारभते न स्फ्यदण्डे ॥

ब्रह्मन्प्रवरायाश्रावयिष्यामीति ब्रह्माणमामन्त्र्याश्रावयो श्रावय श्रावयोमाश्रावयेति वाश्रावयति । ३ ।

अत्र तृतीयो निगदस्त्र्यक्षरश्चतुर्थः प्रणवादिः ॥ तेषु चाद्ययोरग्नीत्प्रेषणे परस्य चेति प्रथमद्वितीयावचौ प्लवेते नान्यत्र। तावेवोदाहृत्यात्रैवायं प्लुत इष्यत इति नियमात्। केचित्तु चतुर्थे ऽपि प्रणवादुत्तरौ प्लावयन्ति प्रथम एव निगदः प्रणवाधिक इति कृत्वा ॥

अस्तु श्रौषडित्याग्नीध्रो ऽपरेणोत्करं दक्षिणामुखस्तिष्ठन्स्फ्यं संमार्गांश्च धारयन्प्रत्याश्रावयति । ४ ।

संमार्गा इध्मसंनहनानि। तेषां स्फ्यस्य च धारणं प्रवरादन्यत्रेति द्रष्टव्यं प्रवरे तेषामध्वर्युणा धृतत्वात्। श्रौषडित्यौकारं प्लावयति ॥

आग्नीध्रे सोमे । ५ ।

सोमे त्वाग्नीध्रागारे तिष्ठन् ॥

सर्वत्रैवमाश्रुतप्रत्याश्रुते भवतः । ६ ।

आश्रुतमाश्रावणम् ॥

इति पञ्चदशी कण्डिका ।

इति चतुर्थः पटलः ॥

अनपव्याहरन्तः प्रचरन्ति । १ ।

मन्त्रादन्यस्य वचनमनपव्याहारः । तमवदानाद्या प्रदानान्न कुर्युः सर्वे प्रचरितारः । एतदेव प्रपञ्चयति ॥

आश्रावयिष्यन्नान्यदाश्रावणाद्ब्रूयादाश्राविते नान्यदाग्नीध्रः प्रत्याश्रावणात् । प्रत्याश्राविते नान्यदध्वर्युर्यजेति वचनाद्यजेत्युक्ते होता नान्यद्वषट्कारात् । २ ।

गतः ॥

यद्यन्यद्ब्रूयात्पुनरेवाश्रावयेत् । ३ ।

यद्येतेषां कश्चिदपव्याहरेत्पुनरेवाश्रावणादि सर्वमावर्तयेत् । तत्राश्रावणमात्रवचनं तस्मिन्नुक्त इतरेषामर्थसिद्धत्वाभिप्रायम् ॥

व्याहृतीर्वा जपेत् । ४ ।

अपव्याहृत्येति शेषः ॥

ऊर्ध्वज्ञुमासीनं होतारं वृणीतेऽग्निर्देवो होता देवान्यक्षद्विद्वांश्चिकित्वान्मनुष्वद्भरतवदमुवदमुवदिति यथार्षेयो यजमानः । ५ ।

देवहोतृरूपेण स्वरूपेण च मानुषस्य होतुर्देवेज्याप्रार्थनं वरणमग्निर्देवो होतेत्यादिमन्त्रलिङ्गात् । ब्राह्मणे च य एव देवानां होता तं वृणीत इति स्तवनात् परुःसोमयोर्दैवं च मानुषं च

होतारौ वृत्वेति वचनाच्च। यथार्षेयः यस्य यजमानस्य यः प्रवरः प्रवरकाण्डे दर्शितस्तस्य तत्रोक्तानृषीनसुवदसुवदिति कीर्तयन्होतारं वृणीते यावन्तः स्युरिति। यथा जमदग्निवदौर्ववद्भृगुवदित्यादि ॥

त्रीन्यथर्षि मन्त्रकृतो वृणीते। ६।

यस्य यजमानस्य य ऋषयो गोत्र ऋषित्वेनोपाख्यायन्ते मन्त्रकृतस्य तांस्त्रीन्वृणीते कीर्तयतीत्यर्थः॥ अत्र चाविशेषेण त्रीन्वृणीत इति वचनात्पञ्चार्षेयस्यापि त्रयाणामेव वरणम्। एकद्व्यार्षेययोस्तु त्रयाणामभावान्निवृत्तिरेवार्षेयवरणस्यापन्ना। तत एव च हेतोः कर्मण्येवानधिकारस्तयोरित्यन्ये। यत्त्वेकं वृणीते द्वौ वृणीते त्रीन्वृणीत इति तदपि त्रित्वविधेरेवावयुत्यानुवादं मन्यन्ते। तथा चाव्यार्षेयस्याह्वानं स्यादिति मीमांसकाः॥

अपि वैकं द्वौ त्रीन्पञ्च। ७।

अपि वा यथासंभवं मन्त्रकृतो वृणीते। एकमेकार्षेयो द्वौ द्व्यार्षेयस्त्रींस्त्र्यार्षेयः पञ्च पञ्चार्षेय इति। तथा चाश्वलायनः यजमानस्यार्षेयान्प्रवृणीते यावन्तः स्युरिति॥

न चतुरो वृणीते न पञ्चातिप्रवृणीते। ८।

तत्र चतुर्ऋषिसंभवे पञ्चभ्योऽधिकर्षिसंभवे च न तेषां वरणमित्यर्थः। अथवात्रैकं द्वौ त्रीन्पञ्चेति नियतविधानादेव संख्यान्तरस्याप्राप्तेर्ज्यामुष्यायणविषयः प्रतिषेधः। तस्य हि गोत्रद्वयवरणाच्चतुःषडादिवरणं प्राप्नोति॥ यथाह सत्याषाढः द्विगोत्रस्य त्रींस्त्रीनेकै-

दर्शपूर्णमासौ



कस्माद्गोत्रादिति। कथं तर्ह्यस्य वरणमिति चेत्तत्तु प्रवरे दर्शयिष्यते। अथ ह्यामुष्यायणानां कुलानामिति॥ आश्वलायनश्चाह तेषामुभयतः प्रवृणीतैकमितरतो द्वावितरतः द्वौ वेतरतस्त्रीनितरतः। नहि चतुर्णां प्रवरो ऽस्ति न पञ्चानामतिप्रवरणमिति॥

इत ऊर्ध्वानध्वर्युर्वृणीते ऽमुतो ऽर्वाचो होता। ९।

इतः प्रवरादारभ्य अमुतः परस्तादारभ्य। तच्चोभयं प्रवरेषूदाहरिष्यति॥

पुरोहितस्य प्रवरेण राजा प्रवृणीते। १०।

प्रवरकाण्डपठितानामेव विधीनामिहोपदेश आदरार्थो द्रष्टव्यः॥

ब्रह्मण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्राबितार इति प्रवरशेषमाह। ११।

प्रवरशेषः प्रवरनिगदस्य शेषः॥

अपि वा नार्षेयं वृणीते। मनुवदित्येव ब्रूयात्। १२।

इदं च संनिहितराजन्यविषयम्। अपि वा यथोक्तं प्रवरं न वृणीते किं तु तत्स्थाने मनुवदित्येतावद्ब्रूयात्॥

सीदति होता। १३।

होतुरासनकालविकल्पार्थं वचनम्। आसीनं वा होतारं वृणीते वृतो वात्र काले निषीदति॥

होतुरुपांशु नाम गृह्णाति मानुष इत्युच्चैः। १४।

गतः॥

वेद्यां तृणमपिसृजति। १५।

यदव्यन्तमात्तं तृणं तत्प्रत्यपिसृजति॥

इति षोडशी कण्डिका।

---

घृतवति शब्दे जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तो ऽपरेणाघारसंभेदं पञ्च प्रयाजान्प्राचो यजति।१।

घृतवति शब्दे घृतवदिति शब्दे अथवा घृतशब्दवति घृतवतीमित्यस्मिन् शब्द उक्त इत्यर्थः। यथा यद्घृतवत्पदमनूच्यत इति॥ सकृदतिक्रान्तो न तु प्रतिप्रयाजम्। आघारसंभेद आघारयोर्व्यतिषङ्गदेशः। प्राचः प्रागपवर्गान्॥

प्रतिदिशं वा समिधः पुरस्तात्तनूनपातं दक्षिणत इडः पश्चाद्बर्हिरुत्तरतः स्वाहाकारं मध्ये। २।

प्रतिदिशं वा यजत्यपरेणैवाघारसंभेदम्॥

सर्वान्वैकध्यम्। ३।

ऐकध्यमिति ध्यमुञो रूपमेकधा। एकस्मिन्देश इत्यर्थः। अपरेणाघारसंभेदमित्येव॥

दर्शपूर्णमासौ



आश्रावमाश्रावं प्रत्याश्राविते समिधो यजेति प्रथमं संप्रेष्यति। यज यजेतीतरान्। ४।

प्रथमं संप्रेष्यति प्रथमं प्रयाजं प्रति होतारं संप्रेष्यतीत्यर्थः। इतरानित्येवमेव योज्यम्। ननु किंदेवत्याः प्रयाजाः। तत्राह बौधायनः ऋतुदेवताः खलु प्रयाजा भवन्तीति। मन्त्रवर्णाश्च भवन्ति। तथा वसन्तमृतूनां प्रीणामीत्यादि ब्राह्मणाच्च॥

यं कामयेताभितरं वसीयान्स्यादित्यभिक्रामं तस्य जुहुयादवतरं पापीयानिति प्रतिक्रामं न वसीयान्न पापीयानिति समानत्र तिष्ठन्। ५।

अभितरं सुतराम्। वसीयान्पुष्टः। अभिक्रामं प्रतिप्रयाजं किंचिदन्तरमग्निमभिक्रम्याभिक्रम्य। अवतरमवकृष्टतरम्। पापीयान्दरिद्रः। यः पुरा भद्रः सन्पापीयान्स्यात्स पुनर्वस्वोरग्निमादधीत पुनरेवैनं वासं वस्वुपावर्तते भद्रो भवतीति लिङ्गात् तथा तस्माच्छ्रेयांसं पापीयान्पश्चादन्वेतीति लिङ्गाच्च। प्रतिक्रामं अग्नेः प्रतीपं क्रान्त्वा। समानत्र तिष्ठन् उभयथाप्यक्रामन्नेकत्र स्थितः॥

चौनिष्कार्धमौपभृतस्य जुह्वामानीयोत्तराविष्ठा प्रत्याक्रम्य शेषेण ध्रुवामभिघार्यानुपूर्वं हवींष्यभिघारयत्युपभृतमन्ततः। ६।

अत्रापि ध्रुवामुपभृतमित्याज्यलक्षणा पशौ नोपभृतमिति लिङ्गात्। हवींष्युत्पत्तिक्रमेणाभिघारयति॥

न हवींष्यभिघारयेद्द्वेष्यस्य । आयतने स्रुचौ साद-
यति । ७ ।

गतौ ॥

इति सप्तदशी कण्डिका ।

इति पञ्चमः पटलः ॥

---

आग्नेयः सौम्यश्चाज्यहविषावाज्यभागौ चतुर्गृहीता-
भ्याम् । १ ।

आज्यभागौ नाम कर्मणी । तावाज्यहविष्कौ चतुर्गृहीताभ्यां चाज्याभ्यां
कार्यौ ॥ अथाज्यभागप्रसङ्गात्सर्वान्दर्विहोमसाधारणान्धर्मानाह ॥

जमदग्नीनां तु पञ्चावत्तमप्यजामदग्न्यो जामदग्न्य-
मामन्त्र्य पञ्चावत्तं कुर्वीत सर्वत्र । २ ।

यत्रयत्र चतुरवत्तचोदना तत्र जमदग्निगोत्राणां पञ्चावत्तं भवति
यथा यच्चतुरवत्तं जुहोतीत्यादौ । तथाजामदग्न्यो ऽपि पञ्चावत्त-
मिच्छञ्जामदग्न्यमनुज्ञाप्य पञ्चावत्तं कुर्वीत । सार्वत्रिकमिति वक्ष्य-
माणेनैव सिद्धे सर्वत्रेति वचनमसंदेहार्थम् । केचित्तु सर्वत्रेति वचना-
द्दर्विहोमेष्वपि चतुर्गृहीतवत्सु पञ्चगृहीतमिच्छन्ति । तदयुक्तमद-
र्विहोमाधिकारात् । तथाकृतीः प्रकृत्य याज्यापुरोऽनुवाक्यावतीषु
चतुरवत्तपञ्चावत्ते पञ्चावत्तं जमदग्नीनां चतुरवत्तमितरेषां गोत्राणा-
मिति सत्याषाढादिभिर्व्यक्तवचनाच्च । तस्माद्दर्विहोमेषु चतुर्गृहीत-

दर्शपूर्णमासौ



चोदनायां पञ्चावत्तिनो ऽपि चतुर्गृहीतमेव भवति न पञ्चगृहीतम्। अग्निहोत्रे तु वचनाद्भवति ॥

अवद्यन्नमुष्मा अनुब्रूहीति पुरोऽनुवाक्यां संप्रेष्यति। अवदायावदाय स्रुवेण प्रस्तरबर्हिः समज्य जुहूपभृता-वादाय दक्षिणातिक्रम्याश्राव्य प्रत्याश्राविते ऽमुं यजेति याज्यामिति सार्वत्रिकम्। ३।

अवद्यन्नवदाने प्रक्रान्त इत्यर्थः। जुह्वामुपस्तीर्य सोमाय पितृमते ऽनु स्वधेति संप्रेष्यतीति लिङ्गात्॥ आप्याय्य ध्रुवां प्रस्तरबर्हिषी समनक्ति। याज्यां संप्रेष्यतीत्यन्वयः। तदर्थं होतारं संप्रेष्यतीत्यर्थः॥

उत्तरार्धपूर्वार्धे ऽग्नये जुहोति। ४।

गतः॥

दक्षिणार्धपूर्वार्धे सोमाय समं पूर्वेण। ५।

यत्र कृतः पूर्वेणाज्यभागेन दक्षिणमिव चक्षुः सव्येन समो भवति तत्र जुहोति॥

उभे ज्योतिष्मति। ६।

उभे एते आहुती सार्चिष्यग्नौ जुहोति। न वक्ष्यमाणाहुतिव-द्धुतार्चिषीत्यर्थः॥

पूर्वमाज्यभागं प्रति स्रुचावात्ते न निदधात्या स्विष्ट-कृतः। ७।

आज्यभागं प्रति तत्काले। ततश्चात्तायामेव स्रुचि प्रकृतौ प्रधानावदानदर्शनादनाज्यभागे ऽपि पशुप्रायणीयादावस्मिन्काले स्रुचावादीयेते॥

**आज्यभागावन्तरेणेतरा आहुतीर्जुहोति। ८।**

आज्यभागदेशयोर्मध्य एवेतरा अदर्विहोमाहुतीर्जुहोति न बहिस्ताभ्याम्। अदर्विहोमाहुतीनां तु देशो वक्ष्यते॥

**प्रत्याक्रम्य जुह्वामुपस्तीर्य मा भेर्मा संविक्था मा त्वा हिंसिषं मा ते तेजो ऽपक्रमीत्। भरतमुद्धरेमनुषिञ्चावदानानि ते प्रत्यवदास्यामि। नमस्ते अस्तु मा मा हिंसीरित्याग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रमवदानं तिरीचीनमवद्यति। पूर्वार्धाद्द्वितीयमनूचीनं चतुरवत्तिनः। पश्चार्धात्तृतीयं पञ्चावत्तिनः।९।**

अङ्गुष्ठपर्वाङ्गुष्ठस्योत्तमं काण्डम्। तिरीचीनं तिरश्चीनं तिर्यग्भिरङ्गुल्यङ्गुष्ठैरिति यावत्। अनूचीनं प्राचीनं प्रागायतैरङ्गुल्यङ्गुष्ठैर्द्वितीयं तृतीयं चेत्यर्थः। तयोस्तु नावदानमन्त्रस्यावृत्तिरपादानद्रव्याभिधायित्वात्तदेकत्वाच्च। न चावदानद्वित्वे निवर्तते जात्याख्यायां बहुवचनात्॥

**असंभिन्दन्मांससंहिताभ्यामङ्गुलीभ्यामङ्गुष्ठेन च पुरोडाशस्यावद्यति। १०।**

इत्यष्टादशी कण्डिका।

दर्शपूर्णमासौ



**स्रुवेणाज्यसांनाय्ययोः। १।**

असंभिन्दन्नवदानदेशावसंकिरन्। द्वयोरवदानदेशयोर्मध्ये कियांश्चिद्देशः स्थाप्यत इत्यर्थः॥ मांससंहिताभ्यामनखसंहिताभ्यामङ्गुष्ठेन चानेन च स्रुवेणावद्यति। हस्तेनावद्यतीत्यविशेषचोदितौ स्रुवहस्तौ द्रवकठिनयोर्हविषोः सामर्थ्यान्नियम्येते। तेन सांनाय्यविकारे ऽपि वपादौ हस्त इष्यते पुरोडाशविकारे ऽपि यवाग्वादौ स्रुवः॥

**आनुजावरस्य पूर्वार्धात्प्रथममवदानमवदाय पूर्वार्धे स्रुचो निदध्यात्। मध्यादपरमवदाय पश्चार्धे स्रुचः। २।**

यो ऽल्पतेजस्त्वात्समानजातीयानामनुगन्ता भवति स आनुजावरः प्रजापतिरिन्द्रमसृजतानुजावरं देवानामित्यनुवाके तथावगमात्। तस्य चाग्रगमनं परीप्सतो ऽयं विधिः। इन्द्रो वै देवानामानुजावर आसीदिति प्रकृत्यानुजावरस्य विधिमुक्त्वा स एवैनमग्रं समानानां परिणयतीति फलाम्नानादश्विनौ वै देवानामानुजावरौ पश्चेवाग्रं पर्यैतामिति प्रकृत्य तावेवैनमग्रं परिणयत इति श्रवणाच्च। तस्मात्काम्य एवायं कल्पः॥

**पूर्वप्रथमान्यवद्येज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा गतश्रीः स्यात्। ३।**

ज्येष्ठा प्रथमोढा भार्या तस्याः पुत्रो ज्यैष्ठिनेयः। तस्य प्रथमजस्य गतश्रियस्च पूर्वार्धात्प्रथमान्यवदानान्यवद्येदिति नैमित्तिको विधिः॥

**अपरप्रथमानि कनिष्ठस्य कानिष्ठिनेयस्य यो वानुजावरो यो वा बुभूषेत्। ४।**

अत्राद्य पक्षो नैमित्तिकः उत्तरौ काम्यौ मध्यमस्य पूर्वेणानु-जावरकल्पेन विकल्पते । कानिष्ठिनेयो ज्यैष्ठिनेयेन व्याख्यातः । बुभूषेद्भवितुमिच्छेत् भूतिकाम इति यावत् ॥

अथ यदि पुरोहितः पुरोधाकामो वा यजेत पूर्वार्धात्प्रथममवदानमवदाय पूर्वार्धे स्रुचो निधाय पूर्वार्धेऽग्नेर्जुहुयात् । ५ ।

पौरोहित्यं पुरोधा । द्वितीयतृतीययोरवदानयोर्निधानदेशावचनादनियमः ॥

अवदानान्यभिघार्य यदवदानानि ते ऽवद्यन्विलोमाकार्षमात्मनः । आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां पुनरिति हविः प्रत्यभिघार्याग्नये ऽनुब्रूह्यग्निं यजेति संप्रैषौ । ६ ।

ब्रूयादिति शेषः ॥ ननु सामान्यतः । प्रागेव विहितस्य याज्यानुवाक्यासंप्रैषस्य पुनर्विधिः । किमर्थम् । केचिदाहुः तत्र तावदवद्यन्संप्रेष्यतीत्यवदानसमयानुवाक्यासंप्रैषविधिरङ्गविषयः प्रधानविषयस्त्वयं प्रत्यभिघारणोत्तरकालविधानार्थ इति । तदयुक्तं तत्र सार्वत्रिकमित्यनेन विरोधात् स्विष्टकृत्यभिघारणोत्तरकालं तद्वचनविरोधादत्र च याज्यासंप्रैषोपादानवैयर्थ्यात्तस्य च क्रमार्थतायामाश्रावणप्रत्याश्रावणयोरुत्कर्षप्रसङ्गान्मन्त्रब्राह्मणसूत्रलिङ्गविरोधाच्च ॥ पुरोडाशानामवदीयमानानामनुब्रूहीति । ऐन्द्रस्यावद्यन्ब्रूयादिन्द्रायानुब्रूहीति जुह्वामुपस्तीर्य सोमाय पितृमते ऽनु स्वधेति संप्रेष्यतीत्यादि ।

दर्शपूर्णमासौ



तथोपस्तीर्य दक्षिणस्य पुरोडाशस्य पूर्वार्धादवद्यन्नाहाग्नये ऽनुब्रूहीत्येव बौधायनः॥ तस्मान्न युक्तः पूर्वोक्तक्रमकल्पः अन्यत्तु मतम्। याज्यानुवाक्ययोर्मूर्धलिङ्गत्वादग्नये मूर्धन्वते अग्निं मूर्धन्वन्तमिति मा भूतां संप्रैषावित्येवमर्थमिदं वचनमिति। तदप्ययुक्तं यदाग्नेयो ऽष्टाकपाल इत्युत्पत्तावश्रुतस्य गुणस्य देवताविशेषणत्वेन दुराशङ्कत्वादितरथाज्यभागयोरग्नये वृत्रघ्ने ऽग्नये वृधन्वत इति लिङ्गानुगुणदेवतादेशप्रसङ्गाच्च॥ तस्मात्पूर्वमसुष्मा अनुब्रूह्यमुं यजेति सामान्यतो निर्दिष्टस्य देवतादेशनस्य विशेषतः प्रदर्शनमात्रमेतदिति। नातीवात्र क्लेष्टव्यमायुष्मद्भिरेवमन्यो ऽपि यस्तत्रतत्र संप्रैषविधिः सो ऽपि क्वचिद्देवताप्रदर्शनार्थः क्वचित्संप्रैषस्वरूपविशेषप्रदर्शनार्थः क्वचित्तस्यैव विकारप्रदर्शनार्थः क्वचिद्विकल्पप्रदर्शनार्थः क्वचिद्वषट्कारप्रदानदर्शनत्वख्यापनार्थः क्वचिदसंदेहार्थ इति यथासंभवं द्रष्टव्यम्॥

**आज्यं प्रस्तोत्यापिदधदिवाप्रक्षिणन्हुत्वाज्येनान्ववस्रावयति। ७।**

स्रुग्गतमाज्यं प्रथमं स्रावयित्वाग्नौ प्रास्तं पुरोडाशमपिदधदिव स्थगयन्निव स्रुचा तं अप्रक्षिणन्नहिंसन्हुत्वाज्यशेषमन्ववस्रावयति॥

**आघारसंभेदेनाहुतीः प्रतिपादयति। ८।**

आघारव्यतिषङ्गदेशेनाहुतीः प्रतिपादयति प्रवेशयतीत्यर्थः। अथ वा प्रतिपादयति प्रक्रमयति प्रथमाहुतिं तत्र जुहोतीत्यर्थः॥

**स्रुच्यमाघारमभिजुहोति पूर्वांपूर्वां संहिताम्। ९।**

एवं प्रतिपाद्य स्रुच्याघारस्योपरि पूर्वांपूर्वामाहुतिं परस्परसंसृष्टां

जुहोति। पूर्वशब्दो ऽत्र पूर्वोत्तरायां दिशि गौणो द्रष्टव्यः। अत एव वात्र पूर्वविप्रतिषेधाद्वैकल्पिकाविमौ विधी द्रष्टव्यौ॥ तथा स्रुच्यमाघारमभिजुहोति पूर्वांपूर्वां वेत्येव सत्याषाढभारद्वाजौ। बौधायनस्त्वाह स्रुच्यमाघारमभिजुहुयादित्यौपमन्यवो मध्ये प्रदक्षिणं मण्डलीकारमिति राथीतर इति॥

यं द्विष्यात्तं व्यृषन्मनसाहुतीर्जुहुयात्। १०।

यं द्विष्याद्यजमानस्तं मनसा वृषन्तद्धिंसामभिध्यायन्नित्यर्थः॥

यदा वीतार्चिर्लेलायतीवाग्निरथाहुतीर्जुहोति। ११।

लेलायतीति लिङो यङन्तात्लटि व्यत्ययेन परस्मैपदमीकारस्य चाकारः। यङ्लुगन्ताद्वा शप्वृद्धिश्च व्यत्ययेन छान्दसत्वात्॥ यथा पुष्करपर्णे वातो भूतो ऽलेलायदिति। कण्वादिषु वा लेलेतिपाठो द्रष्टव्यः॥ यदा शान्तार्चिरङ्गारेषु लेलीयमान इव विस्फूर्जत्यग्निस्तदा जुहोतीत्यर्थः। वक्ष्यति च यदङ्गारेषु व्यवशान्तेषु लेलायद्वीव भातीति॥

आज्यहविरुपांशुयाजः पौर्णमास्यामेव भवति वैष्णवो ऽग्नीषोमीयः प्राजापत्यो वा। १२।

बौधायनादिभिरमावास्यायामप्युपांशुयाजविधानात्तन्निरासार्थः पौर्णमास्यामेवेत्येवकारः॥

प्रधानमेवोपांशु। १३।

उपांशुयाजसमाख्यानात्तत्सन्मन्त्रोपांशुत्वे प्राप्ते वचनम्। प्रधानमेव देवताभिधान एव मन्त्रांश उपांशुरन्यो यथाप्राप्त इत्यर्थः॥

विष्णुं बुभूषन्यजेत। १४।

इत्येकोनविंशी कण्डिका।

अग्नीषोमौ भ्रातृव्यवान्। १।

नित्ययोरेवानयोर्दैवतयोः कामो वेदितव्यः नित्यवदग्रे ऽनुक्रमणादन्यथा तद्वैयर्थ्याच्च ॥

आग्नेयवदुत्तरैर्हविर्भिर्यथादेवतं प्रचरति। २।

गतः ॥

समवदाय दोहाभ्याम्। ३।

समवदाय सहावदाय दोहाभ्यां प्रचरति। देशकालकर्तृदेवतैक्यादिति भावः। तत्रोपस्तरणाभिघारणे अपि विभुत्वात्तन्त्रेण भवतः ॥

दध्नो ऽवदाय शृतस्यावद्यत्येतद्वा विपरीतम्। सर्वाणि द्रवाणि स्रुङ्मुखेन जुहोति। ४।

गताः ॥

स्रुवेण पार्वणौ होमौ ॥ ऋषभं वाजिनं वयं पूर्णमासं यजामहे। स नो दोहतां सुवीर्यं रायस्पोषं सहस्रिणम्। प्राणाय सुराधसे पूर्णमासाय स्वाहेति पौर्णमास्याम् ॥ अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना। सा नो दोहतां सुवीर्यं रायस्पोषं सहस्रिणम्। अपानाय सुराधसे ऽमावास्यायै स्वाहेत्यमावास्यायाम्। ५।

पर्वशब्दो ऽत्र कर्मवचनः प्रकरणात्तद्दैवतत्वाच्च होमयोः। ताभ्यां हि दर्शपूर्णमासावेव क्रियमाणाविज्येते मन्त्रलिङ्गात्तेन विकृतिषु न गच्छतः तत्र तयोः समुदाययोरभावात्। कर्मणस्तत्प्रकृतित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वादिति न्यायेन समु-

दायस्य चानतिदेश्यत्वात्पार्वणाविति वचनाच्च। तदुक्तं न्यायविद्भिः पार्वणयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभीज्या हीति॥

नारिष्ठान्होमाञ्जुहोति दश ते तनुवो यज्ञ यज्ञियास्ताः प्रीणातु यजमानो घृतेन। नारिष्ठयोः प्राशिषमीडमानो देवानां दैव्येऽपि यजमानोऽमृतोऽभूत्॥ यं वां देवा अकल्पयन्नूर्जो भागं शतक्रतू। एतद्वां तेन प्रीणाति तेन तृप्यतमंहहौ॥ अहं देवानां सुकृतामस्मि लोके ममेदमिष्टं न मिथुर्भवाति। अहं नारिष्ठावनुयजामि विद्वान्यदाभ्यामिन्द्रो अदधाद्भागधेयम्॥ अदारसृद्भवत देव सोमास्मिन्यज्ञे मरुतो मृडता नः। मा नो विददभिभामो अशस्तिर्मा नो विदद्वृजना द्वेष्या या।६।

इति विंशी कण्डिका।

---

ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञानां हविषामाज्यस्य। अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन्। स्वाहाकृताहुतिरेतु देवान्॥ सं ते मनसा मनः सं प्राणे प्राणं दधामि ते सं व्याने समपानं दधामि ते। परिगृह्य यजमानोऽमृतोऽभूच्छं न एधि द्विपदे शं चतुष्पदे स्वाहेत्येतैः प्रतिमन्त्रम्।१।

दर्शपूर्णमासौ



नारिष्ठा नामोत्तरे होमा नारिष्ठदेवतासंबन्धात्ते तु स्रुचा कार्याः ॥ तत्र सं ते मनसा मन इत्यादि प्रदिष्टं यजुः षष्ठम्। सं प्राणे प्राणमित्यृक्चतुष्पदा सप्तमी। सं ते मनसा मन इत्यादिर्यथा-पठित एको मन्त्र इति केचित्तेषां लृगक्षरपरिमाणविरोधः कारक-वैरूप्यं च स्याद्यथा मनसा मनः प्राणे प्राणमित्यादि ॥

एष उपहोमानां कालो ऽनन्तरं वा प्रधानात्प्राग्वा समिष्टयजुषः। २।

यस्मिन्कर्मण्युपहोमाश्चोद्यन्ते तत्रैते कालविकल्पाः ॥

जुह्वामुपस्तीर्य सर्वेषां हविषामुत्तरार्धात्सकृत्सकृ-त्स्विष्टकृते ऽवद्यति। द्विः पञ्चावत्तिनः। ३।

उपांशुयाजस्य त्वर्थलुप्तानि शेषकार्याणि तदर्थस्य चतुर्गृहीतस्य शेषाभावात्सर्वार्थत्वाच्च ध्रौवस्य। सकृद्ध्रुवाज्यादवद्यतीति बौधायनः। न चात्रदानमन्त्रः स्विष्टकृति प्रधानार्थत्वात् ॥

दैवतसौविष्टकृतैडचातुर्धाकारणिकानामुत्तरमुत्तरं ज्यायः। ४।

अवदानमिति शेषः ॥

द्विरभिघार्य न हविः प्रत्यभिघारयति। ५।

अत एव प्रतिषेधाज्ज्ञायते प्रत्यभिघारणं स्विष्टकृदर्थमिति। तेन पञ्चावदानेषु सौम्ये च चरौ निवर्तते ॥

**अग्नये स्विष्टकृतेऽनुब्रूह्यग्निं स्विष्टकृतं यजेति संप्रैषौ। उत्तरार्धपूर्वार्धे जुहोत्यसंसक्तामितराभिराहुतीभिः। ६।**

संप्रैषविधिः प्रागेव व्याख्यातः॥

**प्रत्याक्रम्य जुह्वामप आनीय वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सं शतधारमेतम्। स नः पितरं पितामहं प्रपितामहं स्वर्गे लोके पिन्वमानो बिभर्तु स्वाहेत्यन्तःपरिधि निनयति निनयति। ७।**

प्रत्याक्रमणवचनं प्रत्याक्रम्यैव यथा निनयेन्न तु दक्षिणतः स्थित इति। केचित्तु पितृलिङ्गत्वान्मन्त्रस्य निनयने प्राचीनावीतमिच्छन्ति॥

इत्येकविंशी कण्डिका।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायां षष्ठः पटलः।

इति द्वितीयः प्रश्नः॥

दर्शपूर्णमासौ

ओम् ॥

इडामेके पूर्वं समामनन्ति प्राशित्रमेके । १ ।

इडाशब्दो देवतावचनः तत्संबन्धाद्द्रव्ये कर्मणि च प्रयुज्यते । प्राशित्रशब्दो द्रव्यवचनः तत्संबन्धात्कर्मणि । तदिह सामर्थ्यात्कर्मपरौ वेदितव्यौ ॥ तत्र प्राशित्रपूर्वकल्पः सूत्रकृतैवानुक्रमिष्यते । यदा त्वितरस्त्वदावदानेषु प्राशने चेडा पूर्वा भवति यथाभिधार्येडां प्राशित्रमवद्यति प्राश्येडां मार्जयित्वा प्राशित्रं प्राश्नातीति ॥

आग्नेयं पुरोडाशं प्राञ्चं तिर्यञ्चं वा विरुज्याङ्गुष्ठेनोपमध्यमया चाङ्गुल्या व्यूह्य मध्यात्प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वाज्यायो यवमात्रादाव्याधात्कृत्यतामिदम् । मा रूरुपाम यज्ञस्य शुद्धं स्विष्टमिदं हविरिति । २ ।

विरुज्य मस्तकं भङ्क्त्वा । उपमध्यमयानामिकया व्यूह्य अभ्यन्तरमङ्गुली गमयित्वा । मध्यात् पुरोडाशोदरात् । पिप्पलमात्रं व्रीहिप्रमाणमित्यर्थः । तथा चाह भारद्वाजः प्राशित्रं पिप्पलमात्रमिति व्रीहिमात्रं स्यादिति ॥

एवमुत्तरस्यावद्यति । ३ ।

एवं विरोजनादिना विधिनावद्यति। तत्राविरुद्ध्योत्तरस्मादिति तु सत्याषाढभारद्वाजौ। तथा चरोर्न प्राशित्रमिति भारद्वाजः। न सांनाय्यात्प्राशित्रं पुरोडाशाधिकारात् सर्वेभ्यो हविर्भ्य इतीडायां विशेषवचनाच्च॥

**उपस्तीर्य नाभिघारयत्येतद्वा विपरीतम्। अपि वोपस्तृणात्यभि च घारयति। ४।**

अन्यतरत्तत्र कर्तव्यमुभयं वेत्यर्थः॥

**अत्रैवास्य परिहरणप्राशनमेके समामनन्ति। ५।**

यदेडा पूर्वा यदा वा प्राशित्रं तयोरुभयोरपि कल्पयोरवदानानन्तरमेव वा प्राशित्रस्य परिहरणप्राशने भवत इत्यर्थः॥

**इडापात्र उपस्तीर्य सर्वेभ्यो हविर्भ्य इडां समवद्यति चतुरवत्तां पञ्चावत्तां वा। ६।**

चतुरवत्तां पञ्चावत्तां वेत्यविशेषवचनेऽपि न पञ्चावत्तिनश्चतुरवत्तमिष्यते तस्य पञ्चावत्तं सर्वत्रेति नियमात् द्विरभिघारयेत्पञ्चावत्तिन इति लिङ्गाच्च। विनिवेशविकल्पो वा प्रागुक्तव्यवस्थानुरोधेनास्थेयः॥

**मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम्। दक्षिणार्धादसंभिन्दन्नवद्याम्येकतोमुखामित्याग्नेयस्य पुरोडाशस्य दक्षिणार्धात्प्रथममवदानमवद्यति। ७।**

गतः॥

दर्शपूर्णमासौ



संभेदाद्द्वितीयम्। ८।

यो ऽवदानदेशयोर्मध्ये स्थितो हविरंशः स संभेदस्ततो द्वितीयमवद्यति॥

पूर्वार्धाच्च यजमानभागमणुमिव दीर्घम्। ९।

अवद्यतीति संबन्धः। इव ईषदर्थे॥

तमाज्येन संतर्प्य ध्रुवाया उपोहति। १०।

संतर्प्य समज्य ध्रुवाया उपोहति ध्रुवासमीपं गमयति। तच्चाग्रेण ध्रुवामिति भारद्वाजबौधायनौ॥

अपि वा दक्षिणार्धादवदाय यजमानभागमथ संभेदात्। ११।

दक्षिणार्धात्प्रथममिडावदानमवदाय ततो यजमानभागमवद्यति। ततः संभेदात् द्वितीयमिडावदानमित्यर्थः॥

एवमुत्तरस्यावद्यति। १२।

एवं मनुना दृष्टामित्यादिना विधिनोत्तरस्य हविषः पुरोडाशस्य सांनाय्यस्य चावद्यति सर्वेभ्यो हविर्भ्य इत्यधिकारात्॥

इति प्रथमा कण्डिका।

अभिघार्येडां होत्रे प्रदाय दक्षिणेन होतारमतिक्रामत्यनुत्सृजन् । १ ।

पञ्चावत्तायां त्विडायां द्विरभिघारणेन संख्यासंपत्तिः द्विरभिघारयेत्पञ्चावत्तिन इति लिङ्गात् । पञ्चार्धात्तृतीयं पञ्चावत्तायामिति तु सत्याषाढः । होत्रे प्रदायेडां तामनुत्सृजन्नेवातिक्रामति होतुः पश्चाद्गच्छति तदङ्गुल्यञ्जने प्राङ्मुखत्वार्थम् । तथा च सत्याषाढभारद्वाजौ दक्षिणातिक्रम्य पश्चात्प्राङासीनो होतुरङ्गुलिपर्वणी अनक्तीति ॥

होतेडयाध्वर्युं परिगृह्णाति । २ ।

होता त्विडामादाय तयाध्वर्युमतिक्रामन्तं परिगृह्णाति दक्षिणतो हृत्वेडामन्तराध्वर्युमात्मानं च करोतीत्यर्थः ॥

अपि वा प्राचीमिडामपोह्य दक्षिणत आसीनः स्रुवेण होतुरङ्गुलिपर्वणी अनक्ति । ३ ।

अपि वाध्वर्युर्होत्रे इडामदत्त्वा प्राचीमपोह्य स्वयं च पश्चाद्गत्वा होतुर्दक्षिणत उदङ्मुख आसीनस्तदङ्गुलिपर्वणी अनक्ति तत इडां ददातीत्यर्थः । पर्वणी प्रदेशिन्या उत्तमे इत्याश्वलायनः ॥

अपरमङ्क्त्वा पूर्वमेतद्वा विपरीतम् । ४ ।

गतः ॥

उपस्पृष्टोदकाय पुरस्तात्प्रत्यङ्ङासीन इडाया होतुर्हस्ते ऽवान्तरेडामवद्यति । ५ ।

दर्शपूर्णमासौ



उपस्पृष्टोदकस्य होतुर्हस्ते इडातो ऽवान्तरेडामिडैकदेशमवदधाती-त्यर्थः ॥

अध्वर्युः प्रथममवदानमवद्यति स्वयं होतोत्तरम् एतद्वा विपरीतम् । ६ ।

गतः ॥

लेपादुपस्तरणाभिघारणे भवतः । ७ ।

लेपात् इडागताज्यलेपात् ॥

द्विरभिघारयेत्पञ्चावत्तिनः । उपहूयमानामन्वारभेते अध्वर्युर्यजमानश्च । दैव्या अध्वर्यव उपहूता इत्यभि-ज्ञायोपहूतः पशुमानसानीत्यध्वर्युर्जपति । उपहूतो ऽयं यजमान इत्यभिज्ञायैतमेव मन्त्रं यजमानः । ८ ।

गताः ॥

उपहूतायामग्रेणाहवनीयं ब्रह्मणे प्राशित्रं परिह-रति । ९ ।

ब्रह्मणे परिहरति तत्सकाशं नीत्वा प्रयच्छतीत्यर्थः । प्रदर्शनमिदमन्य-स्यापि प्रस्तरादेर्यज्ञाङ्गस्य । तत्रान्तरानयने ऽप्यदोष इत्येके ॥

तस्मिन्प्राशिते होतावान्तरेडां प्राश्नाति वाचस्पतये त्वा हुतं प्राश्नामि सदस्पतये त्वा हुतं प्राश्नामीति । १० ।

गतः ॥

प्राशितायामिडे भागं जुषस्व नो जिन्व गा जिन्वार्वतः । तस्यास्ते भक्षिवाणः स्याम सर्वात्मानः सर्वगणा इति यजमानपञ्चमा इडां प्राश्य । ११ ।

इति द्वितीया कण्डिका ।

वाग्यता आसत आ मार्जनात् । १ ।

वाग्यता आसते वाग्यता भवन्तीत्यर्थः ॥

मनो ज्योतिर्जुषतामित्यद्भिरन्तर्वेदि प्रस्तरे मार्जयित्वाग्नेयं पुरोडाशं चतुर्धाकृत्वा बर्हिषदं करोति बर्हिषदं वा कृत्वा चतुर्धाकरोति । २ ।

मनो ज्योतिरिति बृहस्पतिवत्या मार्जनं तस्याः प्रकरणपाठात् । अन्तर्वेदीति वचनं वेदिस्थ एव प्रस्तरे मार्जनं यथा स्यात् मा भूत्प्रस्तरमादाय बहिरिति । मार्जनमिति च हस्ते ऽपामासेचनमुच्यते । तदेव शिरस्यानयनसहितमिति केचित् । तदयुक्तं अग्निहोत्रान्ते मार्जयते शिरस्यप आनयत इति पृथग्विधानात् । तथा अञ्जलिमन्तर्धायाप आसेचयते तन्मार्जनमित्येवाश्वलायनः ॥ बर्हिषदं स्तीर्णे बर्हिषि सन्नम् । चतुर्धाकरणमाग्नेयस्यैवेष्यते नान्यस्य एवमुत्तरमित्यवचनात् । तेनोत्तरविकाराणामपि न भवति । तत्र चतुर्धाकरणं चरोर्न विद्यत इति भारद्वाजः ॥

दर्शपूर्णमासौ



**तं यजमानो व्यादिशतीदं ब्रह्मण इदं होतुरिद-मध्वर्योरिदमग्नीध इति । ३ ।**

तं चतुर्धाकृतं व्यादिशति विविधमादिशति इदं ब्रह्मण इदं होतु-रिति ॥

**अग्नीत्प्रथमान्होतृप्रथमान्वा । ४ ।**

इदमग्नीध इदं ब्रह्मण इत्यग्नीत्प्रथमानृत्विजो भागित्वेनादिशतीत्यर्थः । तथा होतृप्रथमानिति ॥

**इदं यजमानस्येत्यध्वर्युर्यजमानभागं निर्दिश्य स्वावि-ष्टमग्नीधे षडवत्तं संपादयति । ५ ।**

स्वविष्टो भागो यथाग्नीधः स्यात्तथा पूर्वमेव व्यादिश्य तमग्नीधे प्रयमाय प्रयच्छन्षडवत्तं संपादयति । कथमिव संपादयति ॥

**सकृदुपस्तीर्य द्विरादधदुपस्तीर्य द्विरभिघारयति । ६ ।**

आग्नीध्रहस्ते प्रथमं सकृदुपस्तीर्य ततस्तद्भागं द्वेधाकृत्वा एकमवधाय पुनरुपस्तीर्यापरमाधाय द्विरभिघारयतीत्यर्थः ॥

**अपि वा द्विरुपस्तृणाति द्विरादधाति द्विरभिघार-यति । ७ ।**

अथवा प्रथममेव द्विरुपस्तीर्य ततो द्विराधाय द्विरभिघारयति ॥

**अग्नेराग्नीध्रमस्यग्नेः शामित्रमसि नमस्ते अस्तु मा मा हिंसीरित्याग्नीध्रो भक्षयति । ८ ।**

गतः ॥

**वेदेन ब्रह्मयजमानभागौ परिहरति । ९ ।**

वेदेन हृत्वा यथास्थानमासीनाभ्यां प्रयच्छति॥

**पृथक् पात्राभ्यामितरयोः । १० ।**

भागौ परिहरतीति शेषः। वेदादन्येन पात्रेण होतुर्भागं ततो ऽन्येन चात्मन इत्यर्थः॥

**पृथिव्यै भागो ऽसीति होता भक्षयत्यन्तरिक्षस्य भागो ऽसीत्यध्वर्युर्दिवो भागो ऽसीति ब्रह्मा । ११ ।**

ब्रह्मणः स्वकाल एव भक्षणम्॥

**दक्षिणाग्नावन्वाहार्यं महान्तमपरिमितमोदनं पचति । १२ ।**

अन्वाहार्यो दक्षिणार्थ ओदनः। तं महान्तं पचति यथर्त्विग्भ्यः पर्याप्तो भवति। तत्रापरिमितमिति प्रस्थादिना तण्डुलपरिमाण-प्रतिषेधः॥

**क्षीरे भवतीत्येके । १३ ।**

गतः॥

**तमभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यासाद्य । १४ ।**

इति तृतीया कण्डिका।

दर्शपूर्णमासौ



**दक्षिणतस्तद्ध उपहर्तवा इति संप्रेष्यति। १।**

यजमानं संप्रेष्यति दक्षिणतः स्थितेभ्य ऋत्विग्भ्यो दक्षिणा त्वयो-पहर्तव्येति॥

**ये ब्राह्मणा उत्तरतस्तान्यजमान आह दक्षिणत एतेति। २।**

ये ऽध्वर्य्वादय उत्तरतः स्थितास्तानाह। स्थित एव तु ब्रह्मा दक्षिणत इति॥

**तेभ्यो ऽन्वाहार्यं ददाति ब्राह्मणा अयं व ओदन इति। ३।**

तेभ्यश्चतुर्भ्यो दक्षिणाद्धो ददाति॥

**प्रतिगृहीत उत्तरतः परीतेति संप्रेष्यति। ४।**

तैर्दक्षिणां प्रतिग्रहीष्यन्नित्यादिविधिना प्रतिगृहीत ओदने उत्तरत आगतान्संप्रेष्यति यजमान इति शेषः परीतेति वचनात्॥

**हविःशेषानुद्वास्यापिसृज्योल्मुके ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीत्परिधींश्चाग्निं च सकृत्सकृत्संमृड्ढीति संप्रेष्यति। ५।**

ये पूर्वमुल्मुके उदूढे ते प्रत्यूह्य संप्रेष्यति। ब्रह्मन्प्रस्थास्याम इत्यनूयाजार्थं प्रतिपद्यामहे तदर्थं प्रसुहीति। अग्नीत्त्वमपि समिध-माधाय संमृड्ढीति॥

अनुज्ञातो ब्रह्मणाग्नीध्रः समिधमादधात्येषा ते अग्ने समित्तया वर्धस्व चा च प्यायस्व वर्धतां च ते यज्ञपतिरा च प्यायतां वर्धिषीमहि च वयमा च प्यायिषीमहि स्वाहेति। ६।

नन्वामन्त्रयिताध्वर्युरेव ब्रह्मणाप्यनुज्ञातव्य ओं प्रतिष्ठेति तत्कथमुच्यते अनुज्ञातो ब्रह्मणाग्नीध्र इति। श्रूयतामध्वर्युणा तावत्प्रस्थास्याम इति बहुवचनात्। सर्वर्त्विगर्थमामन्त्रणमुक्तं ब्रह्मणाप्योां प्रतिष्ठेति। बहुवचनार्थेनैकवचनेन सर्वार्थ एव प्रसवः कृतः तेनाग्नीध्रस्यापि अनुज्ञातत्वात्। युक्तमेव तथा वक्तुम्। अथवानूयाजप्रक्रमार्थमों प्रतिष्ठेत्याग्नीध्रस्यैवानुज्ञा यथाहाश्वलायनः ओं प्रतिष्ठेति समिधमनुजानीयादिति ॥

पूर्ववत्परिधीन्सकृत्सकृत्संमृज्याग्ने वाजजिद्वाजं त्वा सस्वांसं वाजं जिगिवांसं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्यायेति सकृदग्निं प्राञ्चम्। ७।

गतः ॥

इध्मसंनहनान्यद्भिः संस्पर्श्य यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा। पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहेत्यग्नौ प्रहरत्युत्करे वा न्यस्यति शालायां बल्जायां परोगोष्ठे परोगव्यूतौ वा। ८।

शालाग्निशाला। वलजा धान्यराशिः वंशबन्धनार्था रज्जुरित्येके। परो गोष्ठाद्यो देशः स परोगोष्ठः। परोक्षशब्दवत्समासः परशब्दस्य च परोभावो द्रष्टव्यः। एवं परोगव्यूतिरिति। गव्यूतिर्गोमार्गः। गोस्थानाद्गोमार्गाद्वा अन्यत्र यत्र क्वचिन्न्यस्यतीत्यर्थः॥ तथा च ब्राह्मणं यद्येनानि पशवो ऽभितिष्ठेयुर्न तत्पशुभ्यः कमिति। मन्त्रवर्णश्च भवति पशूनस्माकं मा हिंसीरिति॥

इति चतुर्थी कण्डिका।

इति प्रथमः पटलः॥

---

औपभृतं जुह्वामानीय जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तो ऽग्रेणाघारसंभेदं प्रतीचस्त्रीननूयाजान्यजत्याश्रावमाश्रावं प्रत्याश्राविते देवान्यजेति प्रथमं संप्रेष्यति। यज यजेतीतरौ। १।

व्याख्यातो ऽयं प्रयाजग्रन्थेन। अत्र तु देवान्यजेति सर्वानूयाजार्थः प्रथमः संप्रैषः प्रातिस्विकौ त्वितरौ। तेनोत्तरयोर्द्वियजत्वं बोद्धव्यम्। प्रयोजनं च पश्चो दर्शयिष्यामः॥

पूर्वार्धे प्रथमं समिधि जुहोति मध्ये द्वितीयं प्राञ्चमुत्तमं संस्थापयन्नितरावनुसंभिद्य। २।

अग्रेणाघारसंभेदं यो देशस्तस्य पूर्वभागे प्रथममनुयाजं समिधि जुहोति मध्यदेशे द्वितीयम्। ततः पश्चादुत्तममारभ्य प्राञ्चमप-

वर्जयन्पूर्वङ्कतावनुयाजौ संसृज्य जुहोति ॥ अत्राह बौधायनः किंदेवत्याः खल्वनुयाजा भवन्तीति आग्नेया इत्येव ब्रूयात् । विज्ञायते तं देवा आहुतीभिरनुयाजेष्वित्यादि ॥

प्रत्याक्रम्यायतने स्रुचौ सादयित्वा वाजवतीभ्यां व्यूहति । ३ ।

वाजवतीभ्यां वक्ष्यमाणाभ्यां व्यूहति विविधं गमयति स्रुचौ । तत्र द्वितीयस्या वाजवतीलोपचारः प्राणभृद्वत्प्रथमसाहचर्याद्द्रष्टव्यः । तदेवं वाजवतीभ्यां व्यूहतीति कर्मविधिब्राह्मणमुदाहृतं तदेव व्याचष्टे ॥

वाजस्य मा प्रसवेनेति दक्षिणेन हस्तेनोत्तानेन सप्रस्तरां जुहूमुद्यच्छति । अथा सपत्नानिति सव्येनोपभृतं नियच्छति । ४ ।

नियच्छति निगृह्णाति ॥

उद्ग्राभं चेति जुहूमुद्यच्छति निग्राभं चेत्युपभृतं नियच्छति । ५ ।

अत्रोभयं दक्षिणेन हस्तेन सव्याग्रहणादुपरि पुनःसव्यग्रहणाच्च ॥

ब्रह्म देवा अवीवृधन्निति प्राचीं जुहूं प्रोहति । ६ ।

गतः ॥

दर्शपूर्णमासौ



अथा सपत्नानिति सव्येनोपभृतं प्रतीचीं बर्हिर्वेदि निरसित्वा प्रोक्ष्यैनामभ्युदाहृत्य जुह्वा परिधीननक्ति वसुभ्यस्त्वेति मध्यमं रुद्रेभ्यस्त्वेति दक्षिणमादित्येभ्यस्त्वेत्युत्तरम्। ७।

जुह्वाज्यलेपेन। सर्वाञ्जनासंभवात्परिध्येकदेशानामञ्जनम् ॥

न प्रस्तरे जुहूं सादयति। ८।

वेद्यामेव बर्हिः प्रस्तरात्सादयति ॥

संजानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्यावतामिति विधृतीभ्यां प्रस्तरमपादाय बर्हिषि विधृती अपिसृज्य स्रुक्षु प्रस्तरमनक्ति। ९।

गतः ॥

इति पञ्चमी कण्डिका।

---

अक्तं रिहाणा इति जुह्वामग्रम्। प्रजां योनिमित्युपभृति मध्यम्। आप्यायन्तामाप ओषधय इति ध्रुवायां मूलम्। एवं त्रिः। १।

एवं त्रिरिति वचनात्समन्त्रकस्यावृत्तिः ॥

अपि वा दिव्यङ्क्ष्वेति जुह्वामग्रम्। अन्तरिक्षे ऽङ्क्ष्वेत्युपभृति मध्यम्। पृथिव्यामङ्क्ष्वेति ध्रुवायां मूलम्। २।

मन्त्रमात्रे विकल्पः ॥

एवं पुनः। ३।

एवं त्रिरित्यर्थः ॥

अथापरम्। पृथिव्यै त्वेति ध्रुवायां मूलमन्तरिक्षाय त्वेत्युपभृति मध्यं दिवे त्वेति जुह्वामग्रम्। ४।

गतः ॥

आयुषे त्वेत्यक्तस्य तृणमपादाय प्रज्ञातं निधाय दक्षिणोत्तराभ्यां पाणीभ्यां प्रस्तरं गृहीत्वा जुह्वां प्रतिष्ठाप्यासीन आश्राव्य प्रत्याश्राविते संप्रेष्यतीषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीति। ५।

अक्तस्य तृणं अक्तस्य प्रस्तरस्य संबन्धि तृणम्। दक्षिणोत्तराभ्यां दक्षिण उत्तरः सव्यादुपरि ययोस्तौ तथोक्तौ। पाणीभ्यामिति दीर्घपाठः प्रामादिकः ॥

अनूच्यमाने सूक्तवाके मरुतां पृषतय स्थेति सह शाखया प्रस्तरमाहवनीये प्रहरति। ६।

सूक्तवाको नामेष्टदेवतानुकीर्तनार्थ इदं द्यावापृथिवी इत्यनुवाकस्तद-

दर्शपूर्णमासौ



नुवचनकाले प्रस्तरं प्रहरति । शाखा चेदस्ति सापि तेन सह प्रहर्तव्ये-त्यर्थः । सा लपविचा प्रह्रियते ॥

## न स्वाहाकरोति । ७ ।

मरुतां पृषतय स्थेति मन्त्रे स्वाहाकारं न करोति नन्वजुहोतित्वा-देवाप्राप्ते स्वाहाकारे किं प्रतिषेधेन । सत्यं न प्राप्तस्तथापि परम-तेनाशङ्कितः प्रतिषिध्यते । एतद्धि मतं जैमिनीयानां अस्ति याग-विधिः सूक्तवाकेन प्रस्तरं प्रहरतीति तत्र याज्यास्थानीयः सूक्तवाकः प्रस्तरो द्रव्यं मान्त्रवर्णिक्यो देवताः प्रहरतिस्त्र यजत्यर्थ इति । प्रस्तरप्रतिपत्तेस्तु कालविधिरिति सूत्रकृतो ऽभिप्रायः । अत एवोक्त-मनूच्यमाने सूक्तवाक इति तस्माद्युक्तः प्रतिषेधः ॥

## न विधूनोति नावधूनोति न विक्षिपति न प्रमार्ष्टि न प्रतिमार्ष्टि नानुमार्ष्टि नोदञ्चं प्रहरेत् । ८ ।

जुह्वा प्रस्तरं प्रहरन्न विधूनोति न चालयति । नावधूनोति नावाचीनं कम्पयति । इतरेषां चतुर्णां पूर्ववद्व्याख्या । नोदञ्चं नोदगग्रम् ॥

## तिर्यञ्चं हस्तं धारयन्कर्षन्निवाहवनीये प्रहरति । ९ ।

दक्षिणं हस्तं तिर्यञ्चमधस्तादुत्तानोदङ्मुखाङ्गुलिकं जिह्मं धारयन्मुष्टि-नैव सह कर्षन्निव शनैःशनैः प्रहरति । तथा जिह्ममिव हस्तं धारयन्नि-त्येव सत्याषाढभारद्वाजौ । स्वयं च वक्ष्यति न्यञ्चं हस्तं पर्यावर्तय-न्निति ॥

**न प्रतिशृणातीत्युक्तम्। १०।**

न प्रतिशृणातीत्यादिब्राह्मणे यदुक्तं नियमजातं तदप्यनुसंधातव्यमित्यर्थः। न प्रतिशृणाति यथा प्रस्तरप्रमर्दिता अङ्गाराः प्रतिशीर्णा न भवन्ति तथा प्रहरतीत्यर्थः। तथोपरीव प्रहरतीति नियच्छति नात्यग्रं प्रहरेदित्यादि द्रष्टव्यम्। नात्यग्रमिति यथाग्निमतीत्याग्रं गतं न भवति तथेत्यर्थः॥

**प्रथयित्वा प्रहरेद्यं कामयेत स्त्र्यस्य जायेतेति। ११।**

न प्रथयितव्य इति भावः॥

**आशीः प्रति प्रस्तरमवसृजति। १२।**

इति षष्ठी कण्डिका।

---

**न्यञ्चं हस्तं पर्यावर्तयन्। १।**

आशीः प्रति आशिषः प्रति होतुः आशीर्वचनकाल इत्यर्थः। अवसृजति विसृजति। कथम्। यथोक्तप्रकारधृतं हस्तं दक्षिणं प्रसार्य प्रस्तरस्योपरि न्यञ्चं पर्यावर्तयन्॥

**अग्नीद्गमयेति संप्रेष्यति। २।**

प्रस्तरमग्निं गमयेति संप्रैषार्थः॥

दर्शपूर्णमासौ



चिरञ्जलिनाग्नीध्रो ऽविषञ्चं प्रस्तरमूर्ध्वमुद्यौति रोहितेन त्वाग्निर्देवतां गमयत्वित्येतैः प्रतिमन्त्रम् । ३ ।

अविष्वञ्चं सर्वतोऽग्रं प्रस्तरमूर्ध्वमुद्यौति । यथोद्यतः सर्वो ऽग्निं गमितः स्यात्तथोद्यम्य प्रहरतीत्यर्थः यदेतैः प्रस्तरं प्रहरतीति श्रुतेः । स्वयं च वक्ष्यत्यग्नीधा प्रस्तरं प्रह्रियमाणमिति ॥

अथैनमाहाग्नीध्रो ऽनुप्रहरेति । ४ ।

अनुप्रहरेति को ऽर्थस्तमेव व्यनक्ति ॥

यत्प्रस्तरात्तृणमपात्तं तदनुप्रहरति स्वगा तनुभ्य इति । ५ ।

अध्वर्युरिति शेषः ॥

एतदेतदिति चिरङ्गुल्या निर्दिश्याग्निमभिमन्त्रयत आयुष्मा अग्ने ऽस्यायुर्मे पाहीति । ६ ।

एतदित्यङ्गुल्या तदेव तृणं निर्दिश्य दर्शयित्वा ॥

ध्रुवासीत्यन्तर्वेदि पृथिवीमभिमृशति । ७ ।

गतः ॥

अथैनमाहाग्नीध्रः संवदस्वेति । ८ ।

को ऽयं संवादो नाम । तदेव दर्शयति ॥

अगानग्नीदित्यध्वर्युराह । अगन्नित्याग्नीध्रः । श्रावयेत्यध्वर्युः । श्रौषडित्याग्नीध्रः । ९ ।

अग्नीत्प्रश्नः किमग्निमगानिति प्रश्नः। तथागन्नित्युत्तरम् ॥

मध्यमं परिधिमन्वारभ्य संप्रेष्यति स्वगा दैव्याहो-तृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीति। १०।

गतः ॥

अनूच्यमाने शंयुवाक आहवनीये परिधीन्प्रहरति। ११।

अनूच्यमान इति पूर्ववत् ॥

यं परिधिं पर्यधत्था इति मध्यमम्। यज्ञस्य पाथ उपसमितमितीतरौ। १२।

युगपदितरयोः प्रहरणं समितमिति लिङ्गात् ॥

उत्तरार्ध्यस्याग्रमङ्गारेषूपोहति। १३।

उपोहति उपगूहति ॥

यजमानं प्रथतेति परिधीनभिमन्त्र्य जुह्वामुपभृतोऽग्रमवधाय संस्रावभागा इति संस्रावेणाभिजुहोति।१४।

संस्रावहोमः परिध्यङ्गं तदभिहोमत्वात् प्रहृत्य परिधीञ्जुहोतीति वाजिनब्राह्मणस्य परिधीन्प्रहृत्य संस्रावान्तं कृत्वेति व्याकरणाच्च। अतोऽसौ न निवर्तते प्रायणीयायाम् ॥

अत्रैवर्त्विजो हविःशेषान्भक्षयन्ति। १५।

अस्मिन्काले भक्षयन्ति नातः पुरस्तात्परस्ताद्वा ॥

इति सप्तमी कण्डिका।

इति द्वितीयः पटलः ॥

दर्शपूर्णमासौ



आज्यलेपान्प्रक्षाल्य सस्रुवे जुहूपभृतावध्वर्युरादत्ते वेदं होता स्फ्यमाज्यस्थालीमुदकमण्डलुं चाग्नीध्रः। १।

गताः॥

आग्नीध्रप्रथमाः पत्नीः संयाजयिष्यन्तः प्रत्यञ्चो यन्ति। २।

पत्नीः संयाजयिष्यन्तः नान्यथा। अतः पित्र्यायामपत्नीसंयाजायां न गच्छन्ति। गच्छत्येवाध्वर्युः कर्मान्तरार्थम्॥

अग्रेण गार्हपत्यं दक्षिणेनाध्वर्युः प्रतिपद्यत उत्तरेणेतरौ। ३।

प्रतिपद्यते गच्छति॥

अग्नेर्वामपन्नगृहस्य सदसि सादयामीति कस्तम्भ्यां स्रुचौ सादयित्वा धुरि धुर्यौ पातमिति युगधुरोः प्रोहति। ४।

कं प्रकटं तद्यत्र स्तभ्यते सा कस्तम्भी। पश्चादी तु स्रुग्बद्धत्वे वां स्रुग्निनी धत्तं पातमित्येषां बद्धवदूहः न धुर्यावित्यस्य दंपत्यभिधानात्। तथा च ब्राह्मणं धुरि धुर्यौ पातमित्याह जायापत्योर्गोपीथायेति मन्त्रश्च भवति यज्ञस्य युक्तौ धुर्यावभूतामिति॥

यदि पात्या निर्वपेदेताभ्यामेव यजुर्भ्यां स्फ्ये स्रुचौ सादयेत्। ५।

यदि प्राचीतो निर्वापस्तदा द्वाभ्यामपि यजुर्भ्यां स्फ्ये स्रुचावासादयेत्। यदापि स्रुवाभ्यां पत्नीः संयाजयिष्यन्ति तदापि नियतं स्रुचोर्नयनं सादनं च नित्यवदेव विधानात्। अत एवापत्नीसंयाजार्थत्वमप्यनयोः सूचितं भवति। तेन पित्र्यायामपि क्रियते॥

**स्रुग्भ्यां स्रुवाभ्यां वा पत्नीः संयाजयन्ति। ६।**

ताभ्यामेव स्रुग्भ्यां यजन्तीत्येकः कल्पः तत्स्थानीयाभ्यामागन्तुकाभ्यां स्रुवाभ्यामिति द्वितीयः। ग्रहणार्थस्तु स्रुवः सर्वत्र नित्यः तत्र जुहूस्थानीयः स्रुवः पृथुबिलः सामर्थ्यात्॥

**वेदमुपभृतं कृत्वा जुह्वा स्रुवेण चेत्येके। ७।**

स्रुवेणेति ग्रहणार्थस्यैव स्रुवस्यानुवादः। वेदमुपभृतः स्थाने कृत्वा यथा पूर्वं जुह्वा स्रुवेण चेत्यर्थः। स्रुवोऽपि कश्चिदागन्तुर्जुह्वा सह धार्यत इत्यन्ये॥

**अपरेण गार्हपत्यमूर्ध्वज्ञव आसीना ध्वानेनोपांशु वा पत्नीः संयाजयन्ति। ८।**

अत्र स्वरव्यञ्जनयोः पृथगुपलब्धिः स ध्वनिर्ध्वानः। मुखप्रयत्नवाननभिव्यक्तशब्दप्रयोगः उपांशुः। अनयोश्च क्रुष्टेन शेष इति क्रुष्टस्वरापवादार्थं वचनम्। पत्नीरिति वक्ष्यमाणा देवताः समाचष्टे देवपत्नीसंबन्धात्॥

**दक्षिणोऽध्वर्युरुत्तर आग्नीध्रो मध्ये होता। ९।**

गतः॥

दर्शपूर्णमासौ



**आज्येन सोमत्वष्टाराविष्ट्वा जाघन्या पत्नीः संयाजयन्त्याज्यस्य वा यथागृहीतेन। १०।**

यज्ञियस्य पशोर्जाघन्या पुच्छेन लौकिकेन देवानां पत्नीः संयाजयन्ति। आज्यस्यैव वा यथागृहीतेन यथा यस्य ग्रहणमुक्तं तथा चतुरवत्तेन पञ्चावत्तेन वेत्यर्थः॥

**सोमायानुब्रूहि सोमं यजेति संप्रैषावुत्तरार्धे जुहोति। ११।**

व्याख्यातः प्राक्॥

**एवमितरांस्त्वष्टारम्। १२।**

इत्यष्टमी कण्डिका।

**देवानां पत्नीरग्निं गृहपतिमिति। १।**

एतानप्येवं याज्यानुवाक्याप्रैषैरुत्तरार्धे यजतीत्यर्थः॥

**दक्षिणतस्त्वष्टारमुत्तरतो वा मध्येऽग्निं गृहपतिम्।२।**

दक्षिणतः सोमस्योत्तरतो वा त्वष्टारं यजत्युत्तरार्ध एव। तयोर्मध्येऽग्निं गृहपतिमित्यर्थः॥

**आहवनीयतः परिश्रिते देवपत्नीरपरिश्रिते वा। ३।**

यथाहवनीयो न दृश्यते तथा परिश्रिते प्रच्छादिते गार्हपत्य इत्यर्थः॥

**राकां पुत्रकामो यजेत सिनीवालीं पशुकामः कुहूं पुष्टिकामः। ४।**

नामानि त्रीण्येतानि न पत्नीपसंयाजाः किं तु तत्कालभावीनि काम्यानि यागान्तराणि। कुतः। पूर्वत्र सोमादीनां परिगणना- च्चत्वारः पत्नीसंयाजा इति श्रुतेश्च। तेनैषां नोत्तरार्धादिनियमः॥

**नित्यवदेके समामनन्ति। ५।**

नित्यवद्यथा नित्यं तथा कामोपबन्धरहितमित्यर्थः। नित्यपक्षे विकृतावपि गच्छन्ति॥

**पुरस्तादेवपत्नीभ्य एता एके समामनन्ति। उपरि- ष्टाद्वा। ६।**

द्वावेतौ यागकालौ राकादीनामुभयथाप्याम्नानात्॥

**पूर्ववद्धोतुरङ्गुलिपर्वणी अङ्क्त्वोपस्पृष्टोदकाय होतुर्हस्ते चतुर आज्यबिन्दूनिडामवद्यति षडग्नीधः। ७।**

उपस्पृष्टोदकायेति पूर्ववत्॥

**उपहूयमानामन्वारभन्तेऽध्वर्युराग्नीध्रः पत्नी च। ८।**

गतः॥

**उपहूतां प्राश्नीतो होताग्नीध्रश्च। ९।**

उभौ स्वांस्वां हस्त्यां प्राश्नीतः॥

दर्शपूर्णमासौ



अत्र स्रुवेण संपत्नीयं जुहोति पत्न्यामन्वारब्धायां सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूताम्। संजानानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेतां स्वाहेति। १०।

अत्र अस्मिन्काले। सं पत्नीति मन्त्राक्षरसंबन्धात्संपत्नीय इति होमनाम। अन्वारब्धायामिति कर्तरि निष्ठा। न चानालम्भुकायां होमनिवृत्तिः अङ्गनिवृत्त्या प्रधानस्यानिवृत्तेः॥

पुरस्ताद्देवपत्नीभ्य एतामेके समामनन्त्युपरिष्टाद्वा। उपरिष्टाद्वा पिष्टलेपफलीकरणहोमाभ्याम्। ११।

त्रयो ऽमी कालविकल्पाः पूर्वेण सह चत्वारः तत्र पत्नीसंयाजानामपि पिष्टलेपफलीकरणहोमवत्कालोपलक्षणमात्रत्वात्। न तदङ्गमयं होमः। तेन पिष्ट्यायामपि क्रियते॥

दक्षिणाग्नाविध्मप्रव्रश्चनान्यभ्याधाय पिष्टलेपफलीकरणहोमौ जुहोति। १२।

पिष्टलेपसंयुक्तो होमः पिष्टलेपहोमः तथा फलीकरणहोमः। तौ चाज्यामिक्षादितन्त्रेष्वर्थलोपान्निवर्तेते पिष्टलेपफलीकरणप्रतिपत्त्यर्थत्वात्। पिष्टलेपहोमस्तु न केवलं तत्प्रतिपत्त्यर्थः किं तु पिण्डहोमादिवदुलूखलादिश्लिष्टपिष्टावयवादिप्रतिपादनार्थं च मन्त्रलिङ्गात्। तेन पश्वादिषु पिष्टलेपाभावे ऽपि आज्येन केवलेन कार्यः॥ तथा

दर्शपूर्णमासौ



चतुर्गृहीतं प्रकृत्याह बौधायनः अन्वाहार्यपचने प्रायश्चित्तं जुहोत्युलूखले मुसल इति। भारद्वाजस्त्वाह आज्येनैव पिष्टलेपं जुहोतीति॥ तत्र चाशिश्लेष यच्चराविति मन्त्रमूहति॥

इति नवमी कण्डिका।

---

फलीकरणहोमं पूर्वमेतद्वा विपरीतम्। चतुर्गृहीत आज्ये फलीकरणानोप्याग्ने ऽदब्धायो ऽशीततनो इति जुहोति। एवं पिष्टलेपानुलूखले मुसले यच्च शूर्प आशिश्लेष दृषदि यत्कपाले। अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्ताम्। यज्ञे या विप्रुषः सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहेति।१।

गताः॥

या सरस्वती विशोभगीना तस्यै स्वाहा या सरस्वती वेशभगीना तस्यै स्वाहेन्द्रोपानस्यकेहमनसो वेशान्कुरु सुमनसः सजातान्स्वाहेति दक्षिणाग्नौ प्रतिमन्त्रं जुहोति। २।

पुनर्दक्षिणाग्निग्रहणं निस्पष्टार्थम्॥

वेदो ऽसीति वेदं होता पत्न्या उपस्थे त्रिः प्रास्यति। ३।

हौत्रस्यात्रोपदेशो ब्राह्मणानुसारात् ॥ उपस्थो ऽङ्कः। प्रास्यति क्षिपति। प्रतिप्राशनं मन्त्रस्यावृत्तिः क्रियते क्रियान्तरेण व्यवायात्। पत्नीसंस्कारश्चायं विन्दते प्रजामिति लिङ्गात्। तेन प्रतिपत्नि प्रास्यति ॥

निर्द्विषन्तं निररातिं नुदेतीतरा प्रास्तंप्रास्तं प्रतिनिरस्यति। ४।

प्रतिनिरस्यति प्रतिक्षिपति ॥

तन्तुं तन्वन्निति वेदं होता गार्हपत्यात्प्रक्रम्य संततमाहवनीयात्स्तृणात्या वा वेदेः। ५।

आङ् उभयत्र मर्यादायाम्। वेदं विस्रस्य स्तृणाति ॥

इमं विष्यामीति पत्नी योक्त्रपाशं विमुञ्चते। ६।

गतः ॥

तस्याः सयोक्त्रे ऽञ्जलौ पूर्णपात्रमानयन्ति। ७।

पात्रपूर्णमुदकं पूर्णपात्रं तत्तूष्णीमानयति। पत्न्यनेकत्वे चावृत्तिः पूर्ववत् ॥

समायुषा सं प्रजयेत्यानीयमाने जपति। ८।

मन्त्रलिङ्गादयं पत्नीमन्त्रः ॥

निनीय मुखं विमृज्योत्तिष्ठति पुष्टिमती पशुमती प्रजावती गृहमेधिनी भूयासमिति। ९।

21

तदुदकं भूमौ निनीयार्द्रेण हस्तेन मुखं विमृज्य मन्त्रेणोत्तिष्ठति ॥

इति दशमी कण्डिका ।

इति तृतीयः पटलः ॥

---

यथेतमाहवनीयं गत्वा जुह्वा स्रुवेण वा सर्वप्रायश्चित्तानि जुहोति । १ ।

यथेतं येन मार्गेण पश्चाद्गतः तेन प्रत्यागत्य दर्शपूर्णमासयोरविज्ञातदोषनिर्घातार्थानि प्रायश्चित्तानि जुहोत्याज्यस्थाल्या आज्येन दर्विहोमत्वात् । तच्च दर्शितमेव प्राक् । तथाज्यस्थाल्याः सर्वप्रायश्चित्तानीत्येव कल्पान्तरकाराः ॥

ब्रह्म प्रतिष्ठा मनस इत्येषा ॥ आश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताहुतिरेतु देवान् ॥ यद्वो देवा अतिपादयानि वाचा चित्प्रयतं देवहेडनम् । अरायो अस्माँ अभिदुच्छुनायतेऽन्यत्रास्मन्मरुतस्तं निधेतन ॥ ततं म आपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते । अयं समुद्र उत विश्वभेषजः स्वाहाकृतस्य समु तृप्णुतर्भुवः ॥ उद्वयं तमसस्परि उदु त्यं चित्रमिमं मे वरुण तत्त्वा

यासि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्यया-सन्मनसा हितः। अयासन्हव्यमूहिषे ऽया नो धेहि भेषजम्॥ प्रजापत इत्येषा॥ इष्टेभ्यः स्वाहा वषडनि-ष्टेभ्यः स्वाहा। भेषजं दुरिष्ट्यै स्वाहा निष्कृत्यै स्वाहा। दौराध्यै स्वाहा दैवीभ्यस्तनूभ्यः स्वाहा। ऋद्ध्यै स्वाहा समृद्ध्यै स्वाहा॥ अयाश्चाग्ने ऽस्यनभिशस्तिश्च सत्य-मित्त्वमया असि। अयसा मनसा धृतो ऽयसा हव्य-मूहिषे ऽया नो धेहि भेषजम्॥ यदस्मिन्यज्ञे ऽन्तरगाम मन्त्रतः कर्मतो वा। अनयाहुत्या तच्छमयामि सर्वं तृप्यन्तु देवा आतृपन्तां घृतेन। २।

इत्येकादशी कण्डिका।

---

आज्ञातमनाज्ञातममतं च मतं च यत्। जातवेदः संधेहि त्वं हि वेत्थ यथातथम्॥ यदकर्म यन्नाकर्म यदत्यरेचि यन्नात्यरेचि। अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु॥ यदस्य कर्मणो ऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सु-हुतं करोतु॥ यत इन्द्र भयामहे ततो नो अभयं कृधि। मघवञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि॥ स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी।

वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः॥ आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः। यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम॥ अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु। अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथम्॥ पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः। अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथम्॥ यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्तासः। अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजाति॥ यद्विद्वांसो यदविद्वांसो मुग्धाः कुर्वन्त्यृत्विजः। अग्निर्मा तस्मादेनसः अग्ना देवी च मुञ्चताम्। १।

इति द्वादशी कण्डिका।

---

अयाडग्निर्जातवेदा अन्तरः पूर्वो अस्मन्निषद्य। सन्वन्सनिं सुविमुचा विमुञ्च धेह्यस्मासु द्रविणं जातवेदो यच्च भद्रम्॥ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता पुरुत्रा। तेभ्यो न इन्द्रः सवितोत विष्णुर्विश्वे देवा मुञ्चन्तु मरुतः स्वस्त्या॥ यो भूतानामुद्बुध्यस्वाग्न उदुत्तममिति व्याहृतिभिर्विहृताभिः समस्ताभिश्च हुत्वा। १।

दर्शपूर्णमासौ



अत्रोद्धुष्यस्वाग्न इति सांहित्येव गृह्यते नाग्निहोत्रे वक्ष्यमाण आदि-प्रदिष्टत्वात् ॥

पूर्ववद्ध्रुवामाप्याय्य देवा गातुविद इत्यन्तर्वेद्यूर्ध्वस्तिष्ठन्ध्रुवया समिष्टयजुर्जुहोति । २ ।

अत्रापूर्वाप्यायनविधानादेवाप्राप्तो मन्त्र इति कृत्वा पूर्ववदिति मन्त्रातिदेशः । मन्त्रान्त एव होमो न पूर्वयोः स्वाहाकारयोः समिष्टयजुरित्येकवचनात् पशावनेन सहान्ये च द्वे उक्त्वा त्रीणि समिष्टयजूंषि जुहोतीति वचनाच्च ॥

मध्यमे स्वाहाकारे बर्हिरनुप्रहरति । ३ ।

मन्त्रान्ते पारिभाषिकस्वाहाकारापेक्षया द्वितीयस्यात्र मध्यमत्वमभिप्रेतम् । अत एव च लिङ्गादवगच्छामो मन्त्रान्तगत एव स्वाहाकारः प्रदानार्थो न मध्यगत इति । आदिगतस्यापि क्वचित्प्रदानार्थत्वं परिवप्ये दर्शयिष्यामः ॥ मध्यमे स्वाहाकार इति कोऽर्थः । वाचि स्वाहेत्यस्मिन्नित्यर्थः । तेन पशुसोमयोः समिष्टयजुर्विवृद्धावपि तस्मिन्नेव बर्हिःप्रहारः । प्राकृतस्यैव मध्यमस्य तत्रापि विद्यमानत्वाद्बर्हिः सर्वमनुप्रहरति ॥ बर्हिर्मुष्टिं वेति तु सत्याषाढभारद्वाजौ ॥

यदि यजमानः प्रवसेत्प्रजापतेर्विभान्नाम लोक इति ध्रुवायां यजमानभागमवधाय समिष्टयजुषा सह जुहुयात् । ४ ।

दधामीति लिङ्गादवधाने मन्त्रः ॥

अभिस्तृणीहि परिधेहि वेदिं जामिं मा हिंसीरमुया शयाना। होतृषदना हरिताः सुवर्णा निष्का इमे यजमानस्य ब्रध्न इति होतृषदनैर्वेदिमभिस्तीर्य को वो ऽयोक्षीत्स वो विमुञ्चत्वित्यन्तर्वेदि प्रणीता आसाद्य विमुञ्चति। ५।

प्रणीतानां विमोचने मन्त्रस्तल्लिङ्गत्वात्। कर्माङ्गत्वनिवर्तनार्थतया मन्त्रोच्चारणमेव विमोकः॥

यं देवा मनुष्येषूपवेषमधारयन्। ये अस्मदपचेतसस्तानस्मभ्यमिहा कुरु॥ उपवेषोपविड्ढि नः प्रजां पुष्टिमथो धनम्। द्विपदो नश्चतुष्पदो ध्रुवाननपगान्कुर्विति पुरस्तात्प्रत्यञ्चमुत्कर उपवेषं स्थविमत उपगूहति। ६।

स्थविमतः स्थूलमूलप्रदेशादारभ्योत्करपांसुषु पुरस्ताद्भागेन प्रत्यगुपगूहति॥

इति त्रयोदशी कण्डिका।

---

यद्यभिचरेद्योपवेषे शुक्सामुमृच्छतु यं द्विष्म इत्यथास्मै नामगृह्य प्रहरति। १।

यद्यभिचरितुमिच्छेदथास्मै नामगृह्य अस्याभिचर्यमाणस्य नाम योपवेषे शुक् सा देवदत्तमृच्छत्विति गृहीत्वोत्कर एव प्रहरति

वज्रवत्तद्धिंसार्थतयाक्षिपतीत्यर्थः। अथवा असौ एनमुद्दिश्य तस्यैव नाम गृहीत्वा प्रहरतीत्यर्थः॥

**निरमुं नुद ओकसः सपत्नो यः पृतन्यति। निर्बाध्येन हविषेन्द्र एणं पराशरीत्॥ इहि तिस्रः परावत इहि पञ्च जनाँ अति। इहि तिस्रोऽति रोचना यावत्सूर्यो असद्दिवि॥ परमां त्वा परावतमिन्द्रो नयतु वृत्रहा यतो न पुनरायसि शश्वतीभ्यः समाभ्य इति हतोऽसाववधिष्मामुमित्येताभिः पञ्चभिर्निरस्येन्निखनेद्वा। २।**

यजुष्ट्वेऽप्यन्त्ययोर्ऋग्बाहुल्यादेताभिरिति स्त्रीलिङ्गनिर्देशः। तत्र च ऋग्यजुर्विवेचनार्थः प्रथम इतिकरणः। शत्रुनामग्रहणार्थो मन्त्रेष्वदःशब्दः। निरस्येन्निर्णुदेदुत्करे। निखनेन्निहन्याच्छङ्कुवत्॥

**अवसृष्टः परापत शरो ब्रह्मसंशितः। गच्छामित्रान्प्रविश मैषां कंचनोच्छिष इति वा। ३।**

अनन्तरविधावेवायं मन्त्रविकल्पः॥

**यानि घर्मे कपालानीति चतुष्पदयर्चा कपालानि विमुच्य संख्यायोद्वासयति। ४।**

चतुष्पदयर्चेति ब्राह्मणानुकरणम्। अत्रापि विमोकः पूर्ववत्। संख्यावचनमप्रमादार्थं यद्येकं कपालं नश्येदिति प्रणाशे प्रत्यवायप्रायश्चित्तयोः श्रवणात्॥

**संतिष्ठेते दर्शपूर्णमासौ । ५ ।**

एवमन्तावाध्वर्यवेण संतिष्ठेते याजमानशेषस्तु वक्ष्यते ॥ सन्ति हेडा-सूक्तवाकशंयुवाका नाम होतृनिगदसंयुक्तास्त्रयः कर्मविशेषास्तेष्विडा तावद्द्रव्यभेदेनोभयोरप्याहवनीयगार्हपत्ययोर्नियता हविरिडाहवनीये आज्येडा गार्हपत्य इति । तथा सूक्तवाकशंयुवाकावपि सूत्रान्तर-कारैर्नियमविकल्पाभ्यामुभयत्रेष्येते । सूत्रकारस्तु तावन्यतरत्रैवेच्छन् हविरिडानन्तरमाहवनीये पूर्वमभिहितवानिदानीं त्वाज्येडानन्तरं गार्हपत्ये स्यातां नाहवनीय इत्याह ॥

**शंय्वन्तं वाहवनीये संस्थापयेदाज्येडान्तं गार्हपत्ये । इडान्तं वाहवनीये शंय्वन्तं गार्हपत्ये । ६ ।**

तत्र तावद्वाभ्यां वाशब्दाभ्यां द्वावेव कल्पौ विकल्प्येते न चत्वारः । आहवनीयगार्हपत्यशब्दाभ्यां च गार्हपत्यात्पूर्वापरदेशौ लक्ष्येते अनग्निसंयोगित्वादिडायाः यदि शंय्वन्तं पश्चात्स्यादिति लिङ्गाच्च । तदयमर्थः । यत्पूर्वदेशसंयुक्तमिडादि कर्म तद्यथाप्रसिद्धमेव शंयु-वाकान्तं कुर्यादपरदेशसंयुक्तमप्याज्येडान्तमिति प्रथमः कल्पः । स च पूर्वोक्त एव कल्प उत्तरविकल्पार्थमनूदितो वेदितव्यः यथा चैत्रो भोजनीय इत्युक्त्वा चैत्रो वा भोज्यतां मैत्रो वेति । द्वितीयः कल्प-स्त्विडान्तमेव संस्थापयेत्पूर्वदेशे न तु सूक्तवाकशंयुवाकौ तत्र भवतः तौ त्वपरदेशे भवत इति । यदा त्वपरदेशे भवतस्तदैवं प्रयोग इत्याह ॥

**यदि शंय्वन्तं पश्चात्स्याद्वेदात्तृणमपादाय जुह्वामग्र-मङ्ज्यात्स्रुवे मध्यमुपभृति वाज्यस्थाल्यां मूलम् । तस्य प्रस्तरवत्कल्पः सूक्तवाकाद्या शंयुवाकात् । ७ ।**

यदि शंयुवाकान्तं कर्म पश्चाद्देशे स्यात्तदाज्येडानन्तरं प्रस्तरस्थाने वेदतृणमङ्क्त्वा तद्वदेव प्रहरति। तत्र सूक्तवाकाद्यविकृतमा शंयुवाकादित्यर्थः॥ प्रस्तरप्रहारस्तु निवर्तते प्रत्याम्नानात्। परिधिप्रहारस्तु भवत्येव स्वकाले प्राप्तत्वादप्रत्याम्नातत्वाच्च। न चैषां गार्हपत्ये प्रहारः शंयुवाकानङ्गत्वादाहवनीयसंयोगित्वाच्च। तथान्येषामपि तद्देशसंयोगिनां तत्रतत्र यथाकालं प्रयोगो ऽवगन्तव्यः॥ केचित्तु संस्थापनशब्दौचित्याद्दर्शपूर्णमासयोरेवेमौ खण्डसंस्थाविकल्पौ व्याचक्षते तत्रतत्र यत्तन्त्रं तच्छंयुवाकाद्यन्तमेव संस्थापयेदिति। तत्र गुणागुणयोः स्थापने प्रमाणं सूत्रविद इत्यलं निर्बन्धेन॥ सन्तीह दर्शपूर्णमासयोरधिकारवाक्यानि स्वर्गकामो दर्शपूर्णमासाभ्यां यजेत सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेत्यादीनि। तानीदानीं व्याचष्टे॥

## स्वर्गकामो दर्शपूर्णमासौ। ८।

कुर्यादिति शेषः। नित्यौ दर्शपूर्णमासावफलार्थिनाप्यनुष्ठेयाविति स्थास्यति। तथाप्येतौ स्वर्गं कामयमानस्य तमपि साधयत इत्यर्थः॥

## एककामः सर्वकामो वा। ९।

एककाम इत्यनन्तरोक्तस्यैव स्वर्गकामस्योत्तरविकल्पार्थो ऽनुवादः। स्वर्गकामश्रुतेश्च स्वर्गकामो वा तौ कुर्यात्सर्वेभ्यः कामेभ्य इति श्रुतेः सर्वकामो वेत्यर्थः। यदा तु सर्वकामस्तदा

## युगपत्कामयेताहारपृथक्त्वे वा। १०।

दर्शपूर्णमासयोरारम्भदशायामेव सर्वप्रयोगार्थं सर्वान्कामान्युगपत्कामयेत आहारआहारे वा पृथगेकैकमित्यर्थः ॥

ताभ्यां यावज्जीवं यजेत। ११।

आधानप्रभृति यावन्तं कालं जीवति तावद्यजेत न कदाचिद्विच्छिन्द्यात्। यदि विच्छिन्द्यात्प्रत्यवेयादित्यर्थः। प्रव्रजितस्य तु दीक्षितवत्प्रतिषेधादेव निवृत्तिरनग्नित्ववचनसामर्थ्याच्च ॥

त्रिंशतं वा वर्षाणि। १२।

त्रिंशतमेव वर्षाणि यजेत ततो विरमेत् ॥

जीर्णो वा विरमेत्। १३।

यावज्जरयाभिभूतो ऽसमर्थः कर्मणि स्यात्तावदिष्ट्वा विरमेत्तद्विरमादेव निवृत्तिस्तद्विकाराणाम्। न तु विरमेदग्निहोत्रादिति यथोक्तं कात्यायनेन अग्निहोत्रमेव जुहुयादिति ॥

द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत यः कामयेतर्ध्नुयामित्युक्ताद्वैकामेव यजेतेति। १४।

अथानयोः कर्मणोर्ऋद्धिकामप्रयोगे विशेषः प्रदर्श्यते। यः कामयेतर्ध्नुयामिति पौर्णमासीममावास्यां च स्वे स्वे काले द्वे द्वे यजेत। किमुक्तं भवति। एकस्मिन्नेव पर्वणि पौर्णमासीमभ्यस्येत् पञ्चदश्यामेकां प्रतिपदीतराम्। तथा स्वकाले ऽमावास्यामित्यर्थः ॥ तत्र प्रथमेतिशब्दानन्तरमिति तत्रोपात्तं द्रष्टव्यम् ॥ इत्युक्ताह एवमभ्यासमुक्त्वा

पुनर्ब्राह्मणमाह एकामेव यजेतेति । उभयीमप्येकामनभ्यस्तामेव यजेत न तु द्वे द्वे इत्यर्थः । वैकल्पिको ऽभ्यास इत्युक्तं भवति ॥

इति चतुर्दशी कण्डिका ।

इति चतुर्थः पटलः ॥

---

अथोत्तरेण पटलेन दर्शपूर्णमासयोर्नित्यान्काम्यांश्चानुनिर्वाप्यान् गुणविकारांश्चोपदिशति ॥

**संस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय पुरोडाशमेकादशकपालमनुनिर्वपति । १ ।**

पौर्णमासीमनुनिर्वपतीति वचनात् । समुदायाङ्गं वैमृधः तेन पौर्णमासविकारेषु न भवति । आमावास्यं त्वस्य तन्त्रमैन्द्राग्नविकारत्वात् ॥

**समानतन्त्रमेके समामनन्ति । २ ।**

गतः ॥

**तस्य याथाकामी प्रक्रमे । प्रक्रमात्तु नियम्यते । ३ ।**

तस्य वैमृधस्य प्रक्रमे याथाकाम्यं दर्शपूर्णमासारम्भदशायामेवारभ्यते न वा । अयं तु विशेषः प्रक्रमान्नियम्यत इति । किमुक्तं भवति । यद्यारभ्यते न कदाचित्त्यज्यते यदि नारभ्यते न कदाचिद्गृह्यत इत्यर्थः॥ तथा च वैमृधं प्रकृत्याह कात्यायनः तं यदा निर्वपेन्न तत ऊर्ध्वं विरमेदिति । भारद्वाजश्चाह नित्यवदेके समामनन्ति काम्यवदेक इति ॥

सप्तदशसामिधेनीको यथाश्रद्धदक्षिणः । ४ ।

वैमृध इति शेषः । समानतन्त्रत्वे ऽपि केचिद्दक्षिणायाः समुच्चयमिच्छन्ति ॥

शर्धवत्यौ संयाज्ये । अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु । सं जास्पत्यं सुयममाकृणुष्व शत्रूयतामभितिष्ठा महांसि ॥ वातोपधूत इषितो वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे । आ ते यतन्ते रथ्यो यथा पृथक् शर्धांस्यग्ने अजराणि धक्ष्यत इति । ५ ।

संयाज्ये इति सौविष्टकृत्योर्याज्यानुवाक्ययोः समाख्या ॥

अग्नीषोमीयमेकादशकपालं पौर्णमास्यामनुनिर्वपत्यादित्यं घृते चरुं सारस्वतं चरुममावास्यायां पौष्णं चैन्द्रमेकादशकपालममावास्यायां पौर्णमास्यां च भ्रातृव्यवतो ऽभिचरतो वा । ६ ।

भ्रातृव्यादात्मानं रिरक्षिषतस्तं जिघांसतो वा द्वे इमे इष्टी द्वयोः पर्वणोरनुनिर्वपति । तत्र पौर्णमास्यां संस्थाप्य वैमृधं अग्नीषोमीयादित्यौ निर्वाप्यौ सारस्वतपौष्णावमावास्यायाम् । ऐन्द्रस्तूभयत्र । तृतीयस्तेषु च पौष्णः पिष्टैश्चरुः तस्मात्पूषा प्रपिष्टभाग इत्यविशेषेण श्रवणात् पिष्टानां पौष्णं अपयतीति प्रदर्शनाच्च ॥

इन्द्राय चात्रे चरुं द्वितीयं वैमृधस्य कुर्याद्यो मृत्योर्ज्यान्या वा बिभीयात् । मुष्करो दक्षिणा । ७ ।

दृश्यपूर्णमासौ



द्वितीयं वैमृधस्येति वैमृधेन समानतन्त्रमित्यर्थः। वैमृधः पौर्णमासमानतन्त्रे ऽपि सद्वितीयो निरूप्यते। ज्यानिः व्याधिपीडा। मुष्को ऽण्डः तद्वान्बलीवर्दो मुष्करः सेचनसमर्थ इति यावत्॥

इन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालमनुनिर्वपेत्प्रजाकामः पशुकामः सजातकामः। ८।

सजाताः सग्रामाः तत्कामस्तैः सह वस्तुकामः ग्रामकाम इति यावत्॥

एतं वानुनिर्वाप्यं कुर्वीत। ९।

एतमैन्द्रियावतमेव वा वैमृधस्य स्थाने नित्यमनुनिर्वाप्यं कुर्वीत॥

इतरौ वा। १०।

अनन्तरोक्तौ वा वैमृधत्रातौ सद्वितावित्यर्थः॥

यमभीव संशयीत। ११।

इति पञ्चदशी कण्डिका।

---

स इन्द्राय वैमृधायानुनिर्वपेत्। १।

यं प्रति रोगाभिभवाद्दुर्निमित्तादिना वा संशयीत इव लोकः जीवेद्यं न वेति सद्वितीयं वैमृधं निर्वपेत्॥

यो नेव घोषेन्नेव शृणुयात्स इन्द्रायांहोमुचे। २।

पुरोडाशमेकादशकपालमनुनिर्वपेदिति प्राकृतेनान्वयः। यो नैव घोषेत् यो रोगवशान्न घोषेदिव न व्यक्तं भाषितुं क्षमेत न च शृणुयादिवाव्यक्तं शृणुयादित्यर्थः ॥

**यो भ्रातृव्यवान्स्यात्स इन्द्राय वृत्रतुरे। ३।**

पूर्ववदेवान्वयः ॥

**अथ यं न कुतश्चनातपेत्स इन्द्रायैव। ४।**

यं रोगोपहतकायेन्द्रियं कुतश्चिदपि प्रकारादुष्णं वस्तु नातपेत् स इन्द्राय निरुपपदाय निर्वपेदित्यर्थः ॥

**यो भ्रातृव्यवान्स्यात्स पौर्णमासं संस्थाप्यैतामिष्टिमनुनिर्वपेदाग्नावैष्णवमेकादशकपालं सरस्वत्यै चरुं सरस्वते चरुम्। ५।**

पौर्णमासं संस्थाप्येति ब्राह्मणानुकरणार्थम्। प्रक्रान्तवैमृधस्य तु तदनुभाविन्येवेष्यते ॥

**पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्याम्। ६।**

किं तर्हि कृत्यममावास्यायाम्। न किंचिदन्यत्पिण्डपितृयज्ञादित्याह ॥

**पितृयज्ञमेवामावास्यायां कुरुते। ७।**

नन्वमावास्या निषेधादेव निवर्तिष्यते पितृयज्ञस्यानङ्गत्वात्प्रवर्तिष्यते। किमर्थोऽयमारम्भः। सत्यं पौर्णमास्या एवामावास्यायामपि प्रवृत्ति-

दर्शपूर्णमासौ



संदेहनिरासार्थमिति ब्रूयात्। कः प्रसङ्गः। अस्ति प्रसङ्गः पौर्णमासीमेव यजेतेति ब्राह्मणार्थस्य विशयित्वात्। तथा च बौधायनः। उभयत्र पौर्णमासहविर्भिर्यजेतेति बौधायन इति॥

**संक्रामेसंक्रामे वज्रं भ्रातृव्याय प्रहरतीति विज्ञायते। ८।**

संक्रामोऽतिक्रमः। दर्शस्यातिक्रमेऽतिक्रमे वज्रं शत्रवे प्रहरति स एवातिक्रमो वज्रीभूत्वा तं हन्तीत्यर्थः॥

**व्यवरार्ध्यममावास्यां संक्रामति। ९।**

व्यवरान्दर्शानतिक्रामत एव कामावाप्तिर्नार्वागित्यर्थः॥ अथ दर्शपूर्णमासयोर्गुणविकारानुपदिशति॥

**अग्नीषोमीयानि प्रधानानि स्युरमावास्यायां पौर्णमास्यां च भ्रातृव्यवतोऽभिचरतो वा। १०।**

यानि प्रधानानि दर्शपूर्णमासयोर्हवींषि तान्यग्नीषोमीयानि स्युरग्नीषोमदेवताकत्वेन गुणेन विकृतानि स्युः। तस्यतस्य धर्मेषु ये देवतानिगमास्तेषु तद्देवतापनयेनाग्नीषोमोपलक्षणं स्यादिति यावत् यथाग्नेयस्याग्नीषोमाभ्यां जुष्टं निर्वपामि अग्नीषोमाभ्यां जुष्टमभिघारयामि अग्नीषोमयोरहं देवयज्ययान्नादो भूयासमित्यादि। एवमेव सांनाय्ये आप्यायध्वमघ्निया अग्नीषोमाभ्यां देवभागमित्यादि द्रष्टव्यम्। याज्यानुवाक्ये त्वग्नीषोमीये एव देवतानुसारित्वात् तन्त्रेण चामावास्यायां प्रदानविभवात् तस्य प्रातर्दोहेन समवदायेति लिङ्गाच्च॥ समुच्चय-

स्त्वाग्निषां द्रष्टव्यभेदात् । पृथक्प्रचार एव पौर्णमास्यां नानाधर्मिणो-पांशुयाजेन व्यवायात् ॥

**साकंप्रस्थायीयेन यजेत पशुकाम इत्यमावास्या विक्रियते । ११ ।**

साकंप्रस्थायीयेन यजेत पशुकाम इति ब्राह्मणे । साकंप्रस्थायीयो नामामावास्याया गुणविकारमात्रं न तु संज्ञया कर्मान्तरं न चोभयोर्विकार इत्यर्थः । यत्राध्वर्युः साकं बहुभिर्दोहैः प्रस्थाय यजति स साकंप्रस्थायीयः तत्र च गुणफलं पशवस्तेन नित्यफलस्याविरोधः ॥

**द्वौ सायं दोहावेवं प्रातः । १२ ।**

यथोक्तेन दोहविधिना दोहयोर्द्वयोरभ्यासः कार्यः । तत्र सर्वेष्वपि दोहधर्मेषु विभवतां तन्त्रत्वमविभूनां चावृत्तिर्यथायथमनुसंधातव्ये ॥

**सायं सायंदोहाभ्यां प्रचरन्ति प्रातः प्रातर्दोहाभ्याम् । १३ ।**

सायं पूर्वेद्यू रात्रौ सायंदोहाभ्यां प्रचरन्ति प्रातरपरेद्युर्यथाकालं प्रातर्दोहाभ्यामित्येकीयः पक्षः । पक्षान्तरमाह ॥

**सर्वैर्वा प्रातः । १४ ।**

पूर्वस्मिन्पक्षे कतिपयप्रधानप्रतिकर्षेण नानाकालत्वात्प्रधानानां तन्त्रस्य प्रतिकर्षोत्कर्षाभ्यामावृत्त्यादिबहुन्यायविप्रतिषेधात्तमुपेक्ष्यायमेव पक्षः सूत्रकृताङ्गीकृत इति ज्ञायते तत्रैव प्रयोगविधानात् ॥

दर्शपूर्णमासौ



**पात्रसंसादनकाले चत्वार्यौदुम्बराणि पात्राणि प्र-युनक्ति । १५ ।**

चत्वारि होमार्थानि पात्राणि जुह्वा सहैकीकृत्य प्रयुनक्ति प्रागुक्त-न्यायात् ॥

**तेषां जुहूवत्कल्पः । १६ ।**

तेषां संमार्जनादिसंस्कारो जुहूवत्कार्यः । तत्र वाचं प्राणमिति मन्त्रो वाजि त्वा सपत्नसाहमित्यूह्यते गुणविकृतित्वात् ॥

**आज्यभागाभ्यां प्रचर्याग्नेयेन च पुरोडाशेनाग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाहेन्द्रायानु-ब्रूह्याश्रावयेन्द्रं यजेति संप्रैषौ । १७ ।**

आश्रावणवद्द्विरुक्त्यर्थमाज्यभागवचनम् । सायंदोहयोः सायंप्रचार-पक्षार्थमिति केचित् । तदयुक्तं कुम्भीभिरिति बहुवचनेन विरोधात् आग्नेयेन च पुरोडाशेनेति समुच्चयवचनविरोधाच्च । आग्नेयप्रचारा-नुवादस्तत्रैव विशेषविवक्षया वेदितव्यः यथाग्नेयेन प्रचर्यानन्तरमग्नीधे स्रुचौ दत्त्वा कुम्भीरादाय दक्षिणातिक्रामन्पुरोऽनुवाक्यां संप्रेष्यतीति । इन्द्रग्रहणं महेन्द्रस्याप्युपलक्षणं प्राकृतदेवतानुवादत्वात् ॥

इति षोडशी कण्डिका ।

**यावत्यः कुम्भ्यस्तावन्तो ब्राह्मणा दक्षिणतउपवीतिन उपोत्थाय कुम्भीभ्यः पात्राणि पूरयित्वा तैरध्वर्युं जुह्वतमनु जुह्वति । १ ।**

यावत्यः कुम्भ्य इति विशेषणमसमासार्थं ब्राह्मणानां ते चर्त्विजो ऽभिप्रेताः अधिकारात् अध्वर्युं जुह्वतमिति लिङ्गाच्च ॥ दक्षिणत-उपवीतिन इति यज्ञोपवीतिन इत्यर्थः यथा दक्षिणत उपवीयोपविश्य अजिनं वासो वा दक्षिणत उपवीयेत्यादौ । अथ वोपवीतिनो दक्षिणत उपोत्थाय न त्वपरेणाहवनीयमतिक्रम्येत्यर्थः ॥ उपवीत-वचनमुत्तरीयनियमार्थं मा भूत्सूत्रविकल्पो ऽपि वा सूत्रमेवोपवीतार्थ इति। कर्मार्थं वा द्वितीयमुपवीतं विधीयते । तथा कर्मार्थं यज्ञोपवीतविधिं प्रकृत्य बौधायनः अजिनं वासः सूत्रं वा द्वितीयं यस्य यद्भवति तेन स उपव्ययत इति ॥

**स्विष्टकृद्भक्षाश्च न विद्यन्ते । २ ।**

दोहानामिति शेषः । तेन दोहाः सर्वहुता इत्युक्तं भवति ॥

**समानमत ऊर्ध्वम् । संतिष्ठते साकंप्रस्थायीयः । ३ ।**

गतौ ॥

**दाक्षायणयज्ञेन सुवर्गकामः । ४ ।**

यजेतेति शेषः ॥ दाक्षायणेन दृष्टो यज्ञो दाक्षायणयज्ञः । कर्म-धारय इति केचित् । तन्न शोभते दाक्षायणत्वनाम्नो विशेषणस्या-प्रसिद्धेः यज्ञो दाक्षायणस्येति मानववचनात् सार्वसेनियज्ञो वसिष्ठ-

दर्शपूर्णमासौ



यज्ञः शौनकयज्ञ इत्यादिभिर्वैरूप्यायोगाच्च ॥ सो ऽपि दर्शपूर्णमासयोरेव गुणविकारः। कर्मान्तरमित्येके। तथा चाह कात्यायनः नामफलगुणयोगात्कर्मान्तरं गुणविधानं वा संनिधिसंपद्वचनाभ्यामिति ॥

द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत। ५।

व्याख्यातो ऽयमृद्धिकामप्रयोगे ॥

आग्नेयो ऽष्टाकपालो ऽग्नीषोमीय एकादशकपालः पूर्वस्यां पौर्णमास्यामाग्नेयो ऽष्टाकपाल ऐन्द्रं दध्युत्तरस्याम्। आग्नेयो ऽष्टाकपाल ऐन्द्राग्न एकादशकपालः पूर्वस्याममावास्यायामाग्नेयो ऽष्टाकपालो मैत्रावरुण्यामिक्षा द्वितीयोत्तरस्याम्। ६।

अत्र पुनर्विधानादसोमयाजिनो ऽपि ब्राह्मणस्याग्नीषोमीयः पुरोडाशो भवति संनयतो ऽप्यैन्द्राग्नः सांनाय्यं च। नित्यमैन्द्रं च तत्सर्वेषाम्। तथा श्रुतं चोपांशुयाजश्च न भवतः सर्वहविषां पुनरनुक्रमणात्। आमिक्षामाग्रयणे व्याख्यास्यति ॥

व्यावृत्काम इत्युक्तम्। ७।

व्यावृत्काम एतेन यज्ञेन यजेतेत्यादि ब्राह्मणे यदुक्तमान्तादनुवाकस्य तदप्यनुसंधातव्यमित्यर्थः। तत्र व्यावृत्कामः समानेभ्य आत्मनो व्यावृत्तिमीप्सुः ॥ क्षुरपविरसिधारा। ताजक् सद्यः। पल्पूलनमश्मादिभिर्विना हस्ताभिमर्दनेन शोधनम् ॥

ऋत्वे वा जायामुपेयात् । ८ ।

यदुक्तं ब्राह्मणे न स्त्रियमुपेयादिति तत्र ऋतावुपेयाद्वा । महिषी-मित्यर्थः ॥ अत्र दर्शपूर्णमासव्रतवत्कर्मकालान्येतानि व्रतानीत्युक्त्वा पुनराह भारद्वाजः तेन मन्यामहे ऽन्तरालकालव्रतानि यथा चातुर्मास्येष्विति ॥

सो ऽयं दर्शपूर्णमासयोः प्रक्रमे विकल्पो ऽनेन दर्श-पूर्णमासाभ्यां वा यजेत । ९ ।

अयमपि यज्ञो वैमृधवत्प्रक्रम एव दर्शपूर्णमासाभ्यां विकल्पते । आदित एव प्रक्रम्यानेन यजेत ताभ्यां वा । न तु प्रक्रान्तस्य त्यागो ऽप्रक्रान्तस्य वा ग्रहणमिति ॥

तेन पञ्चदश वर्षाणीष्ट्वा विरमेद्यजेत वा । १० ।

पञ्चदशवर्षतास्य दर्शपूर्णमासयोस्त्रिंशद्वर्षतया संमिता वेदितव्या प्रयोगतो द्वैगुण्यात् । यजेत वा यावज्जीवमिति शेषः ॥

संतिष्ठते दाक्षायणयज्ञः । ११ ।

गतः ॥

एतेनैडादधः सार्वसेनियज्ञो वसिष्ठयज्ञः शौनक-यज्ञश्च व्याख्याताः । १२ ।

इडादधेन दृष्ट ऐडादधः । एवमुत्तरे ऽपि द्रष्टव्यास्ते च दाक्षायण-

दर्शपूर्णमासौ



यज्ञेन व्याख्याताः तत्समानप्रयोगास्तत्समानफलाश्चेत्यर्थः। नामधेय-प्रयोजनभेदादधीयं हविरिदमेषां मयीत्यादि द्रष्टव्यम्॥

इति सप्तदशी कण्डिका।

इति पञ्चमः पटलः॥

---

**ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोः। १।**

दार्शपौर्णमासिकमिदानीं ब्रह्मत्वमुपदिश्यते। यो ब्रह्मिष्ठो ब्राह्मण-गुणेन प्रकृष्टः स ब्रह्मा भवति॥

**तं वृणीते भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह इति। २।**

यजमान इति शेषः तथा याजमाने ऽनुवादात्। यथा चैतदेवं तथा तत्रैव वक्ष्यते॥

**वृतो जपति। ३।**

यदैवं वृतस्तदोत्तरं मन्त्रं जपतीत्यर्थः। वृत इति वचनात्प्रायणीयादौ निवर्तते॥

**अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि देव सवितरेतं त्वा वृणते बृहस्पतिं दैव्यं ब्रह्माणं तदहं मनसे**

प्रब्रवीमि मनो गायत्रियै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभे ऽनुष्टुप्पङ्क्त्यै पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो विश्वे देवा बृहस्पतये बृहस्पतिर्ब्रह्मणे ब्रह्म भूर्भुवः सुवर्बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणां बृहस्पते यज्ञं गोपायेत्युक्त्वापरेणाहवनीयं दक्षिणातिक्रम्य निरस्तः परावसुः सह पाप्मनेति ब्रह्मसदनात्तृणं निरस्येदमहमर्वावसोः सदने सीदामि प्रसूतो देवेन सवित्रा बृहस्पतेः सदने सीदामि तदग्नये प्रब्रवीमि तद्वायवे तत्सूर्याय तत्पृथिव्या इत्युपविशति। ४।

उत्तरतो वेदेस्तिष्ठन्नेतं जपमुक्त्वा ततो दक्षिणातिक्रम्योपविशति॥

आहवनीयमभ्यावृत्यास्ते। ५।

उपविशन्नावृत्याहवनीयाभिमुख आस्ते॥

कर्मणिकर्मणि वाचं यच्छति। ६।

कर्मणिकर्मणि सर्वेष्वेव कर्मसु॥

मन्त्रवत्सु वा कर्मसु। याथाकामी तूष्णीकेषु। ७।

अथवा मन्त्रवत्स्वेव कर्मसु वाग्यमननियमस्तूष्णीकेषु त्वनियम इत्यर्थः॥

यदि प्रमत्तो व्याहरेद्वैष्णवीमृचं व्याहृतीश्च जपित्वा वाचं यच्छेत्। ८।

प्रमादे प्रायश्चित्तमेतत् ॥

ब्रह्मन्नपः प्रणेष्यामीत्युच्यमाने । ९ ।

इत्यष्टादशी कण्डिका ।

---

प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्योँ प्रणयेति प्रसौति । १ ।

उच्यमान इत्यत्र न वर्तमानकालो विवक्षितः आमन्त्रणमध्ये ऽनुज्ञानुपपत्तेः । प्रसौति अनुजानाति । उपांशुजपमुक्त्वोच्चैः प्रसवः स च प्रणवादिः यज्ञेषु चैतदादयः प्रसवा इति वचनात् ओमिति ब्रह्मा प्रसौतीति श्रुतेश्च ॥

सर्वेष्वामन्त्रणेष्वेवं प्रसवस्तेन कर्मणा यस्मिन्नामन्त्रयते । २ ।

यत्रयत्र कर्मण्येनमध्वर्युरामन्त्रयते ब्रह्मन्प्रोक्षिष्यामीत्यादिभिर्निगदैस्तत्रतत्रामन्त्रितेनैव तेनतेनामन्त्रणविषयेण प्रोक्षणादिना कर्मणा विशिष्टः प्रसवः कार्यः यथा ओं प्रोक्ष ओं परिगृहाणेत्यादि ॥

प्रोक्ष यज्ञमिति हविष इध्माबर्हिषश्च प्रोक्षे । बृहस्पते परिगृहाण वेदिं स्वगा वो देवाः सदनानि सन्तु । तस्यां बर्हिः प्रथतां साध्वन्तरहिंसा नः पृथिवी देव्यस्त्वित्युरस्मिन्परिग्राहे । प्रजापते ऽनुब्रूहि यज्ञमिति

सामिधेनीरनुवक्ष्यन्तम् । वाचस्पते वाचमाश्रावयैता-माश्रावय यज्ञं देवेषु मां मनुष्येष्विति प्रवरे । ३ ।

एतेषु कर्मस्वामन्त्रित एतान्मन्त्राञ्जपित्वा प्रसौति ॥ सामिधेनीरनुवक्ष्यन्तमिति होतारमिति शेषः । स यत्र ब्रूयाद्ब्रह्मन्सामिधेनीरनुवक्ष्यामीति तदा प्रजापते ऽनुब्रूहीति प्रसौति ॥

देवता वर्धय त्वमिति सर्वत्रानुषजति । ४ ।

गतः ॥

मित्रस्य त्वा चक्षुषा प्रेक्ष इति प्राशित्रमवदीयमानं प्रेक्षते । ५ ।

प्रेक्षणे सकृदेव मन्त्रो हविर्गणे ऽप्यकरणत्वादव्यवायाच्च यथा पशुगणे मनोता ॥

ऋतस्य पथा पर्येहीति परिह्रियमाणं सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्याह्रियमाणम् । ६ ।

परिह्रियमाणमग्रेणाहवनीयं आह्रियमाणमासन्नं ह्रियमाणम् । प्रतीक्षत इति शेषः ॥

सावित्रेण प्रतिगृह्य पृथिव्यास्त्वा नाभौ सादयामी-डायाः पद इत्यन्तर्वेदि व्यूह्य तृणानि प्राग्दण्डं सादयि-त्वादब्धेन त्वा चक्षुषावेक्ष इत्यवेक्ष्य सावित्रेणाङ्गुष्ठेनो-पमध्यमया चाङ्गुल्यादायाग्नेस्त्वास्येन प्राश्नामि ब्राह्मण-स्योदरेण बृहस्पतेर्ब्रह्मणेन्द्रस्य त्वा जठरे सादयामीत्य-संखादन्नपिगिरति । ७ ।

दर्शपूर्णमासौ



सावित्रः प्रतिगृह्णामीत्यन्तः प्रतिग्रहे तथैव ब्राह्मणे पाठात्। आदाने त्वाददे इत्यन्तः तथा दर्शितत्वात्। उपमध्यमानामिका। असंश्लेष्य प्राशित्रं दन्तैरनभिमृश्य। अपिगिरति निगिरति ॥

इत्येकोनविंशी कण्डिका।

---

या अप्स्वन्तर्देवतास्ता इदं शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ स्वाहेत्यद्भिरभ्यवनीयाचम्य घसीना मे मा संपृक्था ऊर्ध्वं मे नाभेः सीदेन्द्रस्य त्वा जठरे सादयामीति नाभिदेशमभिमृशति। १।

उच्छिष्ट एवाद्भिः प्राशित्रमभ्यवनीयान्तं नीत्वा तत आचामति ॥

वाङ्म आसन्निति यथालिङ्गमङ्गानि। २।

तत्तल्लिङ्गेन मन्त्रेण तत्तदङ्गमभिमृशति ॥

अरिष्टा विश्वानीत्यवशिष्टानि। ३।

विश्वशब्दोऽत्र सामर्थ्यादवशिष्टविश्वाङ्गाभिधायीति भावः ॥

प्रक्षाल्य पात्रं पूरयित्वा दिशो जिन्वेति पराचीनं निनयति। ४।

पराचीनमेकप्रयत्नेन निनयति ॥

मां जिन्वेत्यभ्यात्मम्। ५।

पुनरपो गृहीत्वाभ्यात्ममात्मन उपरि निनयति शेषमित्यवचनात् अपरं पूरयित्वेति कल्पान्तरवचनाच्च ॥

**यच्चास्मै ब्रह्मभागमाहरति तं प्रतिगृह्य नासंस्थिते भक्षयति । ६ ।**

नासंस्थिते न कपालविमोचनात्पूर्वमित्यर्थः तत्र संस्थावचनात् ॥

**ब्रह्मन्ब्रह्मासि ब्रह्मणे त्वाहुताद्य मा मा हिंसीरहुतो मह्यं शिवो भवेत्यन्तर्वेद्यन्वाहार्यमासन्नमभिमृशति । ७ ।**

विकृतिषु दक्षिणानेकत्वे ब्रह्माणो ब्रह्माणः स्थ इत्यादि यथार्थमूहो द्रष्टव्यः ॥

**ब्रह्मन्प्रस्थास्याम इत्युच्यमाने देव सवितरेतत्ते प्राह तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाह्योँ प्रतिष्ठेति प्रसौति । ८ ।**

ननु सर्वेष्वामन्त्रणेष्वेवं प्रसव इत्यनेनैव सिद्धस्य प्रसवस्येह पुनर्वचनं ततो ऽपकृष्येह पूर्वजपविधानं च किमर्थम् । ब्रह्मन्प्रस्थास्याम इति बहुवचनेनामन्त्रयतः प्रतिष्ठेत्येकवचनेन प्रसवः पूर्वजपस्य देवता वर्धय त्वमित्यनुषङ्गलोपश्च यथा स्यातामित्येवमर्थम् । अन्यथा हि विपरीतः प्रयोगो भवेत् । प्रतिष्ठेत्येकवचनं त्वनुज्ञातो ब्रह्मणाग्नीध्र इत्यत्रैव व्याख्यातम् ॥

दर्शपूर्णमासौ



भूमिर्भूमिमगान्माता मातरमप्यगात्। भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति यत्किंच यज्ञे मृन्मयं भिद्येत तदभिमन्त्रयेत। ९।

अनेनाभिमन्त्रितमनेनैवापो ऽभ्यवहरत्यध्वर्युः॥

ब्रह्मभागं प्राश्यायाडग्निर्जातवेदाः प्र णो यक्ष्यभि वस्यो अस्मान्सं नः सृज सुमत्या वाजवत्येत्याहवनीयमुपस्थाय यथेतं प्रतिनिष्क्रामति। १०।

कपालविमोचनान्ते दिवो भागो ऽसीति ब्रह्मभागं प्राश्याचम्यायाडग्निरित्यृचा प्र णो यक्षीति यजुषा चोपस्थाय येन मार्गेण प्रविष्टस्तेन प्रतिनिष्क्रामति॥

एवं विहितमिष्टिपशुबन्धानां ब्रह्मत्वं ब्रह्मत्वम्। ११।

यदेवं विहितं दर्शपूर्णमासयोर्ब्रह्मत्वमिदमेव सर्वेष्टीनां पशुबन्धानां च ब्रह्मत्वमित्यर्थः॥

इति विंशी कण्डिका।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायां षष्ठः पटलः।

इति तृतीयः प्रश्नः॥

ओम् ॥

**याजमानं व्याख्यास्यामः । १ ।**

दर्शपूर्णमासयोरिदानीं यजमानकर्म व्याख्यायते । तत्प्रसङ्गात्कचित्पत्नीकर्मापि यथा जायापती अश्नीत इत्यादि । यजमानयोर्वा कर्म याजमानं उपहूतो ऽयं यजमान इत्यादौ पत्न्यामपि यजमानव्यपदेशोपलम्भात् ॥

**यजमानस्य ब्रह्मचर्यं दक्षिणादानं द्रव्यप्रकल्पनं कामानां कामनम् । २ ।**

ब्रह्मचर्यं ब्रह्मचर्या मैथुनवर्जनादि । दक्षिणादानमृत्विक्परिक्रयः । द्रव्यप्रकल्पनं यज्ञसाधनद्रव्याणामुपस्थापनम् । काम्यन्त इति कामाः क्रतुफलान्यङ्गफलानि च । याजमानाधिकारे पुनर्यजमानग्रहणं सार्वत्रिकत्वार्थम् । तदयमर्थः । ब्रह्मचर्यादि चतुष्टयमविशेषेण चोदितमपि सर्वत्र यजमानस्यैव भवति नर्त्विजाम् । कुतः । कर्मणस्तदर्थत्वात् । वचनादृत्विजामपि भवति यथा यो ऽस्याग्निमाधास्यन्स्यात्स एतां रात्रिं व्रतं चरति अनड्वान्होत्रा देयः यदि कामयेताध्वर्युरात्मानमित्यादि ॥ तथा च यावदुक्तमेव कर्म पत्न्याः सर्वत्रेति न्यायविदः । सत्याषाढश्चाह यावदुक्तं पत्न्याः कर्माणि ब्रह्मचर्यं जपाश्चेति । भारद्वाजेन तूक्तमात्मसंस्कारा वापनवर्जं पत्न्या इति ॥

दर्शपूर्णमासौ दर्शपूर्णमासौ : याजमान



प्रत्यगाशिषो मन्त्रान्गार्हपत्यकरणानुपतिष्ठतेऽनुमन्त्र-यते। ३।

वेदस्याध्वर्यवसमाख्यया सर्वेषां मन्त्राणामाध्वर्यवत्वे प्राप्त उच्यते। य आत्माशिरभिवादिन आध्वर्यवे कर्मणि करणतया चाविनियुक्ता मन्त्रास्तान्गृपति तैरुपतिष्ठते तैरनुमन्त्रयते वा यजमानो नत्वध्वर्युः। कुतः। आशासितृगामिफलत्वादात्माशिषां स्वाम्यर्थत्वाच्च सर्वकर्मफलानाम्। अतः सामर्थ्येन समाख्या बाध्यत इति भावः। तदुक्तं जैमिनिनापि मन्त्राश्चाकर्मकरणास्तद्वदिति॥ ये तु करणमन्त्रास्ते प्रत्यगाशिषोऽपि विनियोगबलादाध्वर्यवा एव यथा ममाग्ने वर्च इत्यादयः। तेष्वप्याशिषो यजमानार्था एवेष्यन्ते भाक्तस्त्वस्मच्छब्दो भविष्यति॥ जपादीनां तु विषयविभागं स्वयमेव तत्रतत्र दर्शयिष्यति यथा अन्वाधीयमाने जपति अथादित्यमुपतिष्ठते प्रणीताः प्रणीयमाना अनुमन्त्रयत इत्यादि। यत्र तु न दर्शयिष्यति योग्यतयैव तत्र व्यवस्थानुसंधेया यथा प्रवरे प्रव्रियमाण इत्यादौ जपः स्व आयतने मनीषयेति गार्हपत्यमित्यादावुपस्थानमनुमन्त्रणं वा वेदिं संमृज्यमानामित्यादावनुमन्त्रणमिति। प्रायिकं चैतज्जपादि द्रष्टव्यं क्रियान्तराणामपि क्वचित्प्रदर्शनात् यथा पुरोडाशमभिमृशतीत्यादि॥

पर्वणि च केशश्मश्रु वापयते। ४।

ऐच्छिकत्वाद्वापनस्य पर्वणि पाक्षिकं सन्नियम्यते वापयत एव पर्वणीति। तेनापर्वण्यनियमः। तच्च पितृयज्ञवदनङ्गं स्वकालविधा-

नात् तेनाकरणे ऽपि दर्शपूर्णमासयोः कार्यं यथा संवत्सरमग्निहोत्रं हुत्वाथ दर्शपूर्णमासावारभते त्रिंशतं वा वर्षाणि जीर्णो वा विरमेदित्यादिकल्पेषु ॥ कर्माङ्गं वा वपनं प्रकरणात् अमृता वा एषा त्वगमेध्या यत्केशश्मश्रु मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैतीति लिङ्गाच्च तदापि पर्वग्रहणात् ॥ पथिकृन्मुख्यायां प्रकृतौ विकृतिषु चापर्वकालासु नेष्यते यथा नैमित्तिकेष्टिषु केशश्मश्रुग्रहणाल्लोमवपनमैच्छिकं वेदितव्यम् । वाजसनेयिमतात्तु तदेवादृतमित्याह ॥

**अप्यल्पशो लोमानि वापयत इति वाजसनेयकम् । ५ ।**

लोमानि तनूरुहाणि तान्यल्पान्यपि वापयितव्यानि । केशश्मश्रु त्वल्पं समुपेक्ष्यतामिति भावः । प्रकृतमेव वा श्मश्रुलोमशब्देन विवक्षितं लोमविशेषत्वाच्छ्मश्रुणः । यथाहुर्नैघण्टुकाः तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुंमुख इति ॥ तदयमर्थः । केशश्मश्रुषु च मध्ये श्मश्रु त्वल्पमपि वापयत एव केशास्त्वल्पे सन्तो नोप्येरन्निति । बौधायनस्त्वाह यदि केवलं श्मश्रु वापयिष्यमाणः स्यादिति ॥

**विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमीति यक्ष्यमाणो ऽप उपस्पृशति । ६ ।**

यक्ष्यमाणो यष्टुं कृतसंकल्पः । संकल्पश्च मनसो ऽसाधारणव्यापारत्वान्मानसः यथाहुः सांख्याः मनःसंकल्पमिति । वाचिको ऽपीत्यपरं यो यक्ष्य इत्युक्त्वा न यजत इति लिङ्गात् मनसा चिः संकल्पयति

दर्शपूर्णमासौ : आज्यमान



वाचा त्रिरुच्चैरिति बौधायनवचनाच्च ॥ तत्र क्रतुकामो ऽपि कामयितव्यः यथा वक्ष्यति क्रत्वादौ क्रतुकामं कामयते यज्ञाङ्गादौ यज्ञकाममिति। तत्प्रकारश्चोक्तो बौधायनेन यथा सर्वकामो ऽग्नीनाधास्य इत्यग्न्याधेये स्वर्गकामो दर्शपूर्णमासाभ्यां यक्ष्य इति दर्शपूर्णमासयोः स्वर्गकामः पशुना यक्ष्य इति पशुबन्धे स्वर्गकामः सोमेन यक्ष्य इति सोमे सर्वकामो ऽग्निं चेष्य इत्यग्निचयन इति ॥ तत्र लेवं कामशब्दो ऽसति कामे लुप्यते सत्यपि वा वर्जनम्। श्रेयस्तद्धि परमं परदेवताप्रीणनं परमे निःश्रेयसायेति सर्वशास्त्राणां मर्यादा। यथोक्तं भगवद्गीतासु कार्यमित्येव यत्कर्म नियतं क्रियते ऽर्जुन। सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मत इति। सूत्रकारश्चाह नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेदिति तथा धर्मं चर्यमाणमर्था अनूत्पद्यन्त इति च। श्रुतिश्च कामानुपहतस्यानन्दानुपदिशति श्रोत्रियस्य चाकामहतस्येति। तस्मादग्नीनाधास्ये दर्शेन यक्ष्ये इत्येतावानेव युक्तः संकल्पः ॥

## तदिदं सर्वयज्ञेषूपस्पर्शनं भवति। ७।

तदिदमपामुपस्पर्शनं न केवलं दर्शपूर्णमासयोः किं तु सर्वेष्वेव यजतिचोदितेष्विष्टिपशुसोमेषु भवति यक्ष्यमाणो वेष्ट्वा वेति श्रुतेः। अतश्च दर्विहोमेषु न भवति ॥

**अग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहति सूर्यमह्ने। आदित्यं ज्योतिषां ज्योतिरुत्तमं श्वोयज्ञाय रमतां देवताभ्यः॥ वसून् रुद्रानादित्यानिन्द्रेण सह देव-**

ताः। ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया॥ इमामूर्जं पञ्चदशीं ये प्रविष्टास्तान्देवान्परिगृह्णामि पूर्वः। अग्निर्हव्यवाडिह तानावहतु पौर्णमासं हविरिदमेषां मय्यामावास्यं हविरिदमेषां मयीति यथालिङ्गमाहवनीये ऽन्वाधीयमाने जपति। ८।

सद्यस्कालायां पौर्णमास्यामाद्या लुप्यते श्वोयज्ञायेति लिङ्गविरोधात्। तथा तृतीया पञ्चदशीमिति लिङ्गविरोधात्। यदा लब्धापि पञ्चदशी स्यात्तदा न लोपः। तृतीयस्या विकृतिषु तु यथार्थमूहः सर्वत्र यथा अद्ययज्ञाय इमामूर्जं प्रथमामित्यादि॥ तथा नामवतीष्विष्टिषु तेनतेन नाम्नोपलक्षणं कर्मणः यथा चैत्रं हविः आग्रयणीयं हविरित्यादि। अनामकास्तु सामान्यनाम्नोपलक्षणीयाः यथेष्टं हविरिति॥

अन्तराग्नी पशवो देवसंसदमागमन्। तान्पूर्वः परिगृह्णामि स्व आयतने मनीषयेत्यन्तराग्नी तिष्ठञ्जपति।९।

अग्नी गार्हपत्याहवनीयौ॥

इह प्रजा विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः। ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया॥ इह पशवो विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः। तान्पूर्वः परिगृह्णामि स्व आयतने मनीषयेति गार्हपत्यम्। १०।

इति प्रथमा कण्डिका।

दर्शपूर्णमासौ : याजमान



अयं पितॄणामग्निरवाड्ढव्या पितृभ्य आ। तं पूर्वः परिगृह्णाम्यविषं नः पितुं करदिति दक्षिणाग्निम्॥ अजस्रं त्वा सभापाला विजयभागं समिन्धताम्। अग्ने दीदाय मे सभ्य विजित्यै शरदः शतमिति सभ्यम्॥ अन्नमावसथीयमभिहराणि शरदः शतम्। आवसथे श्रियं मन्त्रमहिर्बुध्नियो नियच्छत्वित्यावसथ्यम्। १।

सर्वत्राग्न्याधीयमानमुपतिष्ठत इति शेषो ऽनुमन्त्रयत इति वा॥

इदमहमग्निज्येष्ठेभ्यो वसुभ्यो यज्ञं प्रब्रवीमि। इदमहमिन्द्रज्येष्ठेभ्यो रुद्रेभ्यो यज्ञं प्रब्रवीमि। इदमहं वरुणज्येष्ठेभ्य आदित्येभ्यो यज्ञं प्रब्रवीमीत्यन्वाहितेषु जपति। २।

अत्रान्वाधीयमान इति प्रक्रम्य पञ्चानामग्नीनां याजमानान्युक्त्वा तेष्वन्वाहितेष्वित्युपसंहारात्॥ सभ्यावसथ्ययोराध्वर्यवे ऽनुक्तमप्यस्ति तूष्णीकमन्वाधानमित्यवगन्तव्यम्। मन्त्रवर्णश्च भवति विजयभागं समिन्धतामिति॥

पयस्वतीरोषधय इति पुरा बर्हिष आहर्तोर्जायापती अश्नीतः। पुरा वत्सानामपाकर्तोरमावास्यायाम्। ३।

आहर्तोराहरणात् तथापाकर्तोरिति। काललक्षणा चेयम्। तेन यदा पौर्णमास्यामन्वाधानपरिस्तरणोपवासा एव क्रियन्ते यदा

वामावास्यायां न संनयते तयोः कालयोरश्नीतः प्राक् परिस्तरणानां बर्हिषो वाहरणात् । प्रथमग्रासे चोभयोर्मन्त्रः । अयं चास्मिन्नहन्यर्थप्राप्तस्याशनस्य कालनियमस्तेन सद्यस्कालाखसत्यां क्षुधि नेष्यते ॥

पौर्णमासायोपवत्स्यन्तौ नातिसुहितौ भवतः । ४ ।

उपवासः प्रागेव व्याख्यातः । तं रात्रौ करिष्यन्तावहरपि नातिसुहितौ नातितृप्तौ भवतः । तृप्तिश्चान्नस्येत्यस्यापवादः ॥

अमाषममांसमाज्येनाश्नीयातां तदभावे दध्ना पयसा वा । ५ ।

माषमांसयोः व्यञ्जनार्थयोः प्रतिषेधः । आज्यादीनि तूपसेके नियम्यन्ते । माषशब्दो मुद्गादेरपि कोशीधान्यस्य प्रदर्शनार्थः आ प्राशातिकादिति लिङ्गात् । बौधायनश्चाह सर्वमेतदहः कोशीधान्यं वर्जयेदन्यत्र तिलेभ्यस्तस्य ब्राह्मणं प्रतिपाद्याश्नीयादिति तथा पत्न्या एवैतदहरुच्छिष्टं दद्यादिति च ॥

बर्हिषा पूर्णमासे व्रतमुपैति । वत्सेष्वपाकृतेष्वमावास्यायाम् । ६ ।

अत्रापि बर्हिर्वत्सशब्दाभ्यां पूर्ववत्काललक्षणा । बर्हिषाह्रियमाणेन सहेति शेषः ॥

प्रणीतासु प्रणीयमानास्वासन्नेषु वा हविःषु व्रतमुपैतीत्युभयत्र साधारणम् । ७ ।

उभयत्रोभयोः पौर्णमास्यमावास्ययोः साधारणमिदं कालद्वयमित्यर्थः ॥

दर्शपूर्णमासौ : याजमान



अशनमग्न्यन्वाधानं व्रतोपायनमित्येके । व्रतोपाय-नमशनमग्न्यन्वाधानमित्येके । अग्न्यन्वाधानं व्रतोपा-यनमशनमित्येके । ८ ।

त्रय एते क्रमविकल्पास्त्रयाणामेषां कर्मणां यथोक्तेन मुख्येन सह चत्वारस्तत्र यदाप्यशनं पूर्वं तदापि प्रणयनात् परमे वेति वेदि-तव्यम् ॥

पयस्वतीरोषधय इत्यप आचामत्युपस्पृशति वा । ९ ।

आचामति भक्षयति ॥

अपरेणाहवनीयं दक्षिणातिक्रामति । १० ।

गतः ॥

एष एवात ऊर्ध्वं यजमानस्य संचरो भवति । ११ ।

शास्त्रीययोर्निर्गमनप्रवेशयोरेष एव पन्थाः ॥

इति द्वितीया कण्डिका ।

---

दक्षिणेनाहवनीयमवस्थाय व्रतमुपैष्यन्समुद्रं मनसा ध्यायति । १ ।

व्रतमुपयन्निति कल्पान्तरकारमतनिराकरणार्थमुक्तं व्रतमुपैष्यन्निति ॥

अथ जपत्यग्ने व्रतपते व्रतं चरिष्यामीति ब्राह्मणः । वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते व्रतं चरिष्यामीति राजन्यवैश्यौ । २ ।

राजन्यवैश्ययोरेकैकस्य त्रयो ऽपि मन्त्राः ॥

सर्वान्वा ब्राह्मणः । ३ ।

गतः ॥

अथादित्यमुपतिष्ठते सम्राडसि व्रतपा असि व्रतपतिरसि तत्ते प्रब्रवीमि तच्छकेयं तेन शकेयं तेन राध्यासमिति । ४ ।

अत्राह बौधायनः उपनिष्क्रम्याग्न्यागारादादित्यमुपतिष्ठत इति बौधायनो ऽत्रैव तिष्ठन्निति शालीकिरिति ॥

यद्यस्तमिते व्रतमुपेयादाहवनीयमुपतिष्ठन्नेतद्यजुर्जपेत् । ५ ।

गृहमेधीयाद्यर्थं वचनम् ॥

उभावग्नी उपस्तृणते देवता उपवसन्तु मे । अहं ग्राम्यानुपवसामि मह्यं गोपतये पशूनिति सायं परिस्तीर्यमाणेषु जपति । ६ ।

उभाविति लिङ्गाद्ब्राह्मणोक्ताग्निद्वयपरिस्तरणविषय एवायं मन्त्र इति केचित् । तदयुक्तं परिस्तीर्यमाणेष्विति बहुवचनात् प्राधान्याच्चयादुभयाभिधानोपपत्तेश्च यथा बहुष्वागतेषु वसिष्ठवामदेवावागताविति ॥

आरण्यं सायमाश्ये ऽश्नात्यमाषममांसम् । ७ ।

दर्शपूर्णमासौ : यजमान



अरण्येभवमन्नमारण्यं नैवारादि तत्सायमाशस्थाने ऽश्नाति। माष-मांसयोः पूर्ववद्व्यञ्जनार्थयोः प्रतिषेधः। अन्यथा ग्राम्यत्वादेव माषस्याप्राप्तेर्माषशब्दो ऽत्रापि पूर्ववद्व्याख्येयः॥ अश्नातीत्येकवचनात् आरण्याशनं पत्न्या नेष्यते। भारद्वाजेन लिङ्गा एवात्मसंस्कारास्तस्याः॥

## अपि वा काममा मार्गादा मधुन आ प्राशातिकात्।८।

मार्गं मृगविकारं मांसम्॥ प्राशातिकं कोशीधान्यं यस्मात्प्रशातनेनोद्ध्रियते॥ तदयमर्थः। यदेव किंचिद्व्यञ्जनमीप्सितं तदेव काममश्नीयान्न मार्गमिष्यमाणं भोक्तव्यमिति। मधुनस्त्वप्रतिषिद्धस्यापि अव्रत्यसामान्यादेव प्रायो निवृत्तिः स्यादिति प्रतिप्रसवः॥

## अपो वा। न वा किंचित्।९।

गतौ॥

## न तस्य सायमश्नीयाद्येन प्रातर्यक्ष्यमाणः स्यात्।१०।

यज्जातीयेन हविषा श्वोयष्टा तज्जातीयं द्रव्यं नाश्नीयात्। ततश्चाज्येनानुपसेच्यः पौर्णमास्यां सायमाशो भवति दधिपयोभ्यां च दर्शे। तथानुपवसथ्येष्वपीष्टिपशुषु श्वोभाविषु तत्साधनद्रव्याशननिवृत्तिः येन प्रातर्यक्ष्यमाण इति सामान्यतो निर्देशात् पुनःसायंग्रहणाच्च॥

## आरण्यायोपवत्स्यन्नपो ऽश्नाति न वा।११।

आरण्येनैव हविषा श्वोयष्टा यस्तस्य नास्त्यारण्याशनं तदा द्विमावेव कल्पौ व्यवतिष्ठेते इत्यर्थः। वानप्रस्थार्थमिदं वचनमितरेषां व्रीहियव-

विधानात् तस्यारण्यनियमाच्च यथा तस्यारण्येनैवात ऊर्ध्वं होम इति। विकृत्यर्थं वा वचनं यत्रारण्यं हविर्यथा गार्मुतं चरुं निर्वपेदित्यादौ। तदा त्विदमेव वचनं ज्ञापकं भविष्यति सोपवसथा अपि विकृतयो लभ्यन्त इति। बौधायनस्त्वाह इष्टिपशुबन्धाः सोपवसथाः सद्योयज्ञा वेति॥

**जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति। १२।**

कर्ममध्ये यदा जञ्जभ्यते जृम्भते तदा प्रायश्चित्तार्थमेतद्यजुर्जपेत्॥

**अमावास्यां रात्रिं जागर्ति। १३।**

गतः॥

**अपि वा सुप्यादुपरि त्वेव न शयीत। १४।**

जागरणाशक्तौ सुप्यात् उपरिशयनमेव तु वर्जयेत्॥

**अपि वोपरि शयीत ब्रह्मचारी त्वेव स्यात्। १५।**

उपरि अपि वा शयीत सर्वथापि तावद्ब्रह्मचर्यं परिपालयेदित्यर्थः॥

**उभयत्र जागरणमेके समामनन्ति। १६।**

उभयत्रामावास्यायां पौर्णमास्यां च॥

**आहवनीयागारे गार्हपत्यागारे वा शेते। १७।**

अन्यदाहवनीयागारमन्यद्गार्हपत्यस्येति वक्ष्यति। तयोरन्यतरत्रैव शेते॥

इति तृतीया कण्डिका।

दर्शपूर्णमासौ : याजमान



देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशा इह मावत इदं शकेयं यदिदं करोम्यात्मा करोत्वात्मने। इदं करिष्ये भेषजमिदं मे विश्वभेषजा अश्विना प्रावतं युवमिति जपित्वा श्वोभूते ब्रह्माणं वृणीते। १।

उक्तं ब्रह्मत्वविधावेव ब्रह्मवरणं तस्यानेन काल उच्यते। श्वोभूते प्रक्रान्ते तन्त्रे क्लृप्ते च ब्रह्मासने देवा देवेष्विति जपित्वा ततो ब्रह्माणं वृणीते। न चायं जपो ब्रह्मवरणशेषः कर्मशक्तिप्रार्थनार्थत्वात्। अतः प्रायणीयादावपि परिस्तरणोत्तरकाले भवति। केचित्तु जपित्वेत्यन्तं पूर्वग्रन्थेन योजयन्ति जपित्वा शेत इति॥

भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह इत्युक्त्वापरेणाहवनीयं दक्षिणातिक्रम्योपविशति। २।

यो ऽयं ब्रह्मवरणार्थो मन्त्रस्तमुक्त्वानन्तरमेव तेन सहातिक्रम्य यजमान उपविशति॥

पूर्वो ब्रह्मापरो यजमानः। ३।

पूर्वापरत्वं देशतः कालतश्च॥

भूश्च कश्च वाक् चर्क् च गौश्च वट् च खं च धूंश्च नूंश्च पूंश्चैकाक्षराः पूर्दशमा विराजो या इदं विश्वं भुवनं व्यानशुस्ता नो देवीस्तरसा संविदानाः स्वस्ति यज्ञं

नयत प्रजानतीर्ब्रह्मपूता स्थ। को वो युनक्ति स वो युनक्तु विश्वेभ्यः कामेभ्यो देवयज्यायै। याः पुरस्तात्प्रस्रवन्त्युपरिष्टात्सर्वतश्च याः। ताभी रश्मिपवित्राभिः श्रद्धां यज्ञमारभ इति प्रणीताः प्रणीयमाना अनुमन्त्रयते॥ यजमान हविर्निर्वप्स्यामीत्युच्यमान ओं निर्वपेत्युच्चैरनुजानाति। ४।

गतौ॥

अग्निं होतारमिह तं हुव इति हविर्निरुप्यमाणमभिमन्त्रयते। ५।

प्रतिहविरभिमन्त्रणावृत्तिः हविषो मे अस्येत्येकवचनात् निरुप्यमाणमिति वर्तमाननिर्देशाच्च॥

हविर्निर्वपणं वा पात्रमभिमृशत्यभि वा मन्त्रयते। ६।

निरुप्यते यस्मिन्पात्रे तद्धविर्निर्वपणम्। तस्यादौ सकृदभिमर्शनमभिमन्त्रणं वा पात्रसंस्कारत्वात्॥

तदुदित्वा वाचं यच्छति। ७।

पूर्वं ह्यध्वर्युयजमानयोः शाखान्तरीयो वाग्यमनकाल उक्तः प्रणीयमानासु वाचं यच्छत इति। तेनेदानीं स्वशाखास्थः कालो विकल्पते यजमानस्य। तदिति च वाक्यादिसामान्यरूपविवक्षयापि नपुंसके निर्देशः॥

दर्शपूर्णमासौ : याजमान



अथ यज्ञं युनक्ति। ८।

अथशब्दः कर्मान्तरलद्योतनार्थः। तेनानौषधतन्त्वास्वप्युपसदादिषु यज्ञयोगः कार्यः। को ऽयं यज्ञयोगो नाम। तं दर्शयति॥

कस्त्वा युनक्ति स त्वा युनक्त्विति सर्वं विहारमनुवीक्षते। ९।

गतः॥

इति चतुर्थी कण्डिका।

इति प्रथमः पटलः॥

---

चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका भुवनस्य मध्ये। मर्मृज्यमाना महते सौभगाय मह्यं धुक्ष्व यजमानाय कामानिति वेदिं संमृज्यमानाम्। १।

अनुमन्त्रयत इति शेषः॥

यो मा हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः। यः श्रुतेन हृदयेनेष्णता च तस्येन्द्र वज्रेण शिरश्छिनद्मीति स्तम्बयजुर्ह्रियमाणम्। २।

तत्र स्तम्बयजुषां पृथक्कान्मन्त्रावृत्तिः। चतुर्थस्य तु हरणस्य तूष्णीकत्वान्न भवत्यनुमन्त्रणम्॥

26

इदं तस्मै हर्म्यं करोमि यो वो देवाश्चरति ब्रह्मचर्यम्। मेधावी दिक्षु मनसा तपस्व्यन्तर्दूतश्चरति मानुषीष्वित्युत्करमभिगृह्यमाणम् । ३ ।

अभिगृहणस्य तु चतुर्थस्याप्यतूष्णीकत्वाल्लिङ्गवत्त्वेनानुमन्त्रणम् ॥

यज्ञस्य त्वा प्रमयाभिमया प्रतिमयोन्मया परिगृह्णामीति वेदिं परिगृह्यमाणाम् । ४ ।

उभयोः परिग्रहयोरनुमन्त्रयते अविशेषात् पूर्वश्चेति भारद्वाजवचनाच्च॥

यदुद्घ्नन्तो जिहिंसिम पृथिवीमोषधीरपः । अध्वर्यवः स्फ्यकृतः स्फ्येनान्तरिक्षं मोरु पातु तस्मात् ॥ यदुद्घ्नन्तो जिहिंसिम क्रूरमस्या वेदिं चकृमा मनसा देवयन्तः । मा तेन हेड उपगाम भूम्याः शिवा नो विश्वैर्भुवनेभिरस्त्वित्युद्धन्यमानाम् ॥ भूमिर्भूत्वा महिमानं पुपोष ततो देवो वर्धयते पयांसि । यज्ञिया यज्ञं विचयन्ति शं चौषधीराप इह शक्करीश्चेति क्रियमाणाम् ॥ इडेन्यक्रतूरहमपो देवीरुपब्रुवे । दिवा नक्तं च सस्रुषीरपस्वरीरिति प्रोक्षणीरासाद्यमानाः ॥ ऊर्णाम्रदु प्रथमानं स्योनं देवेभ्यो जुष्टं सदनाय बर्हिः । सुवर्गे लोके यजमानं हि धेहि मां नाकस्य पृष्ठे परमे व्योमन्निति बर्हिरासाद्यमानम् । ५ ।

गतः ॥

अद्भिराज्यमाज्येनापः सम्यक् पुनीत सवितुः पवित्रैः। ता देवीः शक्करीः शाकरेणेमं यज्ञमवत संविदाना इत्याज्यं प्रोक्षणीश्चोत्पूयमानाः। ६।

आज्यमुत्पूतं प्रोक्षणीश्चोत्पूयमाना इत्यर्थः ॥

उभावाज्यग्रहाञ्जपतः। ७।

उभाविति वचनमध्वर्युणा सह प्रयोगार्थं याजमानाध्वर्यवकाण्डयोः संकीर्णत्वात्। अमीषामित्यभिप्रायः ॥

इति पञ्चमी कण्डिका।

---

अशिश्रेम बर्हिरन्तः पृथिव्यां संरोहयन्त ओषधीर्विवृक्णाः। यासां मूलमुदवधीः स्फ्येन शिवा नस्ताः सुहवा भवन्तु ॥ सुमनसो यजमानाय सन्त्वोषधीराप इह शक्करीश्च। वृष्टिद्यावा पर्जन्य एना विरोहयतु हिरण्यवर्णाः शतवल्शा अदब्धा इत्यन्तर्वेदि बर्हिरासन्नम्। १।

गतः ॥

चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते। सा स्तीर्यमाणा महते सौभगाय सा मे धुक्ष्व

यजमानाय कामान्॥ शिवा च मे शग्मा चैधि स्योना च मे सुषदा चैध्यूर्जस्वती च मे पयस्वती चैधि। इषमूर्जं मे पिन्वस्व ब्रह्म तेजो मे पिन्वस्व क्षत्रमोजो मे पिन्वस्व विशं पुष्टिं मे पिन्वस्वायुरन्नाद्यं मे पिन्वस्व प्रजां पशून्मे पिन्वस्वेति स्तीर्यमाणाम्। २।

नात्र धातौधातौ मन्त्रावृत्तिः स्तीर्यमाणाया वेदेरेकत्वात् तदभिधानत्वाच्च मन्त्रस्य ॥

ध्रुवो ऽसीत्येतैः प्रतिमन्त्रं परिधीन्परिधीयमानान्। अस्मिन्यज्ञ उप भूय इन्नु मे ऽविक्षोभाय परिधीन्दधामि। धर्ता धरुणो धरीयानग्निर्द्वेषांसि निरितो नु दाता इति च। ३।

अस्मिन्यज्ञ इत्यनया सकृदन्ते ऽनुमन्त्रणं परिधीन्दधामीति लिङ्गात् अस्मिन्यज्ञ इति सर्वानिति भारद्वाजवचनाच्च ॥

युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहवनीयम्। तेजिष्ठा ते तपना या च रोचना प्रत्योषन्तीस्तन्वो यास्ते अग्ने। ताभिर्वर्माण्यभितो व्ययस्व मा त्वा दभन्यज्ञहनः पिशाचा इति च। ४।

अनुमन्त्रयत इति शेषः उपतिष्ठत इति वा। युनज्मीति प्रतीकेन हचस्यैव ग्रहणं न व्याहृतीनामपि तासामग्निहोत्रोपसादनादौ

दर्शपूर्णमासौ : याजमान



विनियोगाद्युक्तवचनाच्च कल्पान्तरेषु । परिध्यङ्गमिदमनुमन्त्रणं तत्सं-निधावाम्नानात् । स्यादेतत् ॥ युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहैष वा अग्नेर्योगस्तेनेति श्रुतेः पृथक्कर्मैवेदमग्नियोगो नामेति । तन्मन्दं परिधियोगस्यैव तत्राग्नियोगत्वेनाभिप्रेतत्वात् तथा तद्विमोकस्यैवाग्नि-विमोकत्वेन । तदुक्तं ब्राह्मणे वि ते मुञ्चामि रशना वि रश्मीनित्या-हैष वा अग्नेर्विमोक इति । व्याख्यास्यति च तथा सूत्रकारः वि ते मुञ्चामीति परिधिषु विमुच्यमानेष्विति । व्यक्तोक्तं च तत्सत्याषाढेन यथा युनज्मि त्वा यन्मे अग्न इति द्वाभ्यामग्निं परिधीयमानं तेजिष्ठा त इति परिधितमिति । तस्मादुपसदवभृथयगृहमेधीयादिषु परिध्यभावादनुमन्त्रणस्य लोपः ॥

विच्छिनद्मि विधृतीभ्यां सपत्नाञ्जातान्भ्रातृव्यान्ये च जनिष्यमाणाः । विशो यन्त्राभ्यां विधमाम्येनानहं स्वानामुत्तमो ऽसानि देवाः ॥ विशो यन्त्रे नुदमाने अरातिं विश्वं पाप्मानममतिं दुर्मरायुम् । सीदन्ती देवी सुकृतस्य लोके धृती स्थो विधृती स्वधृती प्राणा-न्मयि धारयतं प्रजां मयि धारयतं पशून्मयि धारयत-मिति विधृती आसाद्यमाने । ५ ।

गतः ॥

इति षष्ठी कण्डिका ।

अयं प्रस्तर उभयस्य धर्ता धर्ता प्रयाजानामुतानूयाजानाम्। स दाधार समिधो विश्वरूपास्तस्मिन्स्रुचो अध्यासादयामीति प्रस्तरमासाद्यमानम्। १।

अपि वा जुह्वमेव प्रस्तर इत्यस्मिन्कल्पे लुप्यते मन्त्रः उतानूयाजानामिति स्रुच इति च लिङ्गविरोधात्। तथा प्रायणीयोदयनीययोरनूयाजप्रयाजयोर्यथार्थमूहो ऽन्यतरस्य धर्ता धर्ता प्रयाजानां स दाधारेत्यादि॥

आरोह पथो जुहु देवयानान्यत्रर्षयः प्रथमजा ये पुराणाः। हिरण्यपक्षाजिरा संभृताङ्गा वहासि मा सुकृतां यत्र लोकाः॥ जुहूरसि घृताची गायत्रीयाग्नी कविभिर्जुषाणा। अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युप देवानाग्नेयेन शर्मणा दैव्येनेति जुह्वम्॥ अवाहं बाध उपभृता सपत्नाञ्जातान्भ्रातृव्यान्ये च जनिष्यमाणाः। दोहै यज्ञं सुदुघामिव धेनुमहमुत्तरो भूयासमधरे मत्सपत्नाः॥ सुभृदस्युपभृद्घृताची त्रैष्टुभेन छन्दसा विश्ववेदाः। अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युप देवानैन्द्रेण शर्मणा दैव्येनेत्युपभृतम्॥ यो मा वाचा मनसा दुर्मरायुर्हृदारातीयादभिदासदग्ने। इदमस्य चित्तमधरं ध्रुवाया अहमुत्तरो भूयासमधरे मत्सपत्नाः॥ ध्रुवासि धरणी धनस्य पूर्णा

दर्शपूर्णमासौ : याजमान



जागतेन छन्दसा विश्ववेदाः। अव्ययमाना यज्ञमनु-यच्छस्व सुनीती यज्ञं नयास्युप देवान्वैश्वदेवेन शर्मणा दैव्येनेति ध्रुवाम्॥ स्योना मे सीद सुषदः पृथिव्यां प्रथयि प्रजया पशुभिः सुवर्गे लोके। दिवि सीद पृथि-व्यामन्तरिक्षे ऽहमुत्तरो भूयासमधरे मत्सपत्नाः॥ अयं स्रुवो अभिजिहर्ति होमाञ्छताक्षरश्छन्दसानुष्टुभेन। सर्वा यज्ञस्य समनक्ति विष्ठा बार्हस्पत्येन शर्मणा दैव्ये-नेति स्रुवम्॥ इयं स्थाली घृतस्य पूर्णाच्छिन्नपयाः शत-धार उत्सः। मारुतेन शर्मणा दैव्येनेत्याज्यस्थालीम्।२।

सर्वत्र साद्यमानमनुमन्त्रयत इति शेषः॥

इति सप्तमी कण्डिका।

---

तृप्तिरसि गायत्रं छन्दस्तर्पय मा तेजसा ब्रह्मवर्चसेन तृप्तिरसि त्रैष्टुभं छन्दस्तर्पय मौजसा वीर्येण तृप्तिरसि जागतं छन्दस्तर्पय मा प्रजया पशुभिरिति पुरोडाशा-नज्यमानान्।१।

प्रतिहविरावृत्तिर्मन्त्रस्य तृप्तिरसीत्येकवचनात् अज्यमानानिति वर्त-माननिर्देशाच्च॥

यज्ञो ऽसि सर्वतः श्रितः सर्वतो मां भूतं भविष्यच्छ्र-यतां शतं मे सन्त्वाशिषः सहस्रं मे सन्तु सूनृता इरा-

वतीः पशुमतीः प्रजापतिरसि सर्वतः श्रितः सर्वतो मां भूतं भविष्यच्छ्रयतां शतं मे सन्त्वाशिषः सहस्रं मे सन्तु सूनृता इरावतीः पशुमतीरित्याग्नेयं पुरोडाशमासन्नमभिमृशति सर्वाणि वा हवींषि । २ ।

यद्वा सर्वाणि तदावृत्तिर्मन्त्रस्य यज्ञो ऽसीति पुरोडाशाभिधानादेकवचनाच्च । सर्वाणि हवींषीति च येषामासादनमुक्तमाध्वर्यवे चतुर्होत्रा पौर्णमासीमित्यादिना तेषामेव ग्रहणं न त्वाज्यानामपि । कुतः । स्थानात् आसन्नान्यभिमृशतीति वचनात् सर्वेषां हविषामुत्तरार्धात्सर्वेभ्यो हविर्भ्य इडामित्यादौ तथादर्शनाच्च । तेनोपसदादावभिमर्शननिवृत्तिराज्यस्य ॥

इदमिन्द्रियममृतं वीर्यमनेनेन्द्राय पशवो चिकित्सन् । तेन देवा अवतोप मामिहेषमूर्जं यशः सह ओजः सनेयं शृतं मयि श्रयतामिति प्रातर्दोहम् । यत्पृथिवीमचरत्तत्प्रविष्टं येनासिञ्चद्बलमिन्द्रे प्रजापतिः । इदं तच्छुक्रं मधु वाजिनीवद्येनोपरिष्टादधिनोन्महेन्द्रं दधि मां धिनोत्विति दधि । ३ ।

आसन्नमभिमृशतीत्यन्वयः ॥

अयं यज्ञः समसदद्धविष्मानृचा साम्ना यजुषा देवताभिः । तेन लोकान्सूर्यवतो जयेमेन्द्रस्य सख्यममृतत्वमश्याामिति सर्वाणि हवींषि । ४ ।

दर्शपूर्णमासौ : याजमान



हविष्मानयं यज्ञ इति यज्ञाभिधानात् नावृत्तिर्मन्त्रस्य। तथा च भारद्वाजः सर्वाणि समस्तान्यभिमृशति ममाग्ने वर्चो विहवेष्वित्यनुवाकेनायं यज्ञः समसदद्धविष्मानिति चेति ॥

यो नः कनीय इह कामयाता अस्मिन्यज्ञे यजमानाय मह्यम्। अप तमिन्द्राग्नी भुवनान्नुदेतामहं प्रजां वीरवतीं विदेयेत्यैन्द्राग्नम्। ५।

ऊहेनाभिमर्शनं वैमृधस्यापि ॥

ममाग्ने वर्चो विहवेष्वस्त्वित्यनुवाकेन सर्वाणि हवींष्यासन्नान्यभिमृशेदष्टाभिर्वा। ६।

व्याख्यातः पूर्वतरेण ॥

चतुर्होत्रा पौर्णमास्यां हवींष्यासन्नान्यभिमृशेत्प्रजाकामः पञ्चहोत्रामावास्यायां स्वर्गकामो नित्यवदेके समामनन्ति। ७।

गतौ ॥

इत्यष्टमी कण्डिका।

इति द्वितीयः पटलः ॥

दशहोतारं वदेत्पुरस्तात्सामिधेनीनाम्। १।

गतः॥

अङ्गिरसो मास्य यज्ञस्य प्रातरनुवाकैरवन्त्विति सामिधेनीनां प्रतिपदि जपति। २।

प्रतिपदि प्रथमायामृच्यारम्भे वा॥

अनूच्यमानासु दशहोतारं व्याख्यायोच्छुष्मो अग्न इति समिध्यमानम्। समिद्धो अग्निराहुतः स्वाहाकृतः पिपर्तु नः। स्वगा देवेभ्य इदं नम इति समिद्धम्। ३।

अनुमन्त्रयत इति शेषः उपतिष्ठत इति वा॥

मनोऽसि प्राजापत्यमिति स्रौवमाघार्यमाणम्। ४।

आघारमनुमन्त्रयत इति शेषः॥

स्रुच्यमन्वारभ्य वागस्यैन्द्रीत्यनुमन्त्रयते। ५।

आघारयितुरन्वारम्भ एवाघारान्वारम्भः। अनुमन्त्रणवचनमन्वारम्भार्थो ऽयं मन्त्र इति मा शङ्कीति॥

देवाः पितरः पितरो देवा यो ऽहमस्मि स सन्यजे यस्यास्मि न तमन्तरेमि स्वं म इष्टं स्वं दत्तं स्वं पूर्तं स्वं श्रान्तं स्वं हुतम्। तस्य मे ऽग्निरुपद्रष्टा वायुरुपश्रोतादित्यो ऽनुख्याता द्यौः पिता पृथिवी माता प्रजापति-

दर्शपूर्णमासौ : यजमान



बन्धुर्य एवास्मि स सन्यज इति होतृप्रवरे ऽध्वर्युप्रवरे च प्रव्रियमाणे । ६ ।

जपतीति शेषः । प्रवरस्थानापन्ने ऽपि सीद होतरित्यत्र गोत्रर्षिसंबन्धाकीर्तनान्नायं जपः यो ऽहमस्मि स सन्यजे यस्यास्मि न तमन्तरेमीति लिङ्गानुरोधात् ॥

चतुर्होतारं व्याख्याय वसन्तमृतूनां प्रीणामीत्येतैः प्रतिमन्त्रं प्रयाजान्हुतंहुतम् । ७ ।

अनुमन्त्रयत इति शेषः । सर्वप्रयाजशेषश्चतुर्होता । अतो न प्रतिप्रयाजमावर्तते ॥

एको ममैका तस्य यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो द्वौ मम द्वे तस्य त्रयो मम तिस्रस्तस्य चत्वारो मम चतस्रस्तस्य पञ्च मम न तस्य किंचन यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्येतैश्च प्रतिमन्त्रम् । ८ ।

हुतंहुतमनुमन्त्रयत इत्यन्वयः । यो ऽस्मानित्यादेः सर्वत्रानुषङ्गः ॥

अग्नीषोमयोरहं देवयज्यया चक्षुष्मान्भूयासमित्याज्यभागौ । ९ ।

हुतावनुमन्त्रयत इति शेषः ॥

विहृतानुमन्त्रणौ वा । १० ।

विहृतं व्यस्तमनुमन्त्रणं ययोस्तौ तथोक्तौ ॥

अग्निना यज्ञश्चक्षुष्मानग्नेरहं देवयज्यया चक्षुष्मान्भूयासम्। सोमेन यज्ञश्चक्षुष्माँ सोमस्याहं देवयज्यया चक्षुष्मान्भूयासमिति विहृतौ। ११।

यदा विहृतौ तदाभ्यां पृथगनुमन्त्रयितव्यौ ॥

पञ्चहोतारं वदेत्पुरस्ताद्धविरवदानस्य। १२।

सर्वहविरर्थः पञ्चहोता न तु प्रत्येकमावर्तते वीप्साभावात् ॥

अग्नेरहं देवयज्ययान्नादो भूयासमित्याग्नेयं हुतमनुमन्त्रयते दब्धिरसीत्युपांशुयाजमग्नीषोमयोरित्यग्नीषोमीयमिन्द्राग्नियोरित्यैन्द्राग्नमिन्द्रस्येत्यैन्द्रं सांनाय्यं महेन्द्रस्येति माहेन्द्रमग्नेः स्विष्टकृत इति सौविष्टकृतम्।१३।

अग्नीषोमीये ऽप्युपांशुयाजे दब्धिरसीत्येव मन्त्रः दब्धिरसीत्युपांशुयाजमिति वचनात्। न च लिङ्गविरोधः यागाभिधानात् ॥

पुरस्तात्स्विष्टकृतो ऽन्यदेवतान्येके समामनन्ति।१४।

प्राकृते कृतानुमन्त्रणसमाम्नाये स्विष्टकृन्मन्त्रात्पूर्वं प्राकृतीभ्यो ऽन्यदेवतान्यपि वक्ष्यमाणानि यजूंष्येके शाखिनः समामनन्ति किं चातस्तानि तु प्रकृतावसंभवात्प्रकरणं बाधित्वा तल्लिङ्गानुरोधेन विकृतिषु निवेशयितव्यानीत्याह ॥

इति नवमी कण्डिका।

दर्शपूर्णमासौ : याजमान



इन्द्रस्य वैमृधस्याहं देवयज्यया सपत्नो वीर्यवान्भूयासमिन्द्रस्य चातुरहं देवयज्यया चातो भूयासं द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोर्ऋध्यासं। भूमानं प्रतिष्ठां गमेयमित्येके। पूष्णो ऽहं देवयज्यया प्रजनिषीय प्रजया पशुभिः सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयं विश्वेषां देवानामहं देवयज्यया प्राणैः सायुज्यं गमेयमर्यम्णो ऽहं देवयज्यया स्वर्गं लोकं गमेयमदित्या अहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीयेन्द्रस्येन्द्रियावतो ऽहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमिति यथालिङ्गं वैकृतीः। १।

एतैर्यथालिङ्गं वैकृतीर्देवता इष्टा अनुमन्त्रयत इत्यर्थः। एवं चैषां प्रत्यक्षमाम्नानात्सर्वेष्वप्येतद्दैवत्येषु हविःषु हविःसामान्यविरोधे ऽप्येतान्येवानुमन्त्रणानि भवन्ति न प्राकृतान्यूह्यन्ते॥

अग्निर्मा दुरिष्टात्पात्विति प्राशित्रमवदीयमानम्।२।

हविर्गणादवदाने ऽपि सकृदेव मन्त्रः। यथा चैवं तथा ब्रह्मत्वे व्याख्यातम्॥

सुरूपवर्षवर्ण एहीतीडाम्। ३।

अवदीयमानामित्यनुषङ्गः। सकृदत्रापि मन्त्रः पूर्ववत्॥

भूयस्येहि श्रेयस्येहि वसीयस्येहि चित्त एहि दधिष एहीड एहि सूनृत एहीतीडाया उपांशूपहवे सप्त देव-

गवीर्जपति। चिदसि मनासि धीरसि रन्ती रमतिः सूनुः सूनरीत्युच्चैरुपहवे सप्त मनुष्यगवीः। देवीर्देवैरभि मा निवर्तध्वं स्योनाः स्योनेन घृतेन मा समुक्षत नम इदमुदं भिषगृषिर्ब्रह्मा यद्दे समुद्रादुदचन्निव स्रुचा वागग्रे विप्रस्य तिष्ठति शृङ्गेभिर्दशभिर्दिशन्निति च। ४।

देवगव्यभिधायिनो मन्त्रा देवगव्य इत्युच्यन्ते। तथा मनुष्यगव्यः॥

उपहूयमानायां वायविडा ते मातेति होतारमीक्षमाणो वायुं मनसा ध्यायेत्। ५।

वायविडा ते माता वायो ते वत्सभूतस्येडा मातेति ध्यानप्रकारविधिर्न तु मन्त्रस्तथा ब्राह्मणे व्यक्तत्वाद्यथा वायुर्वत्स इति प्रकृत्योक्तं वायुं मनसा ध्यायेन्मात्रे वत्समुपावसृजतीति॥

सा मे सत्याशीरित्याशिःषु। आशीर्म ऊर्जमिति च। ६।

जपतीति शेषः। अयं च जपः सोमेष्टिष्वपि भवत्येवैकस्या आशिषो विद्यमानत्वात्। तत्र त्वस्माखिन्द्र इत्यादि निवर्तयति॥

इडाया अहं देवयज्यया पशुमान्भूयासमित्युपहूताम्॥ इडा धेनुः सहवत्सा न आगादूर्जं दुहाना पयसा प्रपीना। सा नो अन्नेन हविषोत गोभिरिडाभ्यस्माँ आगादिति भक्षायाह्रियमाणाम्। ७।

उभयत्रानुमन्त्रयत इति शेषः ॥

उक्त इडाभक्षो मार्जनी च । ८ ।

भक्षो भक्षणम् । मार्जनीशब्देन मार्जनं लक्ष्यते । तदुभयमुक्तमाध्वर्यव एव यजमानस्यापि तत्नेदानीं प्रस्मर्तव्यमिति भावः ॥

ब्रह्म पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोपदसद्दिशां कॢप्तिरसि दिशो मे कल्पन्तां कल्पन्तां मे दिशो दैवीश्च मानुषीश्चाहोरात्रे मे कल्पेतामर्धमासा मे कल्पन्तां मासा मे कल्पन्तामृतवो मे कल्पन्तां संवत्सरो मे कल्पतां कॢप्तिरसि कल्पतां म इति बर्हिषि पुरोडाशमासन्नमभिमृशति । ९ ।

चतुर्धा कृत्वा सन्निहितं पुरोडाशं तन्त्रेणाभिमृशति ॥

इति दशमी कण्डिका ।

---

अथैनं प्रतिदिशं व्यूहत्याशानां त्वाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः । इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम् ॥ ब्रह्मपा हि भजतां भागी भागं माभागो भक्त निरभागं भजामः । अपस्पिन्वौषधीर्जिन्व द्विपात्पाहि चतुष्पादव

दिवो वृष्टिमेरय॥ ब्राह्मणानामिदं हविः सोम्यानां सोमपीथिनाम्। निर्भक्तो ऽब्राह्मणो नेहाब्राह्मणस्यास्तीति। १।

व्यूहति विभज्य गमयति सकृदुक्तेन मन्त्रेण॥

उपहूता द्यौः पितोप मां द्यौः पिता ह्वयतामग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्यायोपहूता पृथिवी मातोप मां माता पृथिवी ह्वयतामग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्यायेत्याग्नीध्रभागस्य वैशेषिकम्। २।

व्यूहनमिति विपरिणामेन संबन्धः। पूर्वं तु व्यूहनं चतुर्णां भागानां साधारणमिदं चाग्नीध्रभागस्य वैशेषिकमित्यर्थः। तच्चाग्नीध्रभागस्येति वचनादिदं बह्मण इत्यादिषु व्यादिष्टेषु भागेष्विति द्रष्टव्यम्॥

अथ पिन्वस्वेत्यन्तर्वेद्यन्वाहार्यमासन्नमभिमृशति॥ इयं स्थाल्यमृतस्य पूर्णा सहस्रधार उत्सो अक्षीयमाणः। स दाधार पृथिवीमन्तरिक्षं दिवं च तेनौदनेनातितराणि मृत्युमिति च। ३।

प्रथममन्त्रस्य सर्वत्राविकारो भागाभिधानात्। द्वितीये त्वादितः पदचतुष्टयस्यौदनस्थाल्यभिधायिनो ऽन्यत्र तदभावे लोपः। सहस्रधाराक्षीयमाणशब्दयोश्च लिङ्गस्याविकारः उत्सविशेषणत्वात्। शेषस्तु यथार्थमूह्यः॥

दर्शपूर्णमासौ : याजमान



उक्तः संप्रैषो ऽन्वाहार्यस्य च दानम्। ४।

उक्त इडाभक्ष इतिवद्व्याख्या। संप्रैष इति च दक्षिणत एतोत्तरतः परीतेति द्वयोरपि संप्रैषयोर्ग्रहणं तथा तत्र दर्शितत्वात्॥

एषा ते अग्ने समिदित्यानूयाजिकीं समिधमाधीयमानाम्॥ यं ते अग्न आवृश्चाम्यहं वा क्षिपितश्चरन्। प्रजां च तस्य मूलं च नीचैर्देवा निवृश्चत॥ अग्ने यो नो ऽभिदासति समानो यश्च निष्ट्यः। इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचन॥ यो मां द्वेष्टि जातवेदो यं चाहं द्वेष्मि यश्च माम्। सर्वांस्तानग्ने संदह यांश्चाहं द्वेष्मि ये च मामित्याहितायामग्निम्। ५।

गतौ॥

वेदिर्बर्हिः शृतं हविरिध्मः परिधयः स्रुचः। आज्यं यज्ञ ऋचो यजुर्याज्याश्च वषट्काराः। सं मे संनतयो नमन्तामिध्मसंनहने हुत इति संमार्गान्हुतान्। ६।

संमार्गा इध्मसंनहनानि तेषां च बहुत्वनिर्देश इध्मसंनहने हुत इति चैतदस्तु हुतमिति च मन्त्रानुकरणाद्द्रष्टव्यः॥

सप्तहोतारं वदेत्पुरस्तादनूयाजानामुपरिष्टाद्वा। ७।

सप्तहोतुरनुयाजाङ्गत्वादननुयाज उदयनीये न भवति॥

इत्येकादशी कण्डिका।

बर्हिषो ऽहं देवयज्यया प्रजावान्भूयासमित्येतैः प्रतिमन्त्रमनूयाजान्हुतंहुतम्। १।

गतः ॥

उभौ वाजवत्यौ जपतः। २।

उभयोरपि याजमानाध्वर्यवकाण्डयोः पाठादिति भावः ॥

वसून्देवान्यज्ञेनापिप्रें रुद्रान्देवान्यज्ञेनापिप्रेमादित्यान्देवान्यज्ञेनापिप्रेमिति प्रतिमन्त्रं परिधीनज्यमानान्॥ समक्तं बर्हिर्हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः। समिन्द्रेण विश्वेभिर्देवेभिरक्तं दिव्यं नभो गच्छतु यत्स्वाहेति प्रस्तरमज्यमानम्। ३।

गतौ ॥

अग्नेरहमुज्जितिमनूज्जेषमिति यथालिङ्गं सूक्तवाकदेवताः। ४।

सूक्तवाके कीर्तिता देवताः सूक्तवाकदेवतास्तास्तल्लिङ्गाभिरुज्जितिभिरुपतिष्ठते ऽनुमन्त्रयते वा। यथालिङ्गमिति समाम्नायसिद्धानां मन्त्राणां लिङ्गवशेन विनियोगादनाम्नातायां उपांशुयाजदेवताया आज्यपानां च नोज्जित्योपस्थानम्॥ अथवा तन्मन्त्रयोरपि शाखान्तरीयः पाठो ऽनुमीयते निर्वापादिष्वैन्द्राग्नमन्त्रस्य। कुतः। सूक्तवाकदेवता इत्यविशेषवचनात् सूक्तवाके होता यां यां देवतामभिव्याहरति तां तां यजमानो ऽनुमन्त्रयत इति सत्याषाढवचनाच्च ॥

दर्शपूर्णमासौ : याजमान



यदा चास्य होता नाम गृह्णीयादथ ब्रूयादेमा अग्मन्नाशिषो दोहकामा इति।५।

सोमेष्टिष्वाशिष एकत्वादेयमगन्नाशीर्दोहकामेत्यूहः॥

सा मे सत्याशीर्देवान्गम्याज्जुष्टाज्जुष्टतरा पण्यात्पण्यतरारेडता मनसा देवान्गम्याद्यज्ञो देवान्गच्छत्वदो म आगच्छत्विति सूक्तवाकस्याशिःषु यत्कामयते तस्य नाम गृह्णाति।६।

अविकृत एवायं मन्त्रः सोमेष्टिषु॥

रोहितेन त्वाग्निर्देवतां गमयत्वित्येतैः प्रतिमन्त्रमग्नीधा प्रस्तरं प्रह्रियमाणम्।७।

गतः॥

दिवः खीलो ऽवततः पृथिव्या अध्युत्थितः। तेना सहस्रकाण्डेन द्विषन्तं शोचयामसि। द्विषन्मे बहु शोचत्वोषधे मो अहं शुचमिति प्रस्तरतृणे प्रह्रियमाणे।८।

जपतीति शेषः॥

वि ते मुञ्चामीति परिधिषु विमुच्यमानेषु।९।

परिधिषु ततस्ततो देशाद्विमुच्यमानेषु प्रह्रियमानेष्विति यावत्। विमुच्यमानेष्विति वचनमेष वा अग्नेर्विमोक इति ब्राह्मणव्याचिख्यासया परिधियोगे पूर्वं युनज्मि त्वेति युक्तस्याग्नेरिदानीं परिधिविमोके वि ते मुञ्चामीति विमोकाभिसंधानमेव विमोक इति॥

विष्णोः शंयोरिति शंयुवाके। यज्ञ नमस्ते यज्ञ नमो नमश्च ते यज्ञ शिवेन मे संतिष्ठस्व स्योनेन मे संतिष्ठस्व सुभूतेन मे संतिष्ठस्व ब्रह्मवर्चसेन मे संतिष्ठस्व यज्ञस्यर्द्धिमनु संतिष्ठस्वोप ते यज्ञ नम उप ते नम उप ते नम इति च॥ इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्दा वसुभिराशीर्वान्। अथर्वभिस्तस्य मेष्टस्य वीतस्य द्रविणेहागमेरिति संस्रावं हुतम्। १०।

गताः॥

इति द्वादशी कण्डिका।

इति तृतीयः पटलः॥

---

सोमस्याहं देवयज्यया सुरेता रेतो धिषीयेति यथालिङ्गं पत्नीसंयाजान्हुतंहुतम्। १।

देवपत्नीनां गृहपतेश्च यागान्तरव्यवाये ऽपि समानमनुमन्त्रणं मन्त्रलिङ्गात्॥

राकाया अहं देवयज्यया प्रजावान्भूयासं सिनीवाल्या अहं देवयज्यया पशुमान्भूयासं कुह्वा अहं देवयज्यया पुष्टिमान्पशुमान्भूयासमिति काम्याः। २।

काम्यग्रहणेन काम्यदेवता उपलक्षयति न तु नित्या व्यावर्तयति। तेनाविशिष्टमनुमन्त्रणं नित्यत्वे ऽपि॥

दर्शपूर्णमासौ : याजमान



राकाया अहं देवयज्यया प्रजावती भूयासं सिनी-वाल्या अहं देवयज्यया पशुमती भूयासं कुह्वा अहं देवयज्यया पुष्टिमती पशुमती भूयासमिति पत्यनुमन्त्रयते। ३।

गतः॥

इडास्मानन्नु वस्तां घृतेन यस्याः पदे पुनते देवयन्तः। वैश्वानरी शक्वरी वावृधानोप यज्ञमस्थित वैश्वदेवीत्याज्येडाम्। ४।

घृतेनेत्युदकाभिधानान्मांसेडायामप्यनूहः। तथा च ब्राह्मणं वृष्टिर्वा इडा वृष्ट्यै वै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्तीति॥

अन्तर्वेदि वेदं निधायाभिमृशति वेदोऽसीति। ५।

गतः॥

पुरा विदेयेति यद्यद्भ्रातृव्यस्याभिध्यायेत्तस्य नाम गृह्णीयात्। तदेवास्य सर्वं वृङ्क्त इति विज्ञायते। ६।

तत्र विदेयेत्येतच्छब्दात्पूर्वं भ्रातृव्यस्य स्वं यद्यत् गोहिरण्यादि अभिध्यायेत् इदं मे स्यादिति तस्य नाम गृह्णीयात् यथा देवदत्तस्य गां विदेयेति। तत्सर्वमेवास्यापादत्त इत्याह श्रुतिः। असति तु कामे यथाम्नातो मन्त्रः॥

या सरस्वती विशोभगीना तस्यां मे रास्व तस्यास्ते

भक्तिवानो भूयास्मेति फलीकरणहोमे हुते मुखं विमृष्टे । ७ ।

मुखविमार्गोऽयं फलीकरणहोमसंयोगात्तदङ्गमतोऽनौषधतन्त्रासु निवर्तते ॥

वसुर्यज्ञो वसुमान्यज्ञस्तस्य मा यज्ञस्य वसोर्वसुमतो वस्वागच्छत्वदो म आगच्छत्विति समिष्टयजुर्हुतमनुमन्त्रयते । यत्कामयते तस्य नाम गृह्णाति । ८ ।

गतः ॥

सं यज्ञपतिराशिषेति यजमानभागं प्राश्नाति । ९ ।

इति त्रयोदशी कण्डिका ।

---

दधिक्राव्णो अकारिषमिति सायंदोहम् । इदं हविरिति प्रातर्दोहम् । १ ।

इदं हविरिति सौत्रामणीपठितः स्वाहान्तो मन्त्रः ॥

नाब्राह्मणः सांनाय्यं प्राश्नीयात् । २ ।

क्षत्रियवैश्यौ न सांनाय्येडायजमानभागौ प्राश्नीतः ॥

अन्तर्वेदि प्रणीतास्वध्वर्युः संततामुदकधारां स्रावयति । सदसि सन्मे भूया इत्यानीयमानायां जपति । ३ ।

गतः ॥

दर्शपूर्णमासौ : याजमान



प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्येतैर्यथालिङ्गं व्युत्सिच्य समुद्रं वः प्रहिणोमि स्वां योनिमपिगच्छत। अच्छिद्रः प्रजया भूयासं मा परासेचि मत्यय इत्यन्तर्वेदि शेषं निनीय यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु। तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वति। या सरस्वती वैशम्बल्या* तस्यां मे रास्व तस्यास्ते भक्षीय तस्यास्ते भूयिष्ठभाजो भूयास्मेति मुखं विमृष्टे।४।

यथालिङ्गं व्युत्सिच्य तत्तन्मन्त्रप्रकाशितायां दिशि तेनतेन मन्त्रेणोर्ध्वमपः सिक्त्वा॥

उभौ कपालविमोचनं जपतः।५।

उभयोरप्याध्वर्यवयाजमानकाण्डयोः पाठादिति भावः॥

विष्णोः क्रमोऽसीति दक्षिणे वेद्यन्ते दक्षिणेन पदा चतुरो विष्णुक्रमान्प्राचः क्रामत्युत्तरमुत्तरं ज्यायांसमनतिहरन्सव्यम्।६।

विष्णुक्रमा नाम तल्लिङ्गमन्त्रविशिष्टाः पदविक्षेपाः तान्दक्षिणे वेदिसीम्नि क्रामति। तेषु चोत्तरोत्तरं क्रममधिकान्तरालं क्रामति न च कदाचित्सव्यं पादं पुरस्तान्नयति॥

---

* Thus according to the best MS., the others. read वैशम्पाल्या and वैशम्बल्या like Taittirîya Brâhmaṇa 2. 5. 8. 6.

नाहवनीयमतिक्रामति। ७।

यत्राप्याहवनीयमीन्नः परतो वेदिः सोमपशुचातुर्मास्येषु तत्रापि न तमतिक्रामति ॥

अवस्थाय चतुर्थं जपति। ८।

चतुर्थं तु क्रमं तूष्णीं क्रान्त्वावस्थाय ततो मन्त्रं जपति न तु मन्त्रान्ते क्रामतीत्यर्थः। अथवा तृतीयक्रमं क्रान्त्वा तत्रैवावस्थाय चतुर्थं मन्त्रं जपति न तु तेन क्रामतीत्यर्थः। चतुरो विष्णुक्रमानिति तु मन्त्राभिप्रायं द्रष्टव्यम्। कस्मात्। विष्णोः क्रमत्वेनैषां क्रमाणां स्तवनात्तस्य चतुर्थक्रमाभावात् व्यक्तवचनाच्च बौधायनादिभिः यथा तृतीये चतुर्थमनुवर्तयति न चतुर्थाय प्रक्रामतीत्यादि॥ उक्तः स्वशाखास्थो विष्णुक्रमकल्पः अथापरौ शाखान्तरीयौ विकल्पौ दर्शयति॥

विष्णुक्रमान्विष्णवतिक्रमानतीमोक्षानिति व्यतिषक्तानेके समामनन्ति। विनिरूढानेके। ९।

अयमर्थः। प्राकृते याजमानकाण्डे त्रीनेतानेके ऽधीयते व्यतिषक्तांश्च तान्यथा प्रथमं विष्णुक्रमपर्यायमुक्त्वाथ विष्णवतिक्रमातीमोक्षाणामाद्यौ पर्यायौ ततो द्वितीयमुक्त्वा तेषामपि द्वितीयावित्यादि। अन्ये तु त्रीनेतानधीयाना विनिरूढानन्योन्यमसंकीर्णानधीयते यथा समाप्य विष्णुक्रमांस्ततो विष्णवतिक्रमांस्ततो ऽतीमोक्षानिति। तदेवमेते पूर्वेण केवलविष्णुक्रमकल्पेन सह त्रयः कल्पा उक्ता भवन्ति॥ केचित्तु विष्णुक्रमवद्विष्णवतिक्रमातीमोक्षानपि नित्यानिष्ट्वा तेषां

दर्शपूर्णमासौ : याजमान



व्यतिषङ्गाव्यतिषङ्गमात्रविकल्पमेनमिच्छन्ति। तदयुक्तं विष्णुक्रमवत्तेषां स्वरूपस्यान्यतो सिद्धेः। न तावदेषां श्रुतितः सिद्धिः दर्शपूर्णमासमन्त्रब्राह्मणप्रकरणयोः केवलविष्णुक्रमाणामाम्नानात् सूत्रे ऽपि त एवानन्तरं नित्यवद्विहिता अनुदिताश्च प्रदेशान्तरेषु यथा पूर्णपात्रं निनयति विष्णुक्रमान्क्रामतीत्यादि। कल्पान्तरेष्वनुपात्ता एव विष्णवतिक्रमादय इति न कुतश्चिदप्येषां स्वरूपसिद्धिं पश्यामः। तस्माद्व्यतिषङ्गादिविशिष्टस्वरूपमेवैषामत्र विकल्प्यत इति युक्तमिति। अस्ति केवलो विष्णुक्रमकल्प इति॥

**अग्निना देवेन पृतना जयामीति विष्णवतिक्रमाः। ये देवा यज्ञहन इत्यतीमोक्षाः। १०।**

गतः॥

**अगन्म सुवः सुवरगन्मेत्यादित्यमुपतिष्ठते। ११।**

इति चतुर्दशी कण्डिका।

---

**उद्यन्नद्य मित्रमहः सपत्नान्मे अनीनशः। दिवैनान्विद्युता जहि निम्रोचन्नधरान्कृधि॥ उद्यन्नद्य वि नो भज पिता पुत्रेभ्यो यथा। दीर्घायुत्वस्य हेशिषे तस्य नो देहि सूर्य॥ उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम्। हृद्रोगं मम सूर्य हरिमाणं च नाशय॥ शुकेषु मे हरिमाणं रोपणाकासु दध्मसि। अथो हारिद्रवेषु मे हरिमाणं निदध्मसि॥ उदगादयमादित्यो**

विश्वेन सहसा सह । द्विषन्तं मम रन्धयन्मो अहं द्विषते रधम् ॥ यो नः शपादशपतो यश्च नः शपतः शपात् । उषाश्च तस्मै निम्रुक्च सर्वं पापं समूहतामिति च । १ ।

व्याख्यातः पूर्वेणादित्योपस्थानेन ॥

ऐन्द्रीमावृतमन्वावर्त इति प्रदक्षिणमावर्तते । २ ।

गतः ॥

यद्यभिचरेदिदमहममुष्यामुष्यायणस्य प्राणं निवेष्टयामीति दक्षिणस्य पदः पार्ष्ण्या निमृद्नीयात् । ३ ।

आमुष्यायणस्येति गोत्रनिर्देशः यथा देवदत्तस्य गौतमस्येत्यादि । बबरः प्रावाहणिरित्यादिवत्पितृनिर्देश इत्यन्ये ॥ निमृद्नीयात् भ्रातृव्यं पीड्यमानं बुद्ध्वा पार्ष्ण्या भूमिं निपीडयेत् ॥

पुण्या भवन्तु या लक्ष्मीः पराभवन्तु याः पापीरित्युक्त्वा समहं प्रजया सं मया प्रजेति पुनरुपावर्तते । ४ ।

स्वस्ति पुनरागच्छतीत्यादिवत्प्रतिनिवृत्तिवचनः पुनःशब्दः । पुनरुपावर्तते प्रसव्य आवर्तत इत्यर्थः । तथोदक् पर्यावर्तते समहं प्रजयेति बौधायनः ॥

समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासमित्याहवनीयमुपसमिन्द्धे । वसुमान्यज्ञो वसीयान्भूयासमित्युपतिष्ठते । ५ ।

इति पञ्चदशी कण्डिका ।

दर्शपूर्णमासौ ; याजमान



**यो नः सपत्नो यो ऽरणो मर्तो ऽभिदासति देवाः। इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचनेति च। १।**

गतः ॥

**अग्न आयूंषि पवस इत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते। अग्ने गृहपत इति च। २।**

अग्ने गृहपत इति मन्त्रः शतं हिमा इत्यन्तः। गतः शेषः ॥

**पुत्रस्य नाम गृह्णाति तामाशिषमाशासे तन्तव इत्यजातस्य। असुष्मा इति जातस्य। ३।**

द्वे एते यजुषी जाताजातयोः पुत्रयोर्नामग्रहणार्थे। तयोः प्रथमेन प्रथममजातस्य पुत्रस्य नाम गृह्णाति तन्तव इति परोक्षनाम्ना। तच्च तज्जन्मार्थं तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायत इति श्रुतेः॥ अथ द्वितीयेन यजुषा जातस्य नाम गृह्णाति असुष्मा इति तदीयनाम्ना। तच्च तत्समृद्ध्यर्थं तेज एवास्मिन्ब्रह्मवर्चसं दधातीति श्रुतेः॥ तेन जातस्यापि मृतस्य पुत्रस्य न नाम गृह्णाति। तदेवं पुत्रवतो नामग्रहणद्वयं भवति तद्यथा तामाशिषमाशासे तन्तवे ज्योतिष्मतीं तामाशिषमाशासे देवदत्ताय ज्योतिष्मतीमिति। अपुत्रस्य तु प्रथममेव द्वितीयस्यासंभवात्। पुत्रवतो ऽपि द्वितीयमेव न प्रथममिति केचित्। तदयुक्तं तन्तव इत्यजातस्येत्यविशेषोक्तेर्भविष्यत्पुत्रार्थं पुत्रवतो ऽपि तदनिवारणात् अजातपुत्रस्येत्यवचनाच्च॥ व्यक्तोक्तस्य समुच्चयो बौधायनेन तामाशिषमाशासे ऽमुष्मा अमुष्मा इति यावन्तो ऽस्य पुत्रा

जाता भवन्ति तन्तव इत्यन्तत इति ॥ बहुपुत्रत्वे तु स्वस्थानविवृद्ध्या नाम्नां ग्रहणं न लभ्यावृत्त्या यथोक्तं सत्याषाढेन बहुपुत्रः सर्वेषां पुत्राणां नामान्यनुद्रुत्य ज्योतिष्मतीमित्यन्ततो ऽवदधातीति यद्यथा तामाग्निषमाम्नासे रुद्राय सूर्याय विष्णवे ज्योतिष्मतीमिति ॥ अकृतनाम्नस्तु नक्षत्रनाम ग्राह्यम् । नैव ग्राह्यं पुत्र्याः पुत्रस्येति वचनात् ॥

ज्योतिषे तन्तवे त्वासावनु मा तन्वच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदि दिव्याद्धाम्नो मा च्छित्सि मा मानुषादिति प्रियस्य पुत्रस्य नाम गृह्णाति । ४ ।

असाविति संबुद्ध्या नामग्रहणम् । प्रियपुत्रस्येति वचनात् जाताजातविभागवचनाच्चाप्रियपुत्रस्यापुत्रस्य च कृत्स्नमन्त्रस्य लोपः । बहुपुत्रस्य चाभ्यावृत्तिः अनु मा तन्वच्छिन्न इत्येकवचनात् ऊहप्रतिषेधाच्च ॥

अग्ने वह्ने स्वदितं नस्तनये पितुं पच । शं तोकाय तनुवे स्योन इति दक्षिणाग्निम् । ५ ।

उपतिष्ठत इति शेषः ॥

ज्योतिषे तन्तवे त्वेत्यन्तर्वेद्युपविशति । पूर्ववन्नामग्रहणम् । ६ ।

व्याख्यातः पूर्वतरेण ॥

ज्योतिरसि तन्तव इत्युपविश्य जपति । ७ ।

उपविश्य जपस्यापि लोपो ऽपुत्रस्य मध्यमपुरुषविरोधात् ॥

**वेदमुपस्थ आधायान्तर्वेद्यासीनो ऽतीमोक्षाञ्जपति ।८।**

वेदाधानमुपरिष्टाद्वेदस्तरणप्रस्तावश्रयणेनोक्तं अन्यत्र स्तीर्णत्वाद्वेदस्य। आश्वलायनेन तु पूर्वत्रैव स्तरण उक्तं शेषं निधायेति। सत्याषाढस्त्वाह वेदतृणान्युपस्थ आधायेति ॥

**अत्र वेदस्तरणं यजमानभागस्य च प्राशनमेके समामनन्ति ।९।**

यदा त्वत्र तदा सहैवोभयोरुत्कर्षो नान्यतरस्य ॥

**कस्त्वा युनक्ति स त्वा विमुञ्चत्विति यज्ञं विमुञ्चति ।१०।**

मन्त्रोच्चारणमेव विमोकः ॥

**अग्ने व्रतपते व्रतमचारिषमिति व्रतं विसृजते।११।**

यैर्यजुर्भिः प्राग्व्रतमुपेतं तैरेव विसृजते। विकारमात्रेण विशेषः ॥

**यज्ञो बभूवेति यज्ञस्य पुनरालम्भं जपति।१२।**

विकृतावपि यत्र पुनःक्रियेष्टा तत्रैव पुनरालम्भस्य जपो ऽन्वर्थत्वाद्यथा पश्वाग्रयणादिषु ॥

**गोमानिति प्राङुदेत्य गोमतीं जपति।१३।**

सर्वेष्टिपशुषु नित्यो गोमतीजपः ॥

अच वा यजमानभागं प्राश्नीयात् । १४ ।

गतः ॥

यज्ञ शं च म उप च म आयुश्च मे बलं च मे यज्ञ शिवो मे संतिष्ठस्व यज्ञ स्विष्टो मे संतिष्ठस्व यज्ञारिष्टो मे संतिष्ठस्वेति दर्शपूर्णमासाभ्यां सोमेन पशुना वेष्ट्वा जपति । १५ ।

अधिकारादेव सिद्धेः पुनर्दर्शपूर्णमासग्रहणं तद्विकारेषु मा भूदिति ॥

वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागामितीष्ट्वाप उपस्पृशति। तदिदं सर्वयज्ञेषूपस्पर्शनं भवति । १६ ।

मन्त्रो ऽयं विद्युदसीत्यादिना व्याख्यातः ॥

ब्राह्मणांस्तर्पयितवा इति संप्रेष्यति । १७ ।

ऋत्विजः संनिधानात्तांस्तर्पयितवै तर्पयत भोजनादिभिः । तेषां च तर्पणं यज्ञसमृद्ध्यर्थं यज्ञमेव तर्पयतीति वाजसनेयिश्रुतेः ॥

प्रवसन्काले विहारमभिमुखो याजमानं जपति । १८ ।

प्रवसन्देशान्तरे वसन् स्वे स्वे काले उपवसथ्ये ऽहनि यजनीये च विहारदेशमभिमुखो याजमानाध्वर्यवकाण्डोक्तान्सर्वानपि याजमानमन्त्राञ्जपति । तदीयानि तु कर्माण्यध्वर्युः करोति । तथा च भारद्वाजा-

दर्शपूर्णमासौ ; याजमान



दयः यानि संस्पृश्य कर्माण्यध्वर्युस्तानि कुर्यादिति । यानि तु संभवन्ति तानि स्वयमेव तत्र कुर्यात् यथापामुपस्पर्शनमादित्योपस्थानमित्यादि ॥

प्राचो विष्णुक्रमान्क्रामति । १९ ।

दक्षिणवेद्यन्तालाभान्मा लोपिषत विष्णुक्रमाः । प्राञ्चः विहाराभिमुखाः क्रमिष्यन्त इत्यारम्भः ॥

प्राङुदेत्य गोमतीं जपति जपति । २० ।

प्राङुदेत्य ततो विहाराभिमुख एव स्थितो जपति ॥

इति षोडशी कण्डिका ।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायां चतुर्थः पटलः ।

इति चतुर्थः प्रश्नः ॥

ओम् ॥

एवं दर्शपूर्णमासौ व्याख्यायानन्तरं सर्वश्रौतकाण्डोपकारकं सर्वप्रथमभावि चाग्न्याधेयमारभते ॥

**अग्न्याधेयं व्याख्यास्यामः । १ ।**

अग्नेराधेयमग्न्याधेयम् । कृत्यल्युटो बहुलमिति भावे यः द्रष्टव्यः । अग्निराधेयो ऽस्मिन्कर्मणीति वा बहुव्रीहिः ॥ तच्चोपनयनादिवदावश्यकं पुरुषस्य । कुतः । कृष्णकेशो ऽग्नीनादधीतेति श्रुतेः स्मृतिष्वप्यग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावित्यावश्यकेषु पुरुषसंस्कारेषु पाठात् अवश्यं च ब्राह्मणो ऽग्निमादधीतेति वसिष्ठवचनात् आचार्येणाप्यशूद्राणामदुष्टकर्मणामुपायनं वेदाध्ययनमग्न्याधेयं फलवन्ति च कर्माणीति द्विजातीनां वर्णधर्मत्वेनानुक्रमणात् मनुनाप्यनाहिताग्निता स्तैन्यमिति तदक्रियायामुपपातकत्वेन स्मरणाच्च । तस्मात्सिद्धमावश्यकमग्न्याधेयमिति ॥ अथाह बौधायनः अग्नीनाधास्यमानः प्राज्यमात्मानं कुर्वीत येनास्य कुशलं स्यात्तेन कुशलं कुर्वीतेति । तथोक्तमात्मनः पुरस्चरणमिति च ॥

**यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा । तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सहेति शमीगर्भस्याश्वत्थस्यारणी आहरति । २ ।**

आत्माबोध



अत्र यजमान आगुरते अग्नीनाधास्य इति। न विद्युदसीत्यपामुपस्पर्शनं अयज्ञत्वात्। अथाध्वर्युररणी पूर्वाह्नते अपि मन्त्रेण युगपदाहरति॥ शमीगर्भस्येति षष्ठीसमासः इयं वै शमी तस्या एष गर्भो यदश्वत्थ इति श्रुतेः यो अश्वत्थः शमीगर्भो भूमिं मूलेन स्पृष्ट इति भारद्वाजवचनाच्च॥ अरणीप्रमाणं चानुक्तत्वादर्थलक्षणं भवति। चतुरङ्गुलमुत्सेधां द्वादशाङ्गुलं विस्तीर्णां षोडशाङ्गुलमायतामिति बौधायनः। चतुर्विंशत्यङ्गुला वेति कात्यायनीयाः। तथा वैष्णवपुराण उक्तं अरणीं च कारयेत्प्रमाणं चाङ्गुलैः कुर्वन् गायत्रीं पठेत्पठतश्चाक्षरसंख्यान्येवाङ्गुलान्यरण्या भवन्तीति॥

अप्यशमीगर्भस्येति वाजसनेयकम्। ३।

अशमीगर्भे ऽपि मन्त्रानिवृत्तिः अश्वत्थमात्रस्यैव शमीगर्भस्तवनात्। यथोक्तं हिरण्यकेशिना इयं वै शमी तस्या एष गर्भो यदश्वत्थ इति विज्ञायत इति। बौधायनस्त्वाह अथो खलु य एवाश्वत्थः शमीगर्भ इति॥

अश्वत्थाद्धव्यवाहाद्धि जातामग्नेस्तनूं यज्ञियां संभरामि। शान्तयोनिं शमीगर्भमग्नये प्रजनयितवे। आयुर्मयि धेह्यायुर्यजमान इत्यरणी अभिमन्त्र्य सप्त पार्थिवान्संभारानाहरति। एवं वानस्पत्यान्। पञ्चपञ्च वा।४।

गतौ॥

भूयसो वा पार्थिवान्। ५।

अष्टौ पार्थिवा वक्ष्यन्ते ते सर्वे भवन्ति सप्तत्वे वानस्पत्यानाम्। पञ्चत्वे तु सप्ताष्ट वा स्युः॥

न संभारान्संभरेदिति वाजसनेयकम्। ६।

गतः ॥

वैश्वानरस्य रूपं पृथिव्यां परिस्रसा। स्योनमाविशन्तु न इति सिकताः॥ यदिदं दिवो यददः पृथिव्याः संजज्ञाने रोदसी संबभूवतुः। ऊषान्कृष्णमवतु कृष्ण-मूषा इहोभयोर्यज्ञियमागमिष्ठा इत्यूषान्॥ उतीः कुर्वा-णो यत्पृथिवीमचरो गूहाकारमाखुरूपं प्रतीत्य। तत्ते न्यक्तमिह संभरन्तः शतं जीवेम शरदः सुवीरा इत्या-खुकरीषम्॥ ऊर्जं पृथिव्या रसमाभरन्तः शतं जीवेम शरदः पुरूचीः। वम्रीभिरनुवित्तं गुहासु श्रोत्रं त उर्व्यबधिरा भवाम इति वल्मीकवपाम्॥ प्रजापतिसृ-ष्टानां प्रजानां क्षुधो ऽपहत्यै सुवितं नो अस्तु। उपप्र-भिन्नमिषमूर्जं प्रजाभ्यः सूदं गृहेभ्यो रसमाभरामीति सूदम्॥ यस्य रूपं बिभ्रदिमामविन्दद्गुहा प्रविष्टां सरि-रस्य मध्ये। तस्येदं विहतमाभरन्तो ऽच्छम्बट्कारमस्यां विधेमेति वराहविहतम्। ७।

इति प्रथमा कण्डिका ।

याभिरदृंहज्जगतः प्रतिष्ठामुर्वीमिमां विश्वजनस्य भर्त्रीम्। ता नः शिवाः शर्कराः सन्तु सर्वा इति शर्कराः॥ अग्ने रेतश्चन्द्रं हिरण्यमद्भ्यः संभूतममृतं प्रजासु। तत्संभरन्नुत्तरतो निधायातिप्रयच्छन्दुरितिं तरेयमिति हिरण्यम्। १।

सर्वत्राहरतीति संबन्धः॥ आखुकरीषमाखूत्करः। वल्मीकस्य सूद-ल्मीकवपा। सूदो जलाशयस्य सूदशोष्यस्य। तथा चाह बौधायनः यो ऽनुपदासी सूदः स्यात्तत आहारयेत् सूदे ऽविद्यमाने कुलीरसु-षिरादाहारयेदिति। त्रयो हिरण्यशकला भवन्ति पञ्चपक्षाग्नेः। केचित्तु कल्पान्तरदृष्ट्या हिरण्यस्यासंभारत्वं मन्यन्ते। तदयुक्तं संभारानाहर-तीति प्रकृत्य हिरण्यमप्युक्त्वा तत ऊर्ध्वमिति पार्थिवा इति निगम-नात् तत्संभरन्निति मन्त्रलिङ्गाच्च। तस्मात्संभारपक्षे हिरण्यमपि निवर्तते॥

इति पार्थिवाः। २।

संभारा इति शेषः॥

यदि पञ्चौदुम्बराणि लोहशकलानि पञ्चमो भवति। ३।

उदुम्बरं ताम्रम्। पञ्चसंभारपक्षे ताम्रमयानि लोहशकलानि पञ्चमः संभारो भवति। तेषां तूष्णीं संभरणम्॥

अश्वो रूपं कृत्वा यदश्वत्थे ऽतिष्ठः संवत्सरं देवेभ्यो निलाय। तत्ते न्यक्तमिह संभरन्तः शतं जीवेम शरदः

सुवीरा इत्यश्वत्थम्॥ ऊर्जः पृथिव्या अध्युत्थितो ऽसि वनस्पते शतवल्शो विरोह। त्वया वयमिषमूर्जं मदन्तो रायस्पोषेण समिषा मदेमेत्युदुम्बरम्॥ गायत्रिया ह्रियमाणस्य यत्ते पर्णमपतत्तृतीयस्यै दिवो ऽधि। सो ऽयं पर्णः सोमपर्णाद्धि जातस्ततो हरामि सोमपीथस्यावरुद्ध्यै॥ देवानां ब्रह्मवादं वदतां यदुपाशृणोः सुश्रवा वै श्रुतो ऽसि। ततो मामाविशतु ब्रह्मवर्चसं तत्संभरंस्तदवरुन्धीय साक्षादित्येताभ्यां पर्णम्॥ यया ते सृष्टस्याग्नेर्हेतिमशमयत्प्रजापतिः। तामिमामप्रदाहाय शमीं शान्त्यै हराम्यहमिति शमीम्॥ यत्ते सृष्टस्य यतो विकङ्कतं भा आर्छज्जातवेदः। तया भासा संमित उरुं नो लोकमनुप्रभाहीति विकङ्कतम्॥ यत्ते तान्तस्य हृदयमाच्छिन्दज्जातवेदो मरुतो ऽद्भिस्तमयित्वा। एतत्ते तदशनेः संभरामि सात्मा अग्ने सहृदयो भवेहेत्यशनिहतस्य वृक्षस्य॥ यत्पर्यपश्यत्सरिरस्य मध्य उर्वीमपश्यज्जगतः प्रतिष्ठाम्। तत्पुष्करस्यायतनाद्धि जातं पर्णं पृथिव्याः प्रथनं हरामीति पुष्करपर्णम्॥ इति वानस्पत्याः। ४।

पूर्ववद्योजना। तत्राश्वत्थादयः शब्दास्तदवयवपरा द्रष्टव्याः। अशनिहताभावे शीतहतं वातहतं वेति बौधायनः॥

इति द्वितीया कण्डिका।

यं त्वा समभरं जातवेदो यथा शरीरं भूतेषु न्यक्तम्। स संभृतः सीद शिवः प्रजाभ्य उरुं नो लोकमनुनेषि विद्वानिति संभृत्य निदधाति। १ ।

संभृत्य एवमाहृत्य तान्संभारानेकस्थान्कृत्वा निदधातीत्यर्थः। अथवा आहरणमेव संभरणम्। एवं सर्वानाहृत्य समुदितमनेन निदधातीत्यर्थः नारण्योरनेन निधानं संभारलिङ्गत्वात्। अत्र आद्धमाह बोधायनः ॥

अथ नक्षत्राणि। २ ।

वक्ष्यन्त इति शेषः ॥

कृत्तिकासु ब्राह्मण आदधीत मुख्यो ब्रह्मवर्चसी भवति। ३ ।

मुख्यो ब्रह्मवर्चसीति ब्रह्मवर्चसिनां प्रथम इत्यर्थः ॥

गृहांस्तस्याग्निर्दाहुको भवति। ४ ।

दाहुकः दहनशील इति। इमं दोषमनुजानतोऽयं काल इति भावः ॥

रोहिण्यामाधाय सर्वान्रोहान्रोहति। ५ ।

सर्वानुच्छ्रायान्प्राप्नोतीत्यर्थः ॥

मृगशीर्षे ब्रह्मवर्चसकामो यज्ञकामो वा। ६ ।

आदधीतेति शेषः ॥

यः पुरा भद्रः सन्पापीयान्स्यात्पुनर्वस्वोः। ७।

भद्रो वसुमान् पापीयान्दरिद्रः। पुनरेवैनं वामं वसूपावर्तते भद्रो भवतीति लिङ्गात् ॥

पूर्वयोः फल्गुन्योर्यः कामयेत दानकामा मे प्रजाः स्युरिति। ८।

मह्यं दातुमिच्छन्तु प्रजा इति कामः ॥

उत्तरयोर्यः कामयेत भग्यन्नादः स्यामिति। ९।

भगी बहुश्रीः। अन्नादो भोजनशक्तः ॥

एतदेवैके विपरीतम्। १०।

एतदेव पूर्वोत्तरयोः फल्गुन्योरुक्तं कामद्वयं विपर्यस्तमेके समामनन्ति ॥

अथापरम्। पूर्वयोराधाय पापीयान्भवत्युत्तरयोर्वसीयान्। ११।

गतः ॥

हस्ते यः कामयेत प्र मे दीयेतेति। १२।

मह्यं दीयेत जनैरिति कामः ॥

चित्रायां राजन्यो भ्रातृव्यवान्वा। १३।

राजन्यस्य चित्रा नित्या ॥

विशाखयोः प्रजाकामोऽनुराधेष्वृद्धिकामः श्रवणे पुष्टिकाम उत्तरेषु प्रोष्ठपदेषु प्रतिष्ठाकामः। १४।

गताः ॥

सर्वाणि नित्यवदेके समामनन्ति । १५ ।

सर्वाण्येतानि काम्यतयोक्तानि नित्यवत् नित्यं यथा तथा कामोपबन्धरहितानीत्यर्थः । अथ पर्वणोराधानं विधास्यंस्तत्र फल्गुनीपौर्णमास्याधाने विशेषं दर्शयति ॥

फल्गुनीपूर्णमास आदधीतेत्युक्त्वाह यत्फल्गुनीपूर्णमास आदध्यात्संवत्सरस्यैनमासन्दध्याद्व्यहे पुरैकाहे वा । १६ ।

फल्गुनीपूर्णमास आदधीतेति ब्राह्मणं प्रथममुक्त्वा पुनरेवाह यदि यजमानः फल्गुनीपूर्णमास आदध्यात् एनमग्निं संवत्सरस्यासन् आस्ये आदध्यात् । आसन्नित्यत्राङ् सवर्णदीर्घप्रश्लो द्रष्टव्यः । आस्ये चिप्तं च भचितमित्यास्यचेपेणाग्निनाशो लच्यते । अतः पर्वणः प्राक् द्व्यह एकाहे वा काले वा आधेय इति वच्यमाणेन संबन्धः ॥ अथवा यदि फल्गुनीपूर्णमास आदध्यात् अध्वर्युरेनं यजमानं संवत्सरस्यास्ये आदध्यादिति योजना परस्मैपदौचित्यात् । अतः प्राक् द्व्यह एकाहे वाधेय इत्येव ॥ इयं च फल्गुनीपूर्णमासनिन्दा अनुदितहोमनिन्दावदुत्तरविधिस्तुत्यर्था न तु फल्गुनीपूर्णमासपरिहारार्था विध्यानर्थक्यप्रसङ्गात् । तेन द्वावपि विधी विकल्प्येते । भारद्वाजस्तु या पूर्वाभ्यां फल्गुनीभ्यां पूर्णमासी स्यान्न तस्यामादधीतेत्याह ॥

अमावास्यायां पौर्णमास्यां वाधेयः । १७ ।

अग्निरिति शेषः ॥

**वसन्तो ब्राह्मणस्य ग्रीष्मो राजन्यस्य हेमन्तो वा शरद्वैश्यस्य वर्षा रथकारस्य। १८।**

आधानकाल इति शेषः। किमत्र रथकार इति द्विजातिभ्यो ऽन्यजातीयस्यान्तरप्रभवस्य ग्रहणं नेत्याह ॥

**ये त्रयाणां वर्णानामेतत्कर्म कुर्युस्तेषामेष कालः। १९।**

त्रिषु वर्णेष्वन्तर्भूता एव स्ववृत्तिकर्षिता ये रथं कुर्वन्ति तेषामयमाधानकालः ॥

**शिशिरः सार्ववर्णिकः। २०।**

वर्णत्रयसाधारण इत्यर्थः ॥ अत्र वसन्तादृतुक्लृप्तिः सौरेण वा चान्द्रमसेन वा उभयथापि शास्त्रेषु प्रवृत्तेः। केचिच्चन्द्रमाः षड्ढोता स ऋतून्कल्पयतीति श्रुतेश्चान्द्रमसीमेवाहुः। तदयुक्तं इतरथापि श्रवणात् यथा देव सूर्य सोमं क्रेष्याम ऋतून्कल्पयेति। कालतन्त्रे तु प्रायेण सौरमेवानुरुध्य ऋतुक्लृप्तिः प्रवर्तते। तत्र यदा मीनमेषयोरादित्यो ऽवतिष्ठते स सौरस्तावद्वसन्तः यथोक्तं सूर्यकालविद्भिः उदगयने मकरादावृतवः शिशिरादयश्च सूर्यवशादिति। तथा वैष्णवपुराण उक्तं शरद्वसन्तयोर्मध्ये विषुवं तु प्रवर्तत इति ॥ चान्द्रमसस्त्वृतुश्चान्द्रैर्मासैर्भवति। मेषादिगते सूर्ये योयो दर्श आगच्छेत्तत्तदन्ताश्चैत्रादयश्चान्द्रमसा मासाः। तत्र चैत्रफाल्गुनौ वसन्तः। कुतः। मुखं वा एतदृतूनां यद्वसन्तः मुखं वा एतत्संवत्सरस्य यत्फल्गुनीपूर्णमास इति श्रुतेः। यत्तु मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमास इति चैत्र्या

मुख्यत्वाद्विधानं तन्मुख्यत्वान्तर्गतत्वाभिप्रायं द्रष्टव्यं अन्यथोभयमुख-त्वायोगात्। न च विपर्ययः शक्य आस्थातुं तदा फाल्गुन्याः पूर्वभाविन्याः ऋत्वन्तर्गत्यसंभवात्। वाजसनेयके चाश्वमेधं प्रकृत्या-म्नायते तस्माद्वसन्त एवारभ्य यजेत सा या फाल्गुनीभ्यां पौर्णमासी भवतीति। तस्मा फाल्गुन्यादिर्युक्तो वसन्तः चैत्रादिरित्यन्ये। यथाहुः मासैर्द्विसंख्यैर्माघाद्यैः क्रमात्षडृतवः स्मृताः शिशिराद्यास्त्रिभिस्तैस्तु विद्यादयनमुत्तरमिति। छान्दोग्यकल्पे च पञ्चशारदीयं प्रकृत्योक्तं शरदि कार्त्तिके मासि यजेतेति तस्माद्वैशाखो ऽपि चान्द्रो वसन्त इति॥ तथोक्तानामृतुपर्वनक्षत्राणां सति संभवे समुच्चयो न्याय्यः। यथोक्तमाश्वलायनेन एतेषां कस्मिंश्चित्पर्वणि ब्राह्मण आदधीतेति। सत्याषाढस्त्वाह अमावास्यायां पौर्णमास्यामापूर्यमाणपक्षस्य वा पुण्ये नक्षत्रे यत्र त्रीणि संनिपतितान्यृतुर्नक्षत्रं पर्व च तत्सम्रद्धं विप्रतिषेधे ऋतुनक्षत्रं बलीय इति। वाजसनेयके तु श्रूयते यथापिहितायां द्वार्यद्वारा पुरं प्रपित्सेत्स जिह्मः पुरः स्यादेवं तद्यो नक्षत्र आधत्ते तस्मान्न नक्षत्र आदधीतेति। तथा स यो ऽमावास्यायामग्नी आधत्ते यथा विवृतायां द्वारि द्वारा पुरं प्रपद्येतेति प्रशंसापुरःसरमुक्तं तस्मादमावास्यायामेवाग्नीनाद-धीतेति। तथा यासौ वैशाखस्यामावास्या तस्यामादधीत सा रोहिण्या संपद्यत इति च। तदिदं बौधायनेन व्याख्यातं या सा वैशाख्याः पौर्णमास्या उपरिष्टादमावास्या सा सकृ-त्संवत्सरस्य रोहिण्या संपद्यते तस्यामादधीतेति। तथा यदैवैनं श्रद्धोपनमेत्तदादधीतेति श्रुतिमुदाहृत्य व्याचष्टे तदेतदार्तस्यातिदेशं

श्रद्धायुक्तस्येति। भारद्वाजस्त्वाह अथातः श्रद्दधानस्यादधानस्य नर्तुं पृच्छेन्न नक्षत्रमिति ॥

**सोमेन यक्ष्यमाणो नर्तुं सूर्क्षेन्न नक्षत्रम्। २१।**

य आधानानन्तरं सर्वकर्मभ्यः प्राक् सोमाय दीक्षिष्यते यो वा दर्शपूर्णमासारम्भः व्रत्यपस्विज्यादिना कियताचिद्विलम्बेनापि सोम एव पर्यवस्यति स सोमकालानुरोधेनाधानं कर्तुमृतुं नक्षत्रं च न सूर्क्षेत् नाद्रियेत क्षत्रियो ऽपि वसन्त आदधीत यत्र क्वापि नक्षत्रे। पर्व तु सूर्क्षेदेव। तत्र तु सोमपूर्वत्वे ऽपि पक्षापवर्गमासापवर्गाभ्यामाधान-सोमयोः पर्वोपपत्तिः॥ ऋतुनक्षत्रग्रहणं प्रदर्शनार्थमित्यन्ये। केचित्पुनः सोमकालस्याप्यनेन बाधं मन्यन्ते। तदयुक्तं मन्यन्ते प्रकरणादाधान-कालस्यैवानेन बाधावगमात् नक्षत्रग्रहणाच्च। नहि सोमस्य किंचिन्न-क्षत्रमुपदिष्टं येन तन्निषिध्येत तस्मादयुक्तः सोमकालबाधः ॥

**उदवसाय शालीन आदधीतानुदवसाय याया-वरः। २२।**

शालीनः शालायां गृहे नियतवासी। स उदवसाय गृहाद्देशान्तरं गत्वा तत्रादधीत। यायावरः यानशीलः यात्वायात्वा यत्र क्वचन वासीति यावत्स तदा यत्र वसति तत्रैवादधीत ॥

**एकाहं वा प्रयायात्। २३।**

अथवा यायावरो ऽप्येकाहप्रयाणेनोदवसायादधीत ॥

इति तृतीया कण्डिका।

उद्धन्यमानमस्या अमेध्यमप पाप्मानं यजमानस्य हन्तु। शिवा नः सन्तु प्रदिशश्चतस्त्रः शं नो माता पृथिवी तोकसातेति प्राचीनप्रवणं देवयजनमुद्धत्य शं नो देवीरभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु न इत्यद्भिरवोक्ष्य तस्मिन्नुदीचीनवंशं शरणं करोति। १।

उदीचीनान्वंशान्निधाय गार्हपत्यशरणं करोति ॥

तस्याग्रेण मध्यमं वंशं गार्हपत्यायतनं भवति। २।

तस्य शरणस्य पृष्ठवंशादधस्तनं देशमग्रेण गार्हपत्यस्य स्थानं भवति ॥

तस्मात्प्राचीनमष्टासु प्रक्रमेषु ब्राह्मणस्याहवनीयायतनम्। एकादशसु राजन्यस्य। द्वादशसु वैश्यस्य। ३।

अष्टासु प्रक्रमेष्वनीतेष्वाहवनीयस्थानम्। प्रक्रमो द्विपदस्त्रिपदो वा। पदं पञ्चदशाङ्गुलमिति बौधायनः द्वादशाङ्गुलमिति कात्यायनः ॥

चतुर्विंशत्यामपरिमिते यावता वा चक्षुषा मन्यते तस्मान्नातिदूरमाधेय इति सर्वेषामविशेषेण श्रूयते। ४।

चतुर्विंशतिप्रक्रमेष्वाधेयः। अपरिमिते वा देशे अपरिमितमुक्तात्परिमाणादूर्ध्वविषय इति प्रागेवोक्तम्। यावता वा चक्षुषेत्यादि तस्यार्थः नाष्टप्रक्रमादिना रज्ज्वा मिमीते किं तु यावता देशेन यथोक्तान्प्रक्रमांश्चक्षुषा परिच्छिनत्ति यदष्टौ प्रक्रमा यच्चतुर्विंशतिरिति। तस्मान्नातिदूरं तस्यावधेरभ्यन्तरे संनिकर्ष आधेय इति ॥ तथा च

ब्राह्मणं चतुर्निमित आदधीत इयद्वादश विक्रामा२ इति परिमितं चैवापरिमितं चावरुन्द्ध इति। सत्याषाढश्चाह चक्षुषा प्रक्रमान्प्रमिमीतेति विज्ञायत इति॥ तदेतद्विधित्रयं सर्वेषां वर्णानामविशेषेण श्रूयते। द्वादशसु विक्रामेष्वग्निमादधीतेति ब्राह्मणोक्तपक्षो ऽपि हिरण्यकेशिना सर्वार्थत्वेन दर्शितः द्वादशसु विक्रामेष्वग्निमादधीतेत्यनवयवेन श्रूयत इति॥

दक्षिणतःपुरस्ताद्वित्रितीयदेशे गार्हपत्यस्य नेदीयसि दक्षिणाग्नेरायतनम्। ५।

गार्हपत्यस्य दक्षिणतःपुरस्ताद्वित्रितीयदेशे गार्हपत्याहवनीययोरन्तरालदेशस्य तृतीयो ऽंशो विगतो यस्माद्देशात्स तथोक्तः॥ गार्हपत्यस्य नेदीयसीति परमतनिरासार्थं बौधायनेन मध्यदेशवचनात् यथा दक्षिणतो विषुवत्यन्वाहार्यपचनस्येति। समीपसप्तमी चेयं वित्रितीयदेशस्य पश्चात् स्तोकान्तरे देश इत्यर्थः। तथा च स्वयं दर्शयिष्यति गार्हपत्याहवनीययोरन्तरालमित्यादिना॥

अन्यदाहवनीयागारमन्यद्गार्हपत्यस्य। ६।

गार्हपत्यागारात्पृथगेवाहवनीयस्याप्यागारं कर्तव्यमित्यर्थः। तयोरेवान्यतरत्र दक्षिणाग्न्यायतनम्॥

अग्रेणाहवनीयं सभायां सभ्यः। ७।

सभा द्यूतशाला। तत्र सभ्यो ऽग्निराधेयः ततश्च तत्रास्यायतनं स्यादिति भावः॥

तं पूर्वेणावसथ आवसथ्यः। ८।

आवसथो ऽतिथीनां वासभूमिः। शेषं पूर्ववत्॥

केशश्मश्रु वपते नखानि निकृन्तते स्नाति। एवं पत्नी केशवर्जम्। ९।

वपते वापयते। शेषः सुगमः॥

क्षौमे वसानौ जायापती अग्निमादधीयाताम्। १०।

स्नात्वा क्षौमे वसीयातां न च ते प्रागाधानाज्जह्यातामित्यर्थः। भारद्वाजस्त्वाह पुरस्ताद्ब्राह्मौदनिकात्परिदधीयातामित्येकं पुरस्तात्संभारनिवपनादित्यपरमिति॥

ते दक्षिणाकाले ऽध्वर्यवे दत्तः। ११।

गतः। अत्राह बौधायनः अथाभ्यां व्रतोपायनीयं पाचयति तस्याश्नितौ भवतः सर्पिर्मिश्रस्य पयोमिश्रस्येति। तथा दिवाश्नाति रात्रौ वोपास्तमयमिति कात्यायनः॥

अपराह्णे ऽधिवृक्षसूर्ये वौपासनादग्निमाहृत्यापरेण गार्हपत्यायतनं ब्राह्मौदनिकमादधाति। १२।

अध्वर्युरिति शेषः। कालविशेषौ पिण्डपितृयज्ञे व्याख्यातौ। ब्रह्मौदनार्थो ऽग्निर्ब्राह्मौदनिकः॥

औपासनं वा सर्वम्। १३।

सर्वाधाने तद्वर्तिकर्मणां प्रकार उपरिष्टाद्वक्ष्यते ॥

निर्मथ्यं वा । १४ ।

गतः ॥

यदि सर्वमौपासनमाहरेदपूपं यवमयं व्रीहिमयं चौदुम्बरपर्णाभ्यां संगृह्यायतन उपास्येद्यवमयं पश्चा-द्व्रीहिमयं पुरस्तात्तस्मिन्नादध्यात् । १५ ।

सर्वाधाने द्वावपूपौ पृथक् पर्णाभ्यां संगृह्य ब्राह्मौदनिकायतने क्षिप्त्वा तत्राग्निमादध्यात् ॥

सर्वमप्यौपासनमाहरन्नापूपावुपास्येदित्यपरम् । १६ ।

गतः ॥

इति चतुर्थी कण्डिका ।

इति प्रथमः पटलः ॥

---

अपरेण ब्राह्मौदनिकं लोहिते चर्मण्यानडुहे प्राचीनग्रीव उत्तरलोम्नि पाजके वा निशायां ब्रह्मौदनं चतुःशरावं निर्वपति । १ ।

पाजको नाम वैदलं महानसोपकरणम् । निशा चतुर्धाकृताया रात्रे-र्द्वितीयो भागः । ब्राह्मणेभ्य ओदनो ब्रह्मौदनः प्राणेभ्य ओदनो वा ब्रह्मणे प्राणायेति लिङ्गात् । चतुःशरावं निर्वपति चतुर्भिः शरावैः

परिमितान्व्रीहीन्यवान्वा निर्वपति । ब्रह्मौदनशब्दः कर्मनाम। एते-नान्यत्रापि ब्रह्मौदनचोदनासु नाम्ना धर्मातिदेशः सिद्धो भवति । भवति चात्र लिङ्गं तस्मिन्ब्रह्मौदनं पक्त्वा चतुरो ब्राह्मणान्भोजयेत् चतुःशरावं वौदनमिति ॥

देवस्य त्वेत्यनुद्रुत्य ब्रह्मणे प्राणाय जुष्टं निर्वपामीति प्रथममपानायेति द्वितीयं व्यानायेति तृतीयं ब्रह्मणे जुष्टमिति चतुर्थम् । २ ।

द्वितीयतृतीययोरपि ब्रह्मण इत्यनुषङ्गः ॥

तूष्णीं वा सर्वाणि । ३ ।

गतः ॥

चतुर्षूदपात्रेषु पचति । ४ ।

पात्रपरिमितमुदकं उदपात्रम् ॥

न प्रक्षालयति न प्रस्रावयति । ५ ।

तण्डुलानप्सु क्षिप्त्वा हस्तेन न शोधयति न चापस्ताः स्रावयति किं तु अनिर्णिक्तानेव पचतीत्यर्थः ॥

क्षीरे भवतीत्येके । ६ ।

गतः ॥

जीवतण्डुलमिव श्रपयतीति विज्ञायते । ७ ।

ईषदनवक्लिन्नतण्डुलमित्यर्थः ॥

दर्व्या ब्रह्मौदनादुद्धृत्य प्र वेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे। यतो भयमभयं तन्नो अस्त्वव देवान्यजेहेड्यानिति जुहोत्यभि वा मन्त्रयते । ८ ।

ब्रह्मौदनमुद्वास्य ततो दर्व्या गृहीत्वा जुहोति तमभिमन्त्रयते वा ॥

चतुर्धा ब्रह्मौदनं व्युद्धृत्य प्रभूतेन सर्पिषोपसिच्य कर्षन्ननुच्छिन्दंश्चतुर्भ्य आर्षेयेभ्य ऋत्विग्भ्य उपोहति। ९ ।

व्युद्धृत्य पृथक् पात्रेषु निक्षिप्य । कर्षन् भूमेरनुत्क्षिप्य पात्राणि गमयन् । अनुच्छिन्दन् यावदृत्विजो गृह्णन्ति तावदनुत्सृजन्। आर्षेयेभ्यः ऋषिर्वेदः तं ये विदुस्त आर्षेयाः वेदतदर्थयोः श्रुतवन्त इत्यर्थः एष वै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवानिति लिङ्गात् । कात्यायनस्त्वाह ये सप्त भूयः पञ्चपुरुषं वा योनिं श्रुतवन्तः पितृवन्तः पैतृमत्या आर्षेयास्ते संहतकुलीना आर्त्विजीना भवन्तीति ॥ व्युद्धरणादि याजमानं चतुर्भ्य उपोहतीति वचनात् । अत एव वचनान्नोद्गातुरंशः सत्यप्युद्गातरि । तथा च तासु ब्रह्मौदनं पचतीत्यत्र तं चतुर्भ्य आर्षेयेभ्यो महर्त्विग्भ्य उपोहतीति तत्प्राप्त्यर्थं यत्नं करिष्यतीति ॥

अपात्ताः प्रथमे पिण्डा भवन्त्यप्रतिहताः पाणयः। अथ ब्रह्मौदनशेषं संक्षुष्य तस्मिन्नाज्यशेषमानीय तस्मिंश्चित्रियस्याश्वत्यस्य तिस्रः समिध आर्द्राः सपलाशाः प्रादेशमात्र्यः स्तिभिगवत्यो विवर्तयति । १० ।

इति पञ्चमी कण्डिका ।

अग्न्याधेय



त्रिचियादश्वत्थात्संभृता बृहत्यः शरीरमभिसंस्कृता स्थ। प्रजापतिना यज्ञमुखेन संमितास्तिस्रस्त्रिवृद्भिर्मिथुनाः प्रजात्या इति। १।

ऋत्विग्भिः प्रथमे ग्रासा गृहीता भवन्ति। अप्रतिहताश्च पाणयः पात्रेषु॥ एवं स्थिते अध्वर्युः शेषसंकर्षणादि प्रतिपद्यते। पिण्डं सव्येन ध्रियते सामर्थ्यात्॥ संकर्षणं निष्कर्षणम्। त्रिचियो लक्षणः ग्रामतीर्थादिव्यपदेशक इत्यर्थः। स्त्रिभिगवत्यः फलवत्यः। विवर्तयति विलोडयति॥

अथादधाति घृतवतीभिराग्नेयीभिर्गायत्रीभिर्ब्राह्मणस्य त्रिष्टुग्भी राजन्यस्य जगतीभिर्वैश्यस्य। २।

उत्तरसूत्रेणैव सिद्धे घृतवतीभिरित्याद्यनुक्रमणं वैचित्र्यार्थं ब्राह्मणानुकरणार्थं वा॥

समिधाग्निं दुवस्यतेत्येषा॥ उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत। जुषस्व समिधो मम॥ तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि। बृहच्छोचा यविष्ठेति ब्राह्मणस्य॥ समिध्यमानः प्रथमो नु धर्मः समक्तुभिरज्यते विश्ववारः। शोचिष्केशो घृतनिर्णिक् पावकः सुयज्ञो अग्निर्यजथाय देवान्॥ घृतप्रतीको घृतयोनिरग्निर्घृतैः समिद्धो घृतमस्यान्नम्। घृतप्रुषस्त्वा सरितो वहन्ति घृतं पिबन्त्सुयजा यक्षि देवान्॥ आयुर्दा अग्न इति

राजन्यस्य॥ त्वामग्ने समिधानं यविष्ठ देवा दूतं चक्रिरे हव्यवाहम्। उरुज्जयसं घृतयोनिमाहुतं त्वेषं चक्षुर्दधिरे चोदयन्वति॥ त्वामग्ने प्रदिव आहुतं घृतेन सुम्नायवः सुषमिधा समीधिरे। स वावृधान ओषधीभिरुक्षित उरु ज्रयांसि पार्थिवा वितिष्ठसे॥ घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं न समिधान ऋञ्जते। इन्धानो अक्रो विदथेषु दीद्यच्छुक्रवर्णामुदु नो यंसते धियमिति वैश्यस्य। ३।

गतः॥

इति षष्ठी कण्डिका।

---

समित्सु तिस्रो वत्सतरीर्ददाति। १।

अध्वर्यवे इति शेषः। तथा च वक्ष्यत्युपोत्तरसूत्रे वत्सतरीरतिक्रान्तवत्सभावा स्तनपानोपरता इति यावत्। नात्र प्रतिग्रहमन्त्राः अयज्ञत्वादङ्गदक्षिणात्वाच्च॥

प्राश्नन्ति ब्राह्मणा ओदनम्। २।

ब्राह्मणा ऋत्विजः॥

प्राशितवद्भ्यः समानं वरं ददाति। ३।

वरशब्दो व्याख्यास्यते। समानमिति वचनादन्ये वरा अध्वर्योरेव भवन्ति॥

यस्मिन्नक्षत्रेऽग्निमाधास्यन्स्यात्तस्मिन्संवत्सरे पुरस्ता-द्वैताः समिध आदध्याद्द्वादशाहे द्व्यहे त्र्यहे एकाहे वा । ४ ।

यस्मिन्नहन्याधास्यते ततः पुरस्तात्संवत्सरे यत्समानस्थानमहः तस्मि-न्द्वादशाहादौ वारणाहरणादि कृत्वा समिध आदध्यात् ॥

आधेयास्त्वेवाग्निमादधानेन । ५ ।

प्रमादादिस्मृता अप्याधेया एव प्राक् समारोपणात् न तूपेक्षणीयाः । कस्मात् । अनाहितस्तस्याग्निरित्याहुः यः समिधोऽनाधायाग्निमाधत्त इति श्रुतेरिति भावः ॥

अथ व्रतं चरति न मांसमश्नाति न स्त्रियमुपैति नास्याग्निं गृहाद्धरन्ति नान्यत आहरन्ति । ६ ।

गताः ॥

ब्राह्मौदनिकेन संवत्सरमासीत । ७ ।

संवत्सरग्रहणं द्वादशाहादीनामप्युपलक्षणं इतरथा तद्विधिवैयर्थ्यात् ॥

औपासनश्चेदाहित एतस्मिन्नस्याग्निकर्माणि क्रियन्ते । ८ ।

औपासनश्चेदाहितः न त्वौपासनादेकदेशः तदैतस्मिन्नेवाग्नौ नित्यनै-मित्तिकानि कर्माणि क्रियन्ते । ऊर्ध्वं त्वग्न्याधेयान्नित्यानि लुप्यन्ते । एषामर्थाः श्रौतैरेवाप्यन्ते यथा नित्यहोमादीनाम् । नैमित्तिकान्य-

ष्टकादीनि च लौकिके ऽग्नौ क्रियन्ते। एकदेशाधाने पुनरौपासन एवैतानि क्रियन्ते। भ्रियते च सः नित्यो धार्य इति वचनात्॥ होमस्तेदानीं न लुप्यते उभयत्र जुहुयादौपासनमग्निहोत्रं चेति भारद्वाजवचनात्। बौधायनेनापि सर्वं वा ब्राह्मौदनिकमौपासनं कुर्वन्ति सो ऽत्रैव हि हूयत इति सर्वाधानपक्षे ऽग्निहोत्रेणैवास्य होमावाप्तिमभिदधानेन पक्षान्तरे पृथगुभयत्र होतव्यमित्युक्तं भवतीति॥

न प्रयायात्। ९।

यजमान इति शेषः। तथा यजमानाधिकारे न प्रयातीति सत्याषाढः॥

नानुगच्छेत्। १०।

ब्राह्मौदनिक इति शेषः। तथा नैषो ऽग्निरनुगच्छेदिति भारद्वाजः॥

यदि प्रयायादनु वा गच्छेद्ब्रह्मौदनं पक्त्वैतयैवावृता समिध आदध्यात्। ११।

अनुगतस्य च यथायोन्युत्पत्तिरौपासनवत्सर्वाधाने। आवृत् प्रकारः॥

यद्येनं संवत्सरे ऽग्न्याधेयं नोपनमेद्ब्रह्मौदनं पक्त्वा समिध आधाय यदैनमुपनमेदथादधीत। १२।

संवत्सरग्रहणमत्रापि प्रदर्शनार्थम्। तत्रतत्र काले ऽग्न्याधेयाशक्तौ प्रायश्चित्तमेतत्कृत्वा यदा शक्नुयात्तदादधीत। तत्र तु नक्षत्रादेरप्यनादर इति केचित्। पूर्वसूत्रे चात्र ब्रह्मौदनात्पृथक् समिधां ग्रहणात्

आपस्तम्बेय



ब्रह्मौदनाङ्गत्वमासामेव बाधितं भवति आधेयास्त्वेवाग्निमादधानेनेति वचनाच्चाधानाङ्गत्वम् । तस्माद्ब्रह्मौदनान्तरेषु समिधो न भवन्ति ॥

तस्य याथाकामी भरणकल्पानाम् । १३ ।

तस्यानुपनताग्न्याधेयस्य यावदुपनामं ब्राह्मौदनिकोक्तभरणकल्पानां याथाकामी । तद्भरणकालोक्तानि व्रतानि भवन्ति न वेत्यर्थः ॥

द्वादशाहं चरेदेकाहं वा । १४ ।

यदोपनतमग्न्याधेयं तदा पुनरपि द्वादशाहमेकाहं वा व्रतानि चरित्वा-दधीत ॥

श्व आधास्यमानः पुनर्ब्रह्मौदनं पचति । १५ ।

अधिकारादयमप्यनुपनताग्न्याधेयस्य विधिः । अन्यत्तु मतम् । श्व आधास्यमान इत्यविशेषवचनात् सर्वस्यायं नित्यः पुनर्ब्रह्मौदनः तेन यो ऽप्येकाहव्रतकल्पेन श्व आधाता तस्याप्यावर्तनीय इति । तदुक्तं बौधायनेन द्विर्ब्रह्मौदनमु हैके ब्रुवत इति ॥

यो ऽस्याग्निमाधास्यन्स्यात्स एतां रात्रिं व्रतं चरति न मांसमश्नाति न स्त्रियमुपैति । १६ ।

य आधास्यन्नित्यध्वर्योरेव ग्रहणं सर्वर्त्विजामुपलक्षणं वा । तथा च भारद्वाजः अध्वर्युरेव व्रतं चरेदित्येकं सर्वर्त्विज इत्यपरमिति ॥

प्रजा अग्ने संवासयाशाश्च पशुभिः सह । राष्ट्राण्यस्मा

आधेहि यान्यासन्सवितुः सव इत्युत्तरेण गार्हपत्यायतनं कल्माषमजं बध्नाति। १७।

कल्माषः कृष्णबिन्दुः॥

इति सप्तमी कण्डिका।

---

अथ यजमानो व्रतमुपैति वाचं च यच्छत्यनृतात्सत्यमुपैमि मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामीति। १।

सत्यवचनसंकल्पेनाच व्रतोपायनमभिप्रेतं मन्त्रलिङ्गात् ब्राह्मौदनिककालव्रतानां अर्वागेवोपेतत्वाच्च॥

वीणातूणवेनैनमेतां रात्रिं जागरयन्ति। २।

तूणवो वंशः॥

अपि वा न जागर्ति न वाचं यच्छति। ३।

अस्मिन्पक्षे वाग्यमनमन्त्रस्य लोपो दैवीं वाचं यच्छामीति॥

शल्कैरेतां रात्रिमेतमग्निमिन्धान आस्ते शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम्। उभयोर्लोकयोर्ऋद्ध्वाति मृत्युं तराम्यहमित्येतया। ४।

शल्कैः शकलैः। जागरणपक्षे मन्त्रावृत्तिः विपर्यये तु सकृदेव महान्ति काष्ठान्याधाय स्वपिति॥

तस्मिन्नुपव्युषमरणी निष्टपति जातवेदो भुवनस्य रेत

इह सिञ्च तपसो यज्जनिष्यते । अग्निमश्वत्थादधि हव्य-वाहं शमीगर्भाज्जनयन्यो मयोभूः ॥ अयं ते योनिर्ऋत्विय इत्येताभ्याम् । ५ ।

उपव्युषं उषःसमीपे । निष्टपनानन्तरमग्निमुद्वापयेत् भस्मापोह्येत्युक्तरत्रवचनात् अनुगमयत्येतमग्निमिति कल्पान्तरेषु व्यक्तवचनाच्च ॥

अग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्य इत्यरणी अभिमन्त्र्य मही विश्पत्नी सदने ऋतस्यार्वाची एतं धरुणे रयीणाम् । अन्तर्वत्नी जन्यं जातवेदसमध्वराणां जनयथः पुरोगामित्यरणी आह्रियमाणे यजमानः प्रतीक्षते । ६ ।

प्रथमं निष्टप्ते अभिमन्त्र्य तत आह्रियमाणे प्रतीक्षते ॥

दोह्या च ते दुग्धभृच्चोर्वरी ते ते भागधेयं प्रयच्छामीति यजमानाय प्रयच्छति । ७ ।

गतः ॥

आरोहतं दशतं शक्वरीर्ममर्तेनाग्न आयुषा वर्चसा सह । ज्योग्जीवन्त उत्तरामुत्तरां समां दर्शमहं पूर्णमासं यज्ञं यथा यजा इति प्रतिगृह्यर्त्वियवती स्थो अग्निरेतसौ गर्भं दधाथां ते वामहं ददे । तत्सत्यं यद्वीरं बिभृथो वीरं जनयिष्यथः ॥ ते मत्प्रातः प्रजनिष्येथे ते

मा प्रजाते प्रजनयिष्यथः। प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोक इति प्रतिगृह्याभिमन्त्रयते यजमानः । ८ ।

पुनः प्रतिगृह्येति वचनमानन्तर्यार्थं मा भूदवस्यक्त्यैरप्यभिमन्त्रणस्य व्यवाय इति ॥

इत्यष्टमी कण्डिका ।

इति द्वितीयः पटलः ॥

---

मयि गृह्णाम्यग्रे अग्निं यो नो अग्निः पितर इत्युभौ जपतः। अपेत वीतेति गार्हपत्यायतनमुद्धत्य शं नो देवीरभिष्टय इत्यद्भिरवोक्षति । १ ।

गतौ ॥

एवं दक्षिणाग्नेराहवनीयस्य सभ्यावसथ्ययोश्च । २ ।

एषामायतनान्यप्येवमेवैकैकमुद्धृत्यावोक्षति ॥

एवमनुपूर्वाण्येवैषत ऊर्ध्वं कर्माणि क्रियन्ते । ३ ।

गतः ॥

सिकतानामर्धं द्वैधं विभज्यार्धं गार्हपत्यायतने निवपत्यर्धं दक्षिणाग्नेः । अर्धं चैधं विभज्य पूर्वेषु । ४ ।

पूर्वेषु आयतनेष्विति शेषः । यदा न सभ्यावसथ्यौ तदार्धं सर्वमाहवनीय एव ॥

एतेनैव कल्पेन सर्वान्पार्थिवान्निवपति। ५।

कल्पो विभागप्रकारः॥

अग्नेर्भस्मासीति सिकता निवपति। संज्ञानमित्यूषान्। ६।

गतः॥

तान्निवपन्यददश्चन्द्रमसि कृष्णं तदिहास्त्विति मनसा ध्यायति। ७।

यदद इति चन्द्रलक्ष्मध्यानप्रकारो ब्राह्मणानुसाराद्दर्शितो न मन्त्र इति द्रष्टव्यम्॥

उदेह्यग्ने अधि मातुः पृथिव्या विश आविश महतः सधस्थात्। आखुं त्वा ये दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपामित्याखुकरीषम्॥ यत्पृथिव्या अनामृतं संबभूव त्वे सचा। तदग्निरग्नये ऽददात्तस्मिन्नाधीयतामयमिति गार्हपत्यायतने वल्मीकवपां निवपति। ८।

गतौ॥

यदन्तरिक्षस्येति दक्षिणाग्नेः। यद्दिव इति पूर्वेषु। ९।

अनामृतमित्यादेरुभयत्रानुषङ्गः। इमौ तु मन्त्रौ तद्वायुरग्नये ऽददात्तदादित्यो ऽग्नये ऽददादिति विकृतरूपौ पठितवान्बौधायनः॥

उत्समुद्रान्मधुमाँ ऊर्मिरागात्साम्राज्याय प्रतरां दधानः। अमी च ये मघवानो वयं चेषमूर्जं मधमत्सं-

भरेमेति ह्रदम्। इयत्यग्र आसीरिति वराहविहतम् ।१०।

गतौ ॥

अद्रो देवी प्रथमाना पृथग्यद्देवैर्न्युप्ता व्यसर्पो महित्वा। अर्द्दहथाः शर्कराभिस्त्रिविष्टप्यजयो लोकान्प्रदिशश्चतस्र इति शर्कराः। द्वेष्यं च मनसा ध्यायति ।११।

निवपन्द्वेष्यं मनसा ध्यायति। पञ्चसंभारपक्षे ताम्रशकलानां तूष्णीं निवपनम् ॥

इति नवमी कण्डिका।

---

ऋतं स्तृणामि पुरीषं पृथिव्यामृते ऽध्यग्निमादधे सत्ये ऽध्यग्निमादध इत्यायतनेषु संभाराननुव्यूहति।१।

अनुव्यूहति प्रथयति ॥

सं या वः प्रियास्तनुव इत्येषा॥ सं वः सृजामि हृदयानि संसृष्टं मनो अस्तु वः। संसृष्टः प्राणो अस्तु व इति वानस्पत्यान्संसृज्य सिकतावन्निवपतीतः प्रथम जज्ञे अग्निरित्येतया।२।

सिकतावदर्धं गार्हपत्ययोर्द्वेधा त्रेधा चार्धं पूर्वेष्वित्यर्थः ॥

यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्षे दिवि याः पृथिव्याम्। ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्न इति गार्हपत्यायतने सौवर्णं हिरण्यशकलमुत्तरतः संभारेषूपास्यति। ३।

हिरण्यस्य पार्थिवसंभारत्वे ऽपि वचनादुत्कर्षः। तत्संभाराणामुपर्युत्तरभागे न्यस्यति॥

चन्द्रमग्निं चन्द्ररथं हरित्वचं वैश्वानरमप्सुषदं सुवर्विदम्। विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुरित्युपास्तमभिमन्त्रयते। द्वेष्याय रजतं प्रयच्छति। ४।

गतौ॥

यदि द्वेष्यं नाधिगच्छेद्यां दिशं द्वेष्यः स्यात्तेन निरस्येत्। ५।

यां दिशं प्रति द्वेष्यः स्थितः स्यात्तेन दिग्भागेन निरस्येत्। रजतं वृषलाय वाज्ञाताय वातिप्रयच्छतीति बौधायनः॥

एवं सर्वेषूपास्य करोति। ६।

आयतनान्तरेष्वप्येवं हिरण्यमुपास्य शेषमपि तत्तत्र करोतीत्यर्थः॥

ब्राह्मौदनिकाङ्गारमपोह्य तस्मिञ्छमीगर्भादग्निं मन्थति। ७।

ब्राह्मौदनिकादिति षष्ठ्यर्थे पञ्चमी । तथा ब्राह्मौदनिकस्येत्येव भारद्वाजः । तस्य भस्मापनीय तस्मिन्देशे मन्थति ॥

उद्यत्सु रश्मिषु दशहोतारणी समवदधाति । ८ ।

उदयात्पूर्वभाविनो ये रश्मयस्तेषूद्यत्सु प्राच्यां दिशि जातप्रकाशायामित्यर्थः अन्यथार्धोदिते सूर्य आहवनीयमित्यनेन विरोधात् नक्तं गार्हपत्यमादधातीति श्रुतेश्च । समवदधाति अधरस्यामुत्तरां स्थापयति । तत्र प्रतीचीनप्रजननामरणिं निधायेति बौधायनः ॥

सहाग्ने ऽग्निना जायस्व सह रय्या सह पुष्ट्या सह प्रजया सह पशुभिः सह ब्रह्मवर्चसेनेत्युपतिष्ठत्यश्वे ऽग्निं मन्थति । ९ ।

उपतिष्ठति समीपस्थे ॥

श्वेतो ऽश्वो ऽविक्लिन्नाक्षो भवति रोहितो वासितजानुरपि वा य एव कश्चित्साण्डः । १० ।

अविक्लिन्नाक्षः अक्लिन्ननेत्रः ॥

मथ्यमाने शक्तेः सांकृतेः साम गायति । धूमे जाते गाथिनः कौशिकस्य । अरण्योर्निहितो जातवेदा इति च । ११ ।

शक्तिना दृष्टं साम शक्तेः साम ॥

उपावरोह जातवेद इति निर्वर्त्यमानमभिमन्त्रयते। १२।

निर्वृत्तमात्रमित्यर्थः॥

इति दशमी कण्डिका॥

---

अथ चतुर्होतॄन्यजमानं वाचयति। १।

चित्तिः स्रुगित्यादि पञ्चानुवाकाश्चतुर्होतारः॥

अजनन्निग्नः पूर्वः पूर्वेभ्यः पवमानः शुचिः पावक ईड्य इति जातमभिमन्त्रयते। २।

गतः॥

जाते यजमानो वरं ददाति। ३।

पूर्ववदध्वर्यव एव। वरस्य रूपमाह॥

गौर्वै वरोऽतिवरोऽन्यो धेनुर्वरोऽतिवरोऽन्योऽनड्वान्वरोऽतिवरोऽन्यः पष्ठौही वरोऽतिवरोऽन्यः। ४।

वरो वरयितव्यः स च गौः। कुतः। तस्या एव जात्यन्तरेभ्यो बहुफलत्वेन वरयितव्यत्वात्। अन्यस्त्वजाश्वादिजातिरतिवरः वरजातीयमतीत्य वर्तते न वर इत्यर्थः। गोस्तुत्यर्थं चैतत् यथा पशवो वा अन्ये गोअश्वेभ्य इति। ततश्च वरचोदनासु गौरेव देयेत्यर्थः। गोष्वपि

संभवे धेनुर्देया सद्यःफलत्वात्। अनड्वान्देयः उदवहनकर्षणादिभिः प्रकृष्टफलत्वात्। पष्ठौही गर्भिणी द्वैरूप्याच्च प्रकर्षः। अतिवरो ऽन्य इति पुनःपुनरनुक्रमणं च तत्तत्प्रशंसार्थमेव ॥

जातं यजमानो ऽभिप्राणिति प्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः पोषेण मह्यं दीर्घायुत्वाय शतशारदाय शतं शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्यायेति। ५।

अभिप्राणिति अग्नेरुपर्युच्छ्वसिति ॥

अजीजनन्नमृतं मर्त्यासो ऽस्रेमाणं तरणिं वीडुजम्भम्। दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभिसंरभन्तामिति जातमञ्जलिनाभिगृह्य सम्राडसि विराडसि सारस्वतौ त्वोत्सौ समिन्धातामन्नादं त्वान्नपत्यायेत्युपसमिध्यायैनं प्राञ्चमुद्धृत्यासीनः सर्वेषां मन्त्राणामन्तेन रथंतरे गीयमाने यज्ञायज्ञीये च यथर्ष्याधानेन प्रथमया व्याहृत्या द्वाभ्यां वा प्रथमाभ्यां च सर्पराज्ञीभ्यां प्रथमेन च घर्मशिरसा। ६।

संभारेषु निदधातीति वक्ष्यमाणेन संबन्धः। अभिग्रहणमाध्वर्यवम्। अभिगृह्य न्यञ्चमञ्जलिमग्नेरुपरि कृत्वा। उद्धृत्योर्ध्वाञ्जलिना गृहीत्वा। आसीनः सम्यगासीनः दक्षिणाग्रावूर्ध्वज्ञुरासीन इति विशेषणात्। यद्वा दक्षिणाग्रावित्येवोर्ध्वज्ञुत्वादिनियमो नास्तीत्यर्थः। अथ समाख्याभिरुपदिष्टानि यथर्ष्याधानादीनि स्वरूपेण दर्शयति ॥

भृगूणां त्वा देवानां व्रतपते व्रतेनादधामीति भार्गवस्यादध्यात्। अङ्गिरसां त्वा देवानां व्रतपते व्रतेनादधामीति यो ब्राह्मण आङ्गिरसः स्यात्। आदित्यानां त्वा देवानां व्रतपते व्रतेनादधामीत्यन्यासां ब्राह्मणीनां प्रजानाम्। वरुणस्य त्वा राज्ञो व्रतपते व्रतेनादधामीति राज्ञः। इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनादधामीति राजन्यस्य। मनोस्त्वा ग्रामण्यो व्रतपते व्रतेनादधामीति वैश्यस्य। ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्येति यथर्ष्याधानानि। ७।

राजा अभिषिक्तः। राजन्यः क्षत्रियः। रथकारो व्याख्यातः॥

इत्येकादशी कण्डिका।

---

भूर्भुवः सुवरिति व्याहृत्यः। भूमिर्भूम्नेति सर्पराज्ञियः। घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भुवत्। छर्दिस्तोकाय तनयाय यच्छ॥ वातः प्राणस्तदयमग्निः संप्रियः पशुभिर्भुवत्। स्वदितं तोकाय तनयाय पितुं पच॥ अर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः संप्रियः पशुभिर्भुवत्। यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः शुक्रं ज्योतिरजस्रं तेन मे दीदिहि तेन त्वादधे ऽग्निनाग्ने ब्रह्मणेति घर्मशिरांसि। १।

चतस्रः सार्पराज्ञ्य इति सत्याषाढः। त्रीणि घर्मशिरांसि। तृतीयं तु घर्मशिरो ब्रह्मणेत्यन्तं भवति॥

यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः। ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने॥ प्राणं त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै। दिवस्त्वा वीर्येण पृथिव्यै महिम्नान्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे॥ अग्ने गृहपते ऽहे बुध्न्य परिषद्य दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय। पृथिव्यास्त्वा मूर्धन्सादयामि यज्ञिये लोके। यो नो अग्ने निष्ट्यो यो ऽनिष्ट्यो ऽभिदासतीदमहं तं त्वयाभिनिदधामीति संभारेषु निदधाति। २।

स्प म्॥

सुगार्हपत्यो विदहन्नरातीरुषसः श्रेयसीःश्रेयसीर्दधत्। अग्ने सपत्नाँ अपबाधमानो रायस्पोषमिषमूर्जमस्मासु धेहीत्याधीयमानमभिमन्त्रयते यजमानो घर्मशिरांसि चैनमध्वर्युर्वाचयति। ३

गतः॥

इति द्वादशी कण्डिका।

इति तृतीयः पटलः॥

आनन्दाश्रम



**अर्धोदिते सूर्य आहवनीयमादधाति। १।**

अर्धोदिते ऽग्नेः प्रतिष्ठापनं यथा स्यात्तथा प्रारम्भः कार्यः॥

**उदिते ब्रह्मवर्चसकामस्य। २।**

तत्र गार्हपत्यस्याप्युदिताधानमाह सत्याषाढः सर्वानुदिते ब्रह्मवर्चस-कामस्येति॥

**गार्हपत्ये प्रणयनीयमाश्वत्थमिध्ममादीपयति सिकतास्वोपयमनीरुपकल्पयते। ३।**

प्रणयनीयं प्रणयनार्थमिन्धनम्। उपकल्पयते पात्रेण गृह्णाति॥

**तमुद्यच्छत्योजसे बलाय त्वोद्यच्छे वृषणे शुष्मायायुषे वर्चसे। सपत्नतूरसि वृत्रतूः॥ यस्ते देवेषु महिमा सुवर्गो यस्त आत्मा पशुषु प्रविष्टः। पुष्टिर्या ते मनुष्येषु पप्रथे तया नो अग्ने जुषमाण एहि॥ दिवः पृथिव्याः पर्यन्तरिक्षाद्वातात्पशुभ्यो अध्योषधीभ्यः। यत्रयत्र जातवेदः संबभूथ ततो नो अग्ने जुषमाण एहि॥ उदु त्वा विश्वे देवा इत्येताभिस्तिसृभिः। ४।**

तमादीप्तमिध्ममुद्धरति॥

**उपरीवाग्निमुद्यच्छति। ५।**

इवेषदर्थे। अग्निमुद्धरन्किंचिदुद्गृह्णातीत्यर्थः। उपरीवाग्निमुद्गृह्णीयादुद्धरन्निति हि ब्राह्मणम्॥

34

उद्यतमुपयतं धारयति। ६।

उपयतं सिकताभिरुपगृहीतम् ॥

अथाश्वस्य दक्षिणे कर्णे यजमानमग्नितनूर्वाचयति या वाजिन्नग्नेः पशुषु पवमाना प्रिया तनूस्तामावह या वाजिन्नग्नेरप्सु पावका प्रिया तनूस्तामावह या वाजिन्नग्नेः सूर्ये शुचिः प्रिया तनूस्तामावहेति। धारयत्येवाग्निम्। ७।

अश्वस्य दक्षिणे कर्णे वदन्यजमानं वाचयति। धारयत्येव किंचित्कालं न निदधाति ॥

अथाग्नीध्रो लौकिकमग्निमाहृत्य मथित्वा वोर्ध्वज्ञुरासीनो दक्षिणमग्निमादधाति यज्ञायज्ञीये गीयमाने यथर्ष्याधानेन द्वितीयया व्याहृत्या तिसृभिः सर्पराज्ञीभिर्द्वितीयेन च घर्मशिरसा ॥ यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः। ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने ॥ व्यानं त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै। दिवस्त्वा वीर्येण पृथिव्यै महिम्नान्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे ॥ अग्ने ऽन्नपा मयोभुव सुशेव दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय। पृथिव्यास्त्वा मूर्धन्सादयामि यज्ञिये लोके। यो नो

अग्ने निष्ठ्यो यो ऽनिष्ठ्यो ऽभिदासतीदमहं तं त्वयाभिनिदधामीति संभारेषु निदधाति। ८।

गतौ ॥

इति त्रयोदशी कण्डिका।

यो ब्राह्मणो राजन्यो वैश्यः शूद्रो वासुर इव बहुपुष्टः स्यात्तस्य गृहादाहृत्यादध्यात्पुष्टिकामस्य। १।

बहुपुष्टः स्फीतश्रीः असुरनिदर्शनं च पोषातिशयदर्शनार्थम्। स हि नृशंसो बलिष्ठस्च सन् पुंसःपुंसो धनमादाय स्फीततरो भवति ॥

गृहे त्वस्य ततो नाश्नीयात्। २।

अस्य बहुपुष्टस्य गृहे ततः परं नाश्नीयाद्यजमानः ॥

अम्बरीषादन्नकामस्य वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्य। ३।

अम्बरीषं भ्राष्ट्रम्। अत्र बौधायनः अपि वा गार्हपत्यादेवान्वाहार्यपचनमादधातीति। लिङ्गं चात्र प्रदर्शितं तस्य त्रेधा महिमानं व्यौहदिति। विट्कुलाद्वित्तवतो वैकयोनय इत्येक इत्याश्वलायनः ॥

वामदेव्यमभिगायत आहवनीय उद्ध्रियमाणे। ४।

गतः ॥

प्राचीमनु प्रदिशमित्येषा॥ विक्रमस्व महाँ असि वेदिषन्मानुषेभ्यः। त्रिषु लोकेषु जागृहि प्रजया च धनेन च॥ इमा उ मामुपतिष्ठन्तु राय आभिः प्रजाभिरिह संवसेय। इहो इडा तिष्ठतु विश्वरूपी मध्ये वसोर्दीदिहि जातवेद इति प्राञ्चो ऽश्वप्रथमा अभिप्रव्रजन्ति।५।

अश्वयजमानापेक्षया बहुवचनम्। तेन गमनमन्त्रा यजमानस्यापि भवन्ति॥

दक्षिणतो ब्रह्मा रथं रथचक्रं वा वर्तयति यावच्चक्रं त्रिः परिवर्तते।६।

दक्षिणतो विहारस्य गमयति चक्रं तद्यावत्त्रिः परिवर्तते॥

षट्कृत्वो द्वेष्यस्य।७।

षट्कृत्वो यावत्परिवर्तत इत्यनुषङ्गः॥

जानुदघ्ने धारयमाणस्तृतीयमध्वनो ऽग्निं हरति नाभिदघ्ने तृतीयमास्यदघ्ने तृतीयम्। न कर्णदघ्नमत्युद्गृह्णाति।८।

गताः॥

यद्युद्गृह्य निगृह्णीयान्मुखेन संमायादध्यात्।९।

यदि जान्वादिप्रमाणान्नाभ्यादिप्रमाणे ऽग्निमुद्गृह्य ततः प्रमाणात्पु-

नर्नीदैर्गह्लीयात् तदैनं मुखेन संमाय मुखतुल्यं धारयित्वादध्यात्। तदेवात्र प्रायश्चित्तमिति भावः॥

नाग्निमादित्यं च व्यवेयात्। १०।

अग्न्यागारस्थानामयमन्तरागमनप्रतिषेधः॥

दक्षिणतः परिगृह्य हरति। ११।

आत्मनो दक्षिणतः प्रसारिताभ्यां हस्ताभ्यां धारयन्हरति॥

अर्धाध्वे यजमानो वरं ददाति। १२।

गतः॥

अर्धाध्वे हिरण्यं निधाय नाको ऽसि ब्रध्नः प्रतिष्ठा संक्रमण इत्यतिक्रामति। १३।

अध्वर्युरिति शेषः॥

प्राञ्चमश्वमभ्यस्थाद्विश्वा इति दक्षिणेन पदोत्तरतः संभारानाक्रमयति यथाहितस्याग्नेरङ्गाराः पदमभ्यववर्तेरन्निति। १४।

उत्तरतः उत्तरेण पार्श्वेन पार्श्वत आक्रमयेदिति श्रुतेः। इतिः प्रकारार्थः। तथा नाम संभारानाक्रमयति यथा तेष्वाहितस्याग्नेरङ्गारास्तत्पदमभ्यववर्तेरन्। तत्रैव स्वयमेव पतिष्यन्नित्यर्थः॥

प्रदक्षिणमावर्तयित्वा यदक्रन्द इति पुनरेवाक्रमयति। १५।

गतः ॥

पुरस्तात्प्रत्यञ्चमश्वं धारयति। १६।

आक्रामन्तं चाश्वमाहवनीयायतनस्य पुरस्तात्प्रत्यङ्मुखं धारयतीत्यर्थः। तथा प्रदक्षिणमावर्त्य प्रत्यञ्चमाक्रमयतीति कल्पान्तराणि। द्वितीयमपि प्राञ्चमेवाक्रमय्य ततः प्रत्यङ्मुखो धार्यत इत्येके ॥

पूर्ववाडश्वो भवति। १७।

पूर्ववाट् युवेत्यर्थः। तदुक्तं बौधायनेन अश्वं पूर्ववाहमिति युवानमित्येवेदमुक्तं भवतीति ॥

तदभावे ऽनड्वान्पूर्ववाडेतानि कर्माणि करोतीति पैङ्गायनिब्राह्मणं भवति। १८।

एतानि कर्माण्युपतिष्ठत्यश्व इत्यादीनि। तत्राश्वप्रतिनिधित्वादनडुह्यप्यश्वलिङ्गानां मन्त्राणामनिवृत्तिः। अजकमण्डल्वोस्तु निवृत्तिः अश्वविकल्पत्वात् ॥

इति चतुर्दशी कण्डिका।

---

कमण्डलुपद आदधीतेति बह्वृचब्राह्मणम्। अजस्य पद आदधीतेति वाजसनेयकम्। १।

अस्ति कमण्डलुशब्दः पशुजातिविशेषवचनः यथा चतुष्पाद्भ्यो ढञित्यत्र शाब्दिकवृद्धैरुदाहृतं कामण्डलेय इति। विवृतं च कमण्डल्वादि-

आनन्दाश्रम



शब्दाः पशुजातिविशेषवचना इति अस्ति च करकवचन इति। तत्र पशुवचनोऽयमिष्यते न करकवचनः पशुशब्दमध्यपठितत्वात् पदशब्दसमभिव्याहाराच्च। न च करकपृष्ठे पदोपचार इति वाच्यं मुख्यार्थे संभवत्युपचाराश्रयणस्यायुक्तत्वात् अश्वस्य पदेऽजस्य पदे इति पूर्वापराभ्यां वैलक्षण्यप्रसङ्गाच्च॥

अथ यजमानः शिवा जपति ये ते अग्ने शिवे तनुवौ विराट्च स्वराट्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ सम्राट्चाभिभूश्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ विभूश्च परिभूश्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ प्रभ्वी च प्रभूतिश्च ते मा विशतां ते मा जिन्वताम्। यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वादध इति। २।

गतः॥

यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति यजमानो द्वेष्याय प्रहिणोति ताभिरेनं पराभावयति। ३।

अनेन पारक्षुद्रेण यजुषा द्वेष्यं प्रति प्रहिणोति तं घोरतनुविशिष्टमग्निं मन्त्रलिङ्गात्। ताभिरिति घोरतनूनां परामर्शः मन्त्रार्थत्वेनासां बुद्धिस्थत्वात्। पराभावनमुत्सादनम्॥

अरण्येऽनुवाक्या भवन्ति। ४।

अरण्येऽनुवाक्याश्च घोरास्तन्वो ऽत्र प्रयोक्तव्या भवन्तीत्यर्थः। ताश्च यास्ते अग्ने स्त्रिक् चेत्यनुवाकौ ॥

यदिदं दिवो यददः पृथिव्याः संविदाने रोदसी संबभूवतुः। तयोः पृष्ठे सीदतु जातवेदाः शंभूः प्रजाभ्यस्तनुवे स्योन इत्यभिमन्त्र्य पुरस्तात्प्रत्यङ् तिष्ठन्नाहवनीयमादधाति। ५।

तिष्ठन्नेवादधाति। प्रङ्क्तिष्ठन्निति तु भारद्वाजः ॥

बृहति गीयमाने श्यैतवारवन्तीययोर्यज्ञायज्ञीये च यथर्ष्याधानेन सर्वाभिर्व्याहृतीभिः सर्वाभिः सर्पराज्ञीभिस्तृतीयेन च घर्मशिरसा यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः। ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने॥ अपानं त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै। दिवस्त्वा वीर्येण पृथिव्यै महिम्नान्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे॥ अग्ने सम्राडजैकपादाहवनीय दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय। पृथिव्यास्त्वा मूर्धन्सादयामि यज्ञिये लोके। यो नो अग्ने निष्ट्यो यो ऽनिष्ट्यो ऽभिदासतीदमहं तं त्वयाभिनिदधामीति संभारेषु निदधाति। ६।

इति पञ्चदशी कण्डिका।

आन्याधेय



आनशे व्यानशे सर्वमायुर्व्यानशे। अहं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव योनिरस्मि। ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेद इत्याधीयमानमभिमन्त्रयते यजमानः । १ ।

गतौ ॥

व्याहृतीः सर्पराज्ञीर्घर्मशिरांसीति सर्वेष्वाधानेषु यजमानो ऽनुवर्तयते येनयेनादधाति । २ ।

एतस्मिंस्त्रये येनयेन मन्त्रेणाध्वर्युराग्नीध्रो वाग्निमादधाति तंतं मन्त्रं तेनतेन सह पठति यजमानः ॥

नाहितमनभिहुतमग्निमुपस्पृशति । आज्येनौषधीभिश्च शमयितव्यः । ३ ।

तीक्ष्ण इवायमेतर्ह्यग्निर्नाशमितः स्प्रष्टव्यः । अतः शमयितव्यो ऽसावाज्यौषधीभिः । ततश्च

या ते अग्ने पशुषु पवमाना प्रिया तनूर्या पृथिव्यां याग्नौ या रथन्तरे या गायत्रे छन्दसि तां त एतेनावयजे स्वाहा। या ते अग्ने ऽप्सु पावका प्रिया तनूर्यान्तरिक्षे या वायौ या वामदेव्ये या त्रैष्टुभे छन्दसि तां त एतेनावयजे स्वाहा। या ते अग्ने सूर्ये शुचिः प्रिया

35

मनूर्या दिवि यादित्ये या बृहति या जागते छन्दसि तां त एतेनावयजे स्वाहेत्येतैः प्रतिमन्त्रमाज्यमोषधीश्च जुहोति। ४।

समानो ऽयं विधिः सर्वाग्नीनां नाहितमनभिहुतमग्निमुपस्पृशतीति सामान्यनिर्देशात् पूर्वोत्तरयोरपि विध्योः सामान्याधिकारत्वात् व्याहृतीभिरग्नीञ्छमयित्वेति बौधायनीये व्यक्तत्वाच्च। विकल्पं चाह भारद्वाजः आधानादनन्तरं सर्वैर्मन्त्रैरेकैकं शमयेदाहवनीयं वेति॥

समिध आदधातीत्येके। ५।

गतः॥

ब्रह्माग्न्याधेये सामानि गायति। ६।

छन्दोगानां तु ब्रह्मोद्गात्रोर्विकल्पः॥

प्रतिषिद्धान्येकेषाम्। ७।

गतः॥

व्याहृतीभिरेवोद्गीथं भवतीति वाजसनेयकम्। ८।

उद्गीथमुद्गानम्॥

इति षोडशी कण्डिका।

इति चतुर्थः पटलः॥

ततः सभ्यावसथ्यावादधाति लौकिकमग्निमाहृत्य मथित्वाहवनीयाद्वा यथर्ष्याधानेन। १।

यथर्ष्याधानमेवानयोराधानमन्त्रः। नित्यमाधानं सभ्यावसथ्ययोः सूत्रकारमतात्। वैकल्पिकं चाहुः सूत्रान्तरकाराः। सत्याषाढस्तावत्प्रतिषिद्धौ सभ्यावसथ्यावेकेषामिति। बौधायनश्चाह सभ्यावसथ्ययोः करण इति कुर्यादिति बौधायनो न कुर्यादिति शालीकिरिति। तथा च भारद्वाजेनाप्युक्तं त्रयो वा अग्नयो न पञ्चेति विज्ञायते सो ऽयं कर्मप्रतिषेध इत्याश्मरथ्यो ऽन्योरप्रतिषेध इत्यालेखन इति॥ श्रुत्यापि तयोराधानविकल्पो ऽवसीयते उभयथापि लिङ्गोपलम्भात्। आधाने तावत् तस्मादेतावन्तो ऽग्नय आधीयन्ते पाङ्क्तं वा इदं सर्वमिति। विपर्यये च यत्त्रेधाग्निराधीयत इति॥ तथा त्रयाणामाधानमुक्त्वा अनन्तरमिष्टिविधानं चाग्निचित्वे लिङ्गम्। आचार्येणापि क्वचिदग्नित्रयाणामनुक्रमणमितरयोरनित्यत्वाभिप्रायमित्येके यथा मध्ये गार्हपत्यं या प्रकृतिर्दक्षिणाग्नेः समोप्येतरावित्यादौ। तस्माद्विकल्पो युक्तः। बौधायनस्त्वत्रानुग्रहमुक्तवान् आहवनीये वा सभ्यावसथ्ययोः संकल्प इति। भारद्वाजश्चाह अथ सभ्यावसथ्यौ न प्रकुर्याद्यो नित्यस्तस्मिन्मन्त्रप्रयोग इति॥

अग्न आयूंषि पवसे ऽग्ने पवस्व स्वपाः। अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः। तमीमहे महागयमिति तिस्र आश्वत्थ्यः समिध एकैकस्मिन्नादधाति। २।

तिस्रस्तिस्र आश्वत्थीरेकैकशस्तिसृभिः प्रत्यृचमेकैकस्मिन्नादधातीत्यर्थः ॥

आहवनीये वा तिस्रः । ३ ।

गतः ॥

समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट्। घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ वयं नाम प्रब्रवामा घृतेनास्मिन्यज्ञे धारयामा नमोभिः। उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् ॥ चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेशेति शमीमय्यो घृतान्वक्तास्तिसृभिस्तिस्र एकैकस्मिन्नादधाति। आहवनीये वा तिस्रः । ४ ।

अन्वक्ता आनुपूर्व्येण सर्वाक्ताः ॥

एवं नानावृक्षीयाः। प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीं समिधमादधाति। विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीम्। तां सवितुर्वरेण्यस्य चित्रामिति शमीमयीम् । ५ ।

एवमिति पूर्ववत्। घृतान्वक्तास्तिस्रस्तिस्र एकैकस्मिन्नित्यर्थः ॥

ततस्तूष्णीमग्निहोत्रं जुहोति । ६ ।

आज्यामोद्य



पूर्वाहुतिरेव तूष्णीं सर्वमन्यत्समन्त्रकं सर्वं तूष्णीं क्रियेतेति क्वचिद्य-त्नदर्शनात् प्रातर्होमधर्मकं च कालसामान्यात् अयथापूर्वमाहुती जुहुयादिति लिङ्गाच्च। प्रातरग्निहोत्रस्यावृतेत्येव सत्याषाढभारद्वाजौ। बौधायनमतात्तु सर्वं तूष्णीमुभयधर्मकं च यथा सर्वं तूष्णीमनुक्रा-मन्नुच्च मार्ष्येव च मार्ष्टीति तथा उभे एवैते सायंप्रातरग्निहोत्रे प्रतिजुह्वन्मन्यत इति च॥ पयसात्र होमः। काम्यत्वाद्द्रव्यान्तराणा-माज्येन वेति तु बौधायनः॥

अपि वा द्वादशगृहीतेन स्रुचं पूरयित्वा प्रजापतिं मनसा ध्यायञ्जुहोति। साग्निहोत्रस्य स्थाने भवति।७।

सा आहुतिः साङ्गस्याग्निहोत्रकर्मणः स्थाने भवति॥

यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति यजमा-नो द्वेष्याय प्रहिणोति ताभिरेनं नितमयति। अरण्ये-ऽनुवाक्या भवन्ति।८।

नितमयति ग्लपयति। शेषं पूर्ववत्॥

इति सप्तदशी कण्डिका।

द्वादशगृहीतेन स्रुचं पूरयित्वा सप्त ते अग्ने समिधः सप्त जिह्वा इति सप्तवत्या पूर्णाहुतिं

जुहोति। हुतायां यजमानो वरं दत्त्वा शिवा जपति। ये अग्नयो दिवो ये पृथिव्याः समागच्छन्तीषमूर्जं दुहानाः। ते अस्मा अग्नयो द्रविणं दत्त्वेष्टाः प्रीता आहुतिभाजो भूत्वा यथालोकं पुनरस्तं परेत स्वाहेति जुहोति। १।

गताः ॥

अथ विराट्क्रमैर्यजमान उपतिष्ठतेऽयर्व पितुं मे गोपायान्नं प्राणेन संमितम्। त्वया गुप्ता इषमूर्जं मदन्तो रायस्पोषेण समिषा मदेमेत्यन्वाहार्यपचनम्॥ नर्य प्रजां मे गोपाय मूलं लोकस्य संततिम्। आत्मनो हृदयान्निर्मितां तां ते परिददाम्यहमिति गार्हपत्यम्॥ शंस्य पशून्मे गोपाय विश्वरूपं धनं वसु। गृहाणां पुष्टिमानन्दं तांस्ते परिददाम्यहमित्याहवनीयम्॥ सप्रथ सभां मे गोपायेन्द्रियं भूतिवर्धनम्। विश्वजनस्य छायां तां ते परिददाम्यहमिति सभ्यम् ॥ अहे बुध्निय मन्त्रं मे गोपाय श्रियं च यशसा सह। अहये बुध्नियाय मन्त्रं श्रियं यशः परिददाम्यहमित्यावसथ्यम्॥ पञ्चधाग्नीन्व्यक्रामद्विराट् सृष्टा

आनन्दाश्रम



प्रजापतेः। ऊर्ध्वारोहद्रोहिणी योनिरग्नेः प्रतिष्ठिति-रिति सर्वान्। २।

पञ्चधेत्येवान्तो मन्त्रस्त्रित्वे ऽप्यग्नीनां विराडभिधानात्॥

इत्यष्टादशी कण्डिका।

इति पञ्चमः पटलः॥

---

आग्नेयस्याष्टाकपालस्य तन्त्रं प्रक्रमयति। १।

तेष्वेवाग्निषु तन्त्रं प्रक्रमयति तच्च पौर्णमासं तन्त्रं तत्रैव प्रयोगतो मुख्यत्वात्। तथा तमेव हेतुमुक्त्वाह भारद्वाजः तस्मान्निरूढमप्याग्नेयं पौर्णमासविकारं स्यादिति। तन्त्रं प्रक्रमयतीति च व्याख्यातं प्राक्॥

निरुप्तं हविरुपसन्नमप्रोक्षितं भवति। अथ सभाया मध्ये ऽधिदेवनमुद्धत्यावोक्ष्याक्षान्युप्याक्षेषु हिरण्यं नि-धाय समूह्य व्यूह्य प्रथयित्वा निषसाद धृतव्रत इति मध्ये ऽधिदेवने राजन्यस्य जुहोति। २।

उपसादनवचनेनैव सिद्धे निरुप्तवचनमप्रोक्षितवचनं च उपसादनस्य निर्वापाङ्गत्वख्यापनार्थं प्रोक्षणस्यानङ्गत्वख्यापनार्थं च। तेन साकं सूर्येणोद्यता निर्वपतीत्यादावुपसादनान्तं क्रियते। वैचित्र्यार्थं वा॥ यत्र दीव्यन्ति तदधिदेवनम्। अक्षाः विभीतकाः। समूह्य संहृत्य। व्यूह्य वियुत्य। प्रथयित्वा प्रसार्य। राजन्यग्रहणम् वर्णान्तरस्यायं होमः॥

आवसथे परिषदो मध्ये हिरण्यं निधाय मन्त्रवत्या हिरण्ये जुहोति प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम्। यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिर इति। ३।

परिषदो मध्ये आधानप्रेक्षिणो जनस्य मध्ये ॥

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः। विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु न इत्युक्त्वा शतमक्षान्यजमानाय प्रयच्छन्नाह व्रीहिभ्यो गां दीव्यताहिंसन्तः परूंषि विशसतेति। ४।

अक्षान्प्रयच्छन्संप्रेष्यति कितवान् व्रीहिभ्यो हेतुभ्यः व्रीहीन्क्रेतुं मूल्यत्वेन गां दीव्यत तां पणं कृत्वा दीव्यत। तस्याः पर्वाण्यहिंसन्तस्तां विशसत। विशसनशब्देन तत्कार्यं विभागो लक्ष्यते। जीवन्त्या एव गोरङ्गानि तवेदं ममेदमिति विभजतेत्यर्थः ॥

संप्रैषवत्कुर्वन्ति। ५।

गतः ॥

इत्येकोनविंशी कण्डिका।

---

कृतं यजमानो विजिनाति। १।

कृतत्रेताद्वापरकलिनामानो द्यूतप्रकारा ये कृतमयानामिति श्रुतावया इत्याख्यायन्ते। न्युप्तेष्वक्षेषु चतुष्कशो विभज्यमानेषु यत्र सर्वे भागाः

समा भवन्ति तत्कृतं नाम अथ यत्रान्ततस्त्रयो ऽवशिष्यन्ते सा त्रेता यत्र द्वौ स द्वापरः यत्रैकः स कलिः। तथा च श्रुतिः ये वै चत्वार स्तोमाः कृतं तत् अथ ये पञ्च कलिः स इति॥ तत्राक्षाणां शतत्वात् कृतेन प्रकारेण यजमानो विजिनाति विजयते॥

**तया यज्जयन्ति तदन्नं संस्कृत्य सभासद्भ्य उपहरन्ति। २।**

तया गवा क्रीतान्यावतो व्रीहींल्लभन्ते ते कितवाः तैः सर्वैरन्नसंस्कारैरन्नं संस्कृत्य सभासद्भ्यः कृते आवसथे उपहरन्ति यदावसथे ऽन्नं हरन्तीति लिङ्गात् तत्र भोजनविधानाच्च॥

**आवसथे भुञ्जते। ३।**

सभ्या इति शेषः। अधिदेवनोद्धननादि भोजनान्तं कर्म सभ्यावसथ्ययोरभावे नेष्यते तत्सभायां विजयन्ते यदावसथे हरन्तीति लिङ्गात्। केचित्पुनरत्रापि राजन्यस्येत्यनुवर्तयन्ति अधिदेवनसंस्कारस्य राजन्यसंयोगात् तस्य च देवनार्थत्वात् राजसूयाश्वमेधादिषु देवनस्यापि राजन्ययजमानसंयोगित्वाच्च॥

**कृत्तिसामनसीभ्यामग्नीन्यजमान उपतिष्ठते कल्पेतां द्यावापृथिवी ये ऽग्नयः समनस इति। ४।**

तत्र यथर्तूपतिष्ठत इति सत्याषाढः। तद्यथा सामनस्यां वासन्तिकावृतू ग्रैष्मावृतू इत्यादि॥

**प्रोक्षादि कर्म प्रतिपद्यते। ५।**

प्रोक्षणाङ्गत्वात्प्रोक्षणीसंस्कारो ऽप्यत्रैव क्रियते ॥

आग्नेयस्य दक्षिणाकाले दक्षिणा ददाति । ६ ।

आग्नेयस्य दक्षिणाकाले ऽग्न्याधेयस्य दक्षिणां ददाति । अतो नैष्टिकान्वाहार्यधर्मा भवन्ति न चाग्नेयस्यान्वाहार्यस्तासामेव प्रसङ्गात् । बौधायनीयमतात्तु नित्यो ऽन्वाहार्यः सर्वेष्टीनाम् ॥

अजं पूर्णपात्रमुपबर्हणं सार्वसूत्रमित्यग्नीधे । ७ ।

पूर्णपात्रो नाम पुष्कलचतुष्टयसंमितो व्रीह्यादिः पुष्कलमिति च द्वात्रिंशन्मुष्टिसंमितं द्रव्यमित्याचक्षते । उपबर्हणमुपधानं तच्च सार्वसूत्रं सर्ववर्णैः सूत्रैः कृतं भवति ॥

वहिनमश्वं ब्रह्मणे ऽध्वर्यवे वा । ८ ।

वहनसमर्थो वही । तस्य च विभवे सत्यदातुर्दोषः स्मर्यते यथा मनुः प्राजापत्यमदत्त्वाश्वमग्न्याधेयस्य दक्षिणाम् । अनाहिताग्निर्भवति ब्राह्मणो विभवे सतीति ॥

आहवनीयदेशे ऽनड्वाहमध्वर्यवे । ९ ।

तत्र स्थितायेत्यर्थः ॥

अपरेण गार्हपत्यं धेनुं होत्रे । १० ।

धेनुर्दानाय चोद्यमाना वत्समप्याकर्षते तेन विना धेनूपकारासिद्धेः । भवति चात्र लिङ्गं यथा धेन्वा सह नव क्रयद्रव्याणि विधाय निगमयति श्रुतिः दश संपद्यन्त इति ॥

वासो मिथुनौ गावौ नवं च रथं ददाति। तानि साधारणानि सर्वेषाम् । ११ ।

गतः ॥

आ द्वादशभ्यो ददातीत्युक्त्वाह काममूर्ध्वं देयमपरिमितस्यावरुद्ध्या इति विज्ञायते । १२ ।

एता दक्षिणा दत्त्वा भूयस्तावतीर्गा ददाति यावतीभिः पूर्वा द्वादश पूर्यन्त इत्युक्त्वा पुनराह ब्राह्मणं काममूर्ध्वं देयमिति। एतदुक्तं भवति द्वादश तावदेता नियताः तत ऊर्ध्वमपि शक्तिश्रद्धयोः सत्योर्यथाकामं ददातीति ॥ आहेति विज्ञायत इति चोभयवचनमादरार्थं भवति । हेति वा पदच्छेदः ॥

ऊर्ध्वमादिष्टदक्षिणाभ्यो वदति षड् देया द्वादश देयाश्चतुर्विंशतिर्देया इति । १३ ।

एताश्च दक्षिणा देया इति वदति ब्राह्मणम्। ताश्च द्वादशभ्य आदिष्टदक्षिणाभ्यो ऽधिका नित्याः न च ताभिर्व्यतिकीर्यन्ते न च ताभिर्विकल्पन्त इत्यर्थः। केचित्तु सूत्रकृतो विपरीतं मन्यन्त इति तन्निरासार्था श्रुतिव्याख्या । काममूर्ध्वं देयमित्यनियमे प्राप्ते षडादिसंख्यानियमः ख्याप्यत इत्येके ॥

ता विकल्पन्ते । १४ ।

तास्त्वेताः संख्या मिथो विकल्पन्ते समुच्चये षडादिसंख्याविलयप्रसङ्गात् द्वाचत्वारिंशद्देया इति वक्तव्यत्वाच्च ॥

येषां पशूनां पुष्टिं भूयसीं कामयेत तेषां वयसाम् । १५ ।

एकहायनप्रभृत्या पञ्चहायनेभ्यो वयांसीति वक्ष्यति। यद्वयोऽवस्थानां पशूनां वृद्धिमिच्छेत्तद्वयस्केषु वयःसु षडाद्या गावो देया इत्यर्थः॥

दित्यौहीं दद्याद्दित्यवाहं च मुष्करम् । १६ ।

दित्यौही द्विवर्षा। तथा दित्यवाट्। मुष्करः साण्डः। तौ च देयेषु वयःस्वन्तर्भाव्यावित्यर्थः। अधिकावेतौ नित्यौ च षडादिकल्पेष्वित्येके॥

वर्धमानां दक्षिणां ददाति । १७ ।

सर्वापि दक्षिणा वर्धमानैव दातव्या न क्षीयमाणा॥

यद्यनाड्यो ऽग्नीनादधीत काममेवैकां गां दद्यात्सा गवां प्रत्याम्नायो भवतीति विज्ञायते । १८ ।

गवां प्रत्याम्नाय इति वचनात् गोरन्यत्सर्वं दातव्यम्। अङ्गदक्षिणाश्च न निवर्तन्ते असमानकालत्वादसमानार्थत्वाच्च। बौधायनेन तत्रानुग्रह उक्तः प्रसिद्धा अग्न्याधेयदक्षिणा ददाति ताश्चेन्नाधिगच्छेत् वासांस्येतावन्ति मन्थान्वौदनान्वैतावतो दद्यादिति॥

सिद्धमिष्टिः संतिष्ठते । १९ ।

यथा प्रकृतौ सिद्धं तथा समाप्यत इत्यर्थः॥

इति विंशी कण्डिका।

पवमानहवींषि सद्यो निर्वपेत्। १।

पवमानहवींषि नाम त्रीण्यनन्तरं वक्ष्यमाणानि तानि सद्यः समाने ऽहनि यस्मिन्नाधानं तस्मिन्नेव निर्वपेत्॥

द्वादशाहे द्व्यहे त्र्यहे चतुरहे ऽर्धमासे मास्यृतौ संवत्सरे वा। २।

सर्वत्रातीत इति शेषः। द्वादशसु व्युष्टास्वित्येव बौधायनः॥

न सोमेनायक्ष्यमाणः पुरा संवत्सरान्निर्वपेत्। ३।

संवत्सरकल्प एवासोमपूर्व आधान इत्यर्थः॥

निर्वपेदित्येके। ४।

गतः॥

यदि निर्वपेदग्नये पवमानायाग्नये पावकायाग्नये शुचय इति तिस्र आज्याहुतीः सोमदेवताभ्यो वा हुत्वा निर्वपेत्। ५।

यदापि सोमदेवताभ्यस्तदापि तिस्र एवाज्याहुतयस्तिसृभ्यः सवनदेवताभ्यो होतव्याः तासामेवावाहनात्॥

समानतन्त्राणि नानातन्त्राणि वाग्नेयेन वा समानतन्त्राणि। ६।

गताः॥

यं कामयेत पापीयान्स्यादिति तस्यैकमेकमेतानि हवींषि निर्वपेत्। न वसीयान्न पापीयानिति तस्य साकं सर्वाणि। यं कामयेतोत्तरं वसीयाञ्छ्रेयान्स्यादिति तस्याग्नये पवमानाय निरुप्य पावकशुचिभ्यां समानबर्हिषी निर्वपेत्। ७।

अत्र पूर्वयोः कल्पयोर्निन्दोत्तरविधिप्रशंसार्थौ न तु पूर्वनिवृत्त्यर्था। तयोरप्यनन्तरमेव विहितत्वादतस्त्रयोऽमी कल्पा विकल्पन्ते। समानबर्हिषी समानतन्त्रे इत्यर्थः॥

शतमानं हिरण्यं दक्षिणा। ८।

शतं मानानि यस्य तच्छतमानम्॥

पूर्वयोर्हविषोर्द्वे त्रिंशन्माने उत्तरस्मिंश्चत्वारिंशन्मानम्। ९।

यदा नानातन्त्राणि तदैवं विभज्य ददाति। यदाप्याग्नेयेन समानतन्त्राणि तदापि समुच्चयः शतमानस्य। तत्र च लिङ्गं वासः श्यामाके मुष्करो दक्षिणेत्यादि॥

येन हिरण्यं मिमते तेन मीत्वा ददाति। १०।

येन धनमानादिना हिरण्यं मिमते वणिजः परिच्छिन्दन्ति तेन मीत्वा ददाति। एतेन मानपरिमाणमपि वणिक्प्रसिद्ध्यनुसारीति दर्शितं भवति॥

सिद्धमिष्टिः संतिष्ठते । ११ ।

गतः ॥

इत्येकविंशी कण्डिका ।

इति षष्ठः पटलः ॥

---

ऐन्द्राग्नमेकादशकपालमनुनिर्वपत्यादित्यं च घृते चरुम् । १ ।

संस्थाप्य पवमानहवींषि तस्मिन्नेवाहनि तस्मिन्नेवाग्नावनुनिर्वपेत् । आदित्यमित्यदितेस्तद्धितो नादित्यात् इयं वा अदितिरिति वाक्यशेषात् ॥

सप्तदश सामिधेन्यः । २ ।

गतः । आमावास्यं तन्त्रं अस्याः ऐन्द्राग्नस्य मुख्यत्वात् चरुषु विशेषास्तु दर्शपूर्णमासयोरेव दर्शिताः ॥

चतुर्धाकरणकाल आदित्यं ब्रह्मणे परिहरति । ३ ।

चतुर्धाकरणकाले प्राप्ते आदित्यमविभक्तं ब्रह्मणे प्रयच्छति ॥

तं चत्वार आर्षेयाः प्राश्नन्ति । ४ ।

तं ततो विभज्य भक्षयन्ति चत्वार इति वचनात् । ब्रह्माप्यत्रैव भक्षयति न तु संस्थिते ॥

**प्राशितवद्भ्यः समानं वरं ददाति । धेन्वनडुहौ दान-मेके समामनन्ति । सिद्धमिष्टिः संतिष्ठते । ५ ।**

गताः ॥

**आग्नावैष्णवमेकादशकपालमनुनिर्वपत्यग्नीषोमीय-मेकादशकपालं विष्णवे शिपिविष्टाय त्र्युद्धौ घृते चरुम् । ६ ।**

त्रीणि पर्वाणि यस्याः स्थाल्याः सा त्र्युद्धिः । सत्याषाढस्त्वेतामिष्टिं पूर्वेष्ट्या सहैकतन्त्रामुक्तवान् । क्रमस्तु हविषामन्यो ऽभिहितः यथाग्नी-षोमीयमेकादशकपालमनुनिर्वपेदाग्नावैष्णवमेकादशकपालमैन्द्राग्नमेका-दशकपालमदित्यै घृते चरुं विष्णवे शिपिविष्टाय त्र्युद्धौ घृते चरुं सप्तदश सामिधेन्य इति ॥

**सिद्धमिष्टिः संतिष्ठते । ७ ।**

गतः ॥

**आदित्यं घृते चरुं सप्तदशसामिधेनीकं धेनुदक्षिणं सर्वेषामनुनिर्वाप्याणां स्थाने वाजसनेयिनः समाम-नन्ति । ८ ।**

पवमानहविर्भिः अस्याः कालो व्याख्यातः तत्स्थानापत्तेः । पूर्वादित्य-धर्मास्तु न भवन्ति सप्तदशसामिधेनीकत्वस्य पुनर्विधानात् ॥

**सिद्धमिष्टिः संतिष्ठते । ९ ।**

आग्न्याधेय



गत: ॥ एवमग्न्याधेयं व्याख्यायानन्तरं कालप्राप्तस्यारम्भप्रकारमाह ॥

अग्निहोत्रमारप्स्यमानो दशहोतारं मनसानुद्रुत्याहवनीये सग्रहं हुत्वाथ सायमग्निहोत्रं जुहोति। १०।

पवमानहविषामुत्कर्षे ऽग्निहोत्रादेरप्युत्कर्ष: अग्न्याधेयस्यापरिसमाप्तत्वात् सर्वेष्यन्ते विधानाच्च। अतो यस्मिन्नहनि सेष्टिकमग्न्याधेयं संतिष्ठते तस्मिन्नहन्यग्निहोत्रकाल: तस्मिन्नेवास्वपदिके ऽग्नावध्वर्युणा दशहोतरि कृते सायमग्निहोत्रं जुहोति यजमान:। यथा चैतदेवं तथोपरिष्टाद्व्यक्तं भविष्यति। सग्रहमिति च आहवनीय इति च विस्पष्टार्थं ब्राह्मणानुकरणार्थं वा ॥

व्याहृतीभिरुपसादयेत्। ११।

तस्मिन्सायमग्निहोत्रे व्याहृतीभिर्हविरुपसादयेत्। नित्यस्तूपसादनमन्त्रो निवर्तते ॥

संवत्सरे पर्यागत एताभिरेवोपसादयेत्। १२।

तत आरभ्य संवत्सरे ऽतीते यदनन्तरं सायमग्निहोत्रहोम: तत्राप्येवमुपसादयेत्॥ अथाग्नीनाहितवतो ऽग्न्याधेयानन्तरभावि द्वादशाहसाध्यं व्रतमाह ॥

द्वादशाहमजस्रेष्वग्निषु यजमान: स्वयमग्निहोत्रं जुहुयादप्रवसन्नहतं वासो बिभर्ति। १३।

इति द्वात्रिंशी कण्डिका।

यां प्रथमामग्निहोत्राय दोग्धि तां दक्षिणां ददाति। १।

अजस्रेषु धार्यमाणेष्वग्निषु यजमानः स्वयं जुहोति नान्यः। कल्पान्तरेषु तूक्तं अन्यो वा जुहुयात्स्वयं त्रयोदशीं जुहुयादिति। तथाज्येनेति क्वचित् क्षीरेणेति क्वचित्। अप्रवसन् ग्रामान्तरे रात्रिमवसन्। अहतं अकारुहतं अनुपयुक्तं वा। दक्षिणां ददाति व्रतान्ते व्रतदक्षिणां ददाति यस्मा इच्छति॥ व्रतस्य तु द्वादशाहाशक्तावनुकल्प उक्तः कात्यायनेन यथा क्षीरहोम्यग्निमुपशयीत द्वादशरात्रं षड्रात्रं त्रिरात्रमन्तत इति। तत्र चाजस्रेषु जुहुयादिति होमानुवादेनाजस्रविधिः होमस्यान्यतः सिद्धत्वात्। तथाधानाद्द्वादशरात्रमजस्रा इत्येवाश्वलायनः। तेन सोमपूर्वाधाने ऽप्याधानादारभ्य सह सोमदिवसैर्द्वादशाहेनाजस्रापवर्गः। होमस्तु सोमात्परेषु यावत्संभवं क्रियत इति सिद्धं भवति। भारद्वाजस्त्वाह सोमाधानेनाजस्रान्कुर्यादिति॥ अथ दर्शपूर्णमासारम्भं विधास्यंस्तत्रैवावसरे शाखान्तरीयौ कौचित्कर्मणामारम्भप्रकारविकल्पौ दर्शयति॥

अथैकेषाम्। अग्नीनाधाय हस्ताववनिज्य संवत्सरमग्निहोत्रं हुत्वाथ दर्शपूर्णमासावारभते ताभ्यां संवत्सरमिष्ट्वा सोमेन पशुना वा यजते तत ऊर्ध्वमन्यानि कर्माणि कुरुते। २।

आधानानन्तरं तूष्णीं हस्ताववनेनेक्ति तावद्यजमानः। ततो यथोक्तेन विधिनाग्निहोत्रमारभ्य संवत्सरमग्निहोत्रमेव जुहोति न दर्शपूर्णमासा-

वारभते। ततः पूर्णे संवत्सरे तावारभ्य ताभ्यामेव संवत्सरं यजते नान्येष्टिपश्वादिना। अग्निहोत्रं तु क्रियत एव प्रथमत एव प्रारब्धस्याविच्छेद्यत्वात्। आग्रयणमप्यविरुद्धैरनुकल्पैरुभयस्मिन्संवत्सरे क्रियते। ततस्तृतीये संवत्सरे ऽग्निष्टोमेन निरूढपशुबन्धेन वा यजेत। ततः परस्ताद्यथोपपादमन्यानि नित्यनैमित्तिककाम्यानि कर्माणि कुरुत इत्ययमेकशाखानुगतः पक्षः। अथापरं दर्शयति॥

**त्रयोदशरात्रमहतवासा यजमानः स्वयमग्निहोत्रं जुहुयादप्रवसन्नत्रैव सोमेन पशुना वेष्ट्वाग्नीनुत्सृजति यथा सुयवसान्कृत्वा प्राज्यात्ताद्दक्तदिति शाट्यायनिब्राह्मणं भवति। ३।**

आधायाग्नीनग्निहोत्रमारभ्य द्वादशाहव्रतविधिना त्रयोदशरात्रमग्निहोत्रं कृत्वानन्तरमत्रैवाग्न्याधेयिकेष्वग्निष्वेवाग्निष्टोमेन निरूढपशुबन्धेन वेष्ट्वा तदन्ते ज्वलतस्तानुत्सृजति नाजस्रान्धारयतीत्यर्थः॥ द्वादशरात्रमजस्रेष्वाज्येन स्वयमग्निहोत्रं जुहोति अहतं वासो वस्ते काममन्यो जुहुयाद्व्रतचारी त्वेव स्यात्स्वयं त्रयोदशी जुहोति यां प्रथमामग्निहोत्राय दुहन्ति साग्निहोत्रस्य दक्षिणेति हिरण्यकेशिसूत्रे॥ यथा हि शाकटिको ऽनडुहः सुयवसान् सुभक्षितघासान् कृत्वा प्राज्या वहनाय प्रेरयेत् तथायं यजमानो ऽप्यग्नीन्प्रथममेव सोमेन पशुना वा सुवसान्कृत्वा हविर्वहनाय प्रेरयति। तस्मात्प्रथममेवं कृत्वा ततो यथाकालमिष्टिपशुसोमैर्यजेतेत्यर्थः। एवं प्रासङ्गिकौ कर्मणामारम्भविकल्पावुक्त्वा प्रकृतमेवारम्भप्रकारमनुसरति॥

**पूर्णा पश्चाद्यत्ते देवा अदधुरिति सारस्वतौ होमौ हुत्वान्वारम्भणीयामिष्टिं निर्वपति। ४।**

अन्वारभ्यते ऽनयेत्यन्वारम्भणीया सा च दर्शपूर्णमासारम्भशेषः। तथा सारस्वतौ होमौ दर्शपूर्णमासावारभमाण इति प्रकृत्य त्र्यणामाम्नानात्। दर्शपूर्णमासयोश्च पूर्णमासः पूर्व इति स्थास्यति। तेन संस्थिते सेष्टिके ऽग्न्याधेये यानन्तरा पौर्णमासी तस्यां सारस्वतौ हुत्वान्वारम्भणीयां निर्वपेत्। पूर्वस्य पर्वण औपवसथ्ये ऽहनीति सत्याषाढः प्रातरन्वाधानं पौर्णमासस्य मा बाधीदिति तस्याभिप्रायः। बौधायनस्तु सारस्वतादि पौर्णमासान्तं सर्वमपि यजनीये ऽहनि विकल्पितवान् यथा सर्वमेवैतदिष्ट्यहनि कुर्यादित्यौपमन्यवी पुत्र इति॥ अत्र सारस्वतयुगलस्यान्वारम्भणीयायास्तोभयोरपि दर्शपूर्णमासारम्भेण निमित्तेन प्रवर्तमानयोः स्वतन्त्रत्वात्पृथगग्नेः प्रणयनमिष्यते न चाद्य पौर्णमासेन समानाग्नी भवतः सर्वप्रयोगाङ्गत्वात्। तत्र च लिङ्गं पञ्चहोतृवैश्वानरपार्जन्याभ्यां पृथग्वैश्वदेवप्रणयनानुवादः यथा पशुबन्धवद्गार्हपत्यादग्निं प्रणयन्निति। किं च यान्यत्र क्रतुशरीरान्तर्गतान्यङ्गानि तेषामेवाङ्गिनां समानाग्नित्वमिष्टं न तु बहिस्तन्त्रवर्तिनामपि यथा पञ्च पशवः सौत्रामण्युदवसानीया संभारयजूंषि सावित्राणीत्यादीनाम्। अत एव पशावाग्नावैष्णवान्ते ऽग्नेस्त्यागं सिद्धं कृत्वा वक्ष्यति धारयत्याहवनीयमिति। तस्मात्सिद्धं पृथगग्नीन्येव सारस्वतादीनीति॥

**आग्नावैष्णवमेकादशकपालं सरस्वत्यै चरुं सरस्वते द्वादशकपालम्। ५।**

आन्याधेय



उक्तः ॥

अग्नये भगिने ऽष्टाकपालं यः कामयेत भग्यन्नादः स्यामिति । ६ ।

भग्यन्नाद इति व्याख्यातः प्राक् ॥

नित्यवदेके समामनन्ति । ७ ।

गतः ॥

नानातन्त्रमेके । ८ ।

नित्यस्य काम्यस्य च नानातन्त्रत्वविकल्पः ॥

त्वद्विश्वा सुभग सौभगान्यग्ने वि यन्ति वनिनो न वयाः । श्रुष्टी रयिर्वाजो वृत्रतूर्ये दिवो वृष्टिरीड्यो रीतिरपाम् ॥ त्वं भगो न आ हि रत्नमिषे परिज्मेव क्षयसि दस्मवर्चाः । अग्ने मित्रो न बृहत ऋतस्यासि क्षत्ता वामस्य देव भूरेरिति याज्यानुवाक्ये । ९ ।

भगिन इति शेषः ॥

इति त्रयोविंशी कण्डिका ।

---

चित्तं च चित्तिश्चेति पुरस्तात्स्विष्टकृतो जयाञ्जुहोति । १ ।

उपहोमकालादेव सिद्धेः पुरस्तात्स्विष्टकृत इति पुनर्विधानं प्राङ्नारिष्ठेभ्यो मा भूवन्प्राग्वा समिष्टयजुष इति ॥

**चित्ताय स्वाहा चित्त्यै स्वाहेत्येके समामनन्ति । २ ।**

गतः ॥

**प्रजापतिर्जयानिति त्रयोदशीम् । ३ ।**

आहुतिं जुहोतीति शेषः । प्रजापतिर्जयानित्यादेरेकमन्त्रत्वस्य ख्यापनार्थं वचनं चतुर्थ्यन्तप्रयोगे ऽप्यधिकारार्थं च ॥

**अग्ने बलद सह ओजः क्रममाणाय मे दाः । अभिशस्तिकृते ऽनभिशस्तेन्यायास्यै जनतायै श्रैष्ठ्यायेति चतुर्दशीं यः कामयेत चित्रं जनतायां स्यामिति । चित्रं भवति शबलं त्वस्य मुखे जायते । ४ ।**

यः कामयेत जनतायां जनसमाजेषु चित्रं स्यां अहो अयमित्थंभूत इति विस्मयनिमित्तं स्यामिति स एतामाहुतिं जुहोति । स तु काममेव चित्रं भवति दोषस्त्वन्यः शबलं श्वित्रमस्य मुखे जायते । तमिमं दोषमनुजानतो ऽयं विधिरिति भावः ॥

**मिथुनौ गावौ दक्षिणा । ५ ।**

स्त्रीपुंसौ मिथुनौ । भगिनस्तु नानातन्त्रे ऽन्वाहार्यो दक्षिणा तदितराण्येवाधिकृत्य मिथुनाम्नानात् ॥

**सिद्धमिष्टिः संतिष्ठते । ६ ।**

गतः ॥

**दर्शपूर्णमासावारप्स्यमानश्चतुर्होतारं मनसानुद्रुत्याहवनीये सग्रहं हुत्वाथ दर्शपूर्णमासावारभते । ७ ।**

आन्वाधेय



सारस्वतान्वारम्भणीयानामप्यारम्भार्थत्वाविशेषे दर्शपूर्णमासावारप्स्यमान इत्यत्र वचनं चतुर्होतृपौर्णमासयोरर्थकृत्यैरप्यव्यवायार्थमिति द्रष्टव्यम् ॥ दर्शपूर्णमासावारभत इति दर्शशब्दस्याल्पाच्तरत्वात्पूर्वनिपातः। प्रयोगस्तु पूर्णमासस्यैव प्रथमं भवति यत्पौर्णमासीं पूर्वामालभेतेति लिङ्गात् प्रयोगविधिषु तस्यैव प्रथमोद्देशाच्च यथोदित आदित्ये पौर्णमास्या अग्नीषोमाभ्यामिति पौर्णमास्यामित्यादि। तथा अथेमौ दर्शपूर्णमासौ पौर्णमास्युपक्रमामावास्यासंस्थावित्येव बौधायनः ॥ तत्र चतुर्होतुरग्निपृथक्त्वं सारस्वताभ्यां व्याख्यातम्। भारद्वाजस्तु सर्वेषामेव चतुर्होतॄणां ततस्ततः शेषिणोऽग्निपृथक्त्वं प्रतिषेधति। तथा प्राणा वा एते यच्चतुर्होतारो यच्चतुर्होतॄन्हुलाग्निमपनयेद्यजमानस्य प्राणान्विच्छिन्द्यादिति विज्ञायत इति ॥

व्याहृतीभिर्हवींष्यासादयेत्संवत्सरे पर्यागत एताभिरेवासादयेत् । ८ ।

व्याख्यातः। उक्तं प्रागमावास्यायां पौर्णमास्यां वाधेय इति। तयोरुभयकालिकयोराधानयोरुभयथा दर्शपूर्णमासारम्भं नियच्छति ॥

अमावास्यायामादधानस्यैतत्। पौर्णमास्यां तु पूर्वस्मिन्पर्वणि सेष्टि सान्वारम्भणीयमाधानमपवृज्य । ९ ।

इति चतुर्विंशी कण्डिका।

---

श्वोभूते पौर्णमासेन यजते । १ ।

यदेतन्महाप्रकरणेनाधानाच्छिन्नकालं दर्शपूर्णमासारम्भणमुक्तं यथा पवे

पवमान्याद्गीनामिष्टीनामुत्कर्षः संस्थिताखिष्टिष्वागामिपौर्णमास्याम-न्वारम्भणीया ततः पौर्णमासयाग इति तदमावास्यायामादधानस्य । पौर्णमास्यां त्वादधानः सद्य एव सहेष्टिभिरन्वारम्भणीयया चाग्न्याधे-यमपवृज्य तदानीमेवाग्नीनन्वाधाय श्वोभूते पौर्णमासेन यजते ॥ पूर्वं पर्वेति पौर्णमास्यत्रोच्यते न तु चतुर्दशी अन्यथामावास्यायां पौर्णमास्यां वाधेय इत्यनेन श्वोभूते पौर्णमासेन यजत इत्यनेन च विरोधात् । चतुर्दश्येव वा पूर्वं पर्व चातुर्मास्येषु तथादर्शनात् न च पौर्णमास्यामाधेय इत्यनेन विरोधः तस्यैव प्रकारविधित्वात् । पौर्णमा-सेन यजत इत्यस्य च यष्टुं प्रतिपद्यत इत्यर्थः । यथोक्तं हिरण्यकेशिना पौर्णमास्यास्तु पूर्वस्य पर्वण औपवसथ्ये ऽहन्यग्नीनाधाय सेष्ट्यपवृज्य तदानीमेव चतुर्होतारं सारस्वतान्वारम्भणीयां च कुरुते श्वोभूते पौर्णमासीं यजत इति ॥ यत्त्वन्यत्तत्राग्निहोत्रारम्भार्थं दर्शहोत्रादि द्वादशाहव्रतं च तत्सर्वमुभयत्रैव भवत्यविशेषात् । अन्ये तु व्याचक्षते यदेतद्द्वादशाहव्रतं तदमावास्यायामादधानस्य न पौर्णमास्यामिति । तदयुक्तं महाप्रकरणमध्यगतस्यानन्तरस्य च तस्यैकस्यैतच्छब्देन निष्कृष्य परामर्ष्टुमशक्यत्वात् तथेष्ट्यपवर्गविशेषविशिष्टदर्शपूर्णमासारम्भविधायि-न्युत्तरवाक्ये तुशब्देन तत्प्रतियोगिन एव प्रकारस्यानन्तरोक्तस्य व्याव-र्तनीयत्वाच्च । व्यक्तीकृतं चैतद्धिरण्यकेशिना तेन ह्येवमेव पवमानह-विरुत्कर्षादि दर्शपूर्णमासारम्भान्तं कर्म द्वादशाहव्रतवर्जमाध्वर्यवकाण्डे ऽभिधायानन्तरमुक्तं अमावास्यायामादधानस्यैतदिति । द्वादशाहव्रतं तु ततो ऽन्यत्र याजमानकाण्डे सामान्यतश्चोदितं तद्दूरं निवारित एवानयोः संकर इति । किं चात एवाविशेषवचनान्नक्षत्राधानवचनाच्च

सिद्धनक्षत्राधाने ऽप्यभिमतमेवास्यैतद्व्रतमिति । तथाश्वलायनेनाप्य-विशेषेणोक्तं आधानाद्द्वादशरात्रमजस्रा इति। तस्माद्यथोक्त एव युक्तः सूत्रार्थः ॥ सर्वाणि त्वेतान्यारम्भणार्थानि दशहोत्रादीनि द्वितीयाद्याधानादिषु नेष्यन्ते। कस्मात्। यस्माद्यावज्जीविकस्यापि प्रयोगस्यैक एवारम्भः। तत्र च लिङ्गं वैश्वानरपार्जन्या पञ्चहोता च नाभ्यावर्तेतैकोपक्रमत्वादिति। द्वादशाहव्रतमपि यां प्रथमामग्निहो-त्राय दोग्धीति प्रथमाग्निहोत्रसंयोगादारम्भार्थैः सह पठितत्वाच्च प्रथमाधान एवेच्छन्ति ॥

## अनन्तरमाधानादाहिताग्निव्रतानि। २।

अथाहिताग्नेर्यावज्जीविकानि व्रतान्युच्यन्ते। तानि चानन्तरमाधाना-दिति वचनादिष्ट्युत्कर्षे ऽपि नोत्कृष्यन्ते ॥

## नानृतं वदेत्। ३।

स्मृतिप्राप्तस्यानृतवदनस्याहिताग्निव्रतत्वख्यापनार्थः पुनरुपन्यासः। तस्य चातिक्रमे प्रायश्चित्तविशेषः। प्रयोजनं वक्ष्यति अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्नव्रत्यमिव चरेदिति ॥

## नास्य ब्राह्मणो ऽनाश्वान्गृहे वसेत्। ४।

अनाश्वान् अनशितवान्। बुभुक्षितश्चेद्वसेत्तं भोजयेदित्यर्थः ॥

## सूर्योढमतिथिं वसत्यै नापरुन्धीत। ५।

ऊढः अपोढः अस्तमितः सूर्यो यस्य स सूर्योढः। तं निवासायागतं निवासयेत् ॥

## नबीसपक्वस्याश्नीयात्। ६।

यत्तिरोहितस्याग्नेरूष्मणा पक्वं न प्रत्यचाग्निना तदृबीसपक्वं तन्ना-श्नीयात् ॥

**क्लिन्नं दारु नादध्यात्।७।**

उदकक्लिन्नं दार्वग्नौ नादध्यात् ॥

**अन्तर्नाव्यपां नाश्नीयात्।८।**

अन्तर्नावि स्थितः सन्नपो नाश्नीयात्। अन्तर्नावि या आपस्ता इति वा। तथा या अन्तर्नाव्या आप इति कल्पान्तराणि ॥

**स्वकृत इरिणे नावस्येत्।९।**

स्वभावत ऊषरे देशे न निवसेत् ॥

**पुण्यः स्यात्।१०।**

पुण्यकर्मा मङ्गलाचारयुक्तः स्यात् ॥

**हिङ्कृत्य वाग्यतः स्त्रियमुपेयात्।११।**

ऋतुगमने हिङ्कारमुक्त्वा वाचंयमो भवेत् ॥

**व्याहरेद्वा।१२।**

गतः ॥

**न सायमाहुतावहुतायामश्नीयात्।१३।**

सायमित्युभयत्र संबध्यते सायमाहुतावहुतायां न सायमाशं कुर्या-दित्यर्थः ॥

**एवं प्रातः।१४।**

गतः ॥

आहिताग्नेर्गृहे न सायमहुते भोक्तव्यं तथा प्रातरित्यन्येषां व्रतम्। १५।

अन्येषामप्याहिताग्निगृहवासिनां व्रतमेतत्॥

नक्तं नान्यदन्नाद्दद्यात्। १६।

अन्नादन्यत् गोहिरण्यव्रीह्यादि नक्तं न दद्यात्॥

दद्यादित्येके। १७।

गतः॥

अन्नं तु ददन्नदयीत। १८।

ददन्निति दददूपम्। ददन्नप्यन्नमदयीत आदयेत् न तु विधान्तरेण दद्यादित्यर्थः॥

नैतस्मिन्संवत्सरे पशुनानिष्ट्वा मांसं भक्षयेत्। १९।

एतस्मिन्नाधानसंवत्सरे पशुना निरूढेनाङ्गभूतेन वानिष्ट्वा पूर्वमग्निभ्यः स्वयं न मांसं भक्षयेत्॥

मनसाग्निभ्यः प्रहिणोमि भक्षं मम वाचा तं सह भक्षयन्तु। अप्रमाद्यन्नप्रमत्तश्चरामि शिवेन मनसा सह भक्षयतेति यद्यादिष्टो भक्षयेदेतं मन्त्रमुक्त्वा भक्षयेत्। २०।

यदि वृत्तिकर्शितः आर्त्विज्यं कुर्वन् दृढामांसमादिष्टो भक्षयेत्तदा भक्षप्रायश्चित्तार्थमेतं मन्त्रं जपित्वा ततो भक्षणमन्त्रेण भक्षयेदित्यर्थः।

एतेनार्त्विज्यादागतं मांसभक्षणं नातीव दोषवदित्युक्तं भवति ॥

इति पञ्चविंशी कण्डिका ।

इति सप्तमः पटलः ॥

---

पुनराधेयं व्याख्यास्यामः । १ ।

आहिता अग्नयः पुनर्विधानान्तरेणाधीयन्ते यस्मिन्कर्मणि तत्पुनराधेयं नामाग्न्याधेयस्यैव गुणविकारः ॥

तस्याग्न्याधेयवत्कल्पः । २ ।

गतः ॥

अग्नीनाधायैतस्मिन्संवत्सरे यो नर्ध्नुयात्स पुनरादधीत प्रजाकामः पशुकामः पुष्टिकामो ज्यान्यां पुत्रमत्यायां स्वेष्वारुध्यमानेषु यदा वाङ्गेन विधुरतां नीयात् । ३ ।

यो नर्ध्नुयादिति प्रजापश्वादिहान्या वृद्धिनिमित्तमुच्यते नर्द्धिभावमात्रं प्रजां पशून्यजमानस्योपदोद्रावेति लिङ्गात् आधानाद्यामयावी यदि वार्थो व्यथेरन्नित्याश्वलायनवचनाच्च । ज्यानिर्व्याधादिभिर्बाधः । पुत्रमत्या पुत्रमृतिः । स्वेषु ज्ञातिष्वारुध्यमानेषु बलवद्भिः परैर्निगृह्यमाणेषु । यदा वाङ्गेन हस्तपादादिना विधुरतां नीयात् विकलतां गच्छेत् । एतस्मिन्संवत्सरे एतेषु निमित्तेषु कामेषु वा संजातेषु पुनरादधीत ॥ केचित्त्वन्त्यं निमित्तं यदा वेति अविशेषात्सार्वकालिकं मन्यन्ते । अन्ये तु प्रजाकामप्रभृत्येतस्मिन्संवत्सर इति नानुवर्तयन्ति । तदुभयमप्ययुक्तं सर्वादावुपात्तस्य कालस्य सर्वान्प्रत्यविशेषात् यदा

पुनराधेय



वेति च निमित्तनिर्देशप्रकारत्वाच्च। व्यक्तं चाह सत्याषाढः य एतस्मिन्संवत्सरे ज्यानिं पुत्रमर्त्यां वाभ्येति स्वेन वाङ्गेन वृध्येत न वर्धेतीति स पुनराधेयं कुर्वीतेति। तथा च बौधायनः अग्नीनाधाय पापीयानभूवमज्यासिषि पुत्रो मृत इत्येतस्मिन्नेव संवत्सर दृष्टं भवतीति॥

**आग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालं वारुणं दशकपालमग्नये ऽप्सुमते ऽष्टाकपालं मैत्रं चरुमग्निमुद्वासयिष्यन्। ४।**

केवलवैश्वानरचोदनासु वैश्वानर एव देवता न तु तद्गुणको ऽग्निस्तस्याश्रवणादिति केचित्। तत्तु मन्दफलं बहुमन्त्रब्राह्मणकल्पविरोधात् इतरथाप्यश्रवणोपपत्तेश्च। तथा हि मन्त्रास्तावद्याज्यानुवाक्यादयस्तद्गुणाग्निलिङ्गा एव यथा वैश्वानरो अजीजनत् पृष्टो दिवीत्यादयः। ब्राह्मणे ऽपि वैश्वानरं द्वादशकपालं निर्वपेदिति विधाय संवत्सरो वा अग्निर्वैश्वानर इति वाक्यशेष आम्नातः। सूत्रकारो ऽपि वायव्यपशावग्नये वैश्वानराय द्वादशकपालं पशुपुरोडाशं निर्वपतीत्युक्त्वा तमेवान्यत्रापि विकल्पयन्नाह यः कश्चनाग्नौ पशुरालभ्यते वैश्वानर एवास्य द्वादशकपालः पशुपुरोडाशो भवतीत्येक इति तथा यदस्य पारे रजस इति वैश्वानराग्निलिङ्गामृचं विनियुङ्क्ते वैश्वानर्या परिषिच्येति। बौधायनेनाप्युक्तं वैश्वानरमवदायाहाग्नये वैश्वानरायानुब्रूहीति। भारद्वाजेनापि वैश्वानरं द्वादशकपालं निर्वपेदिति। अनुवाकाम्नातान्वैश्वानरान्व्याचक्षाणेनोक्तं अग्नये वैश्वानराय पुरोडाशं द्वादशकपालं निर्वपतीति॥ यत्तु अग्नेरश्रवणमुक्तं तदपि तद्धितवृत्तित्वादुपपन्नम्।

यत्र तु सगुणदेवतासंबन्धस्तद्धितवृत्त्या विवक्षितस्तत्र गुणशब्दादेव तद्धितः क्रियते गुणी लक्षुतौ ऽपि वाक्यशेषादिनाऽवसीयत इति पन्थाः यथा वैमृधो गृहमेधीयः पाथिकृदित्यादौ। तस्मात्सिद्धं केवलवैश्वानरचोदनास्वपि अग्निर्वैश्वानरो देवतेति॥ उद्वासयिष्यन्निति वक्ष्यमाणकालादुद्वासनात्पूर्वस्मिन्काल इत्यर्थः॥ आग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन्निति काम्येष्टिष्वाम्नातायां द्विहविषो ऽपीष्टेरनया विकल्पमिच्छन्ति ता ब्राह्मणव्याख्याता इति तस्या अप्युपसंग्रहात्॥

या ते अग्ने उत्सीदतः पवमाना प्रिया तनूः। तया सह पृथिवीमाविश रथंतरेण साम्ना गायत्रेण च छन्दसा॥ या ते अग्ने पावका या मनसा प्रेयसी प्रिया तनूः। तया सहान्तरिक्षमाविश वामदेव्येन साम्ना त्रैष्टुभेन च छन्दसा। ततो न ऊर्जमा कृधि गृहमेधं च वर्धय॥ या ते अग्ने सूर्ये शुचिः प्रिया तनूः शुक्रे ऽध्यधि संभृता। तया सह दिवमाविश बृहता साम्ना जागतेन च छन्दसा ततो नो वृष्ट्यावत॥ यास्ते अग्ने कामदुघा विभक्तीरनुसंभृताः। ताभिर्नः कामान्धुक्ष्वेह प्रजां पुष्टिमथो धनम्॥ यास्ते अग्ने संभृतीरिन्द्रः सूकर आभरत्। तासु शोचिषु सीदेह भस्म वैश्वानरस्य यत्। ५।

इति षड्विंशी कण्डिका।

पुनराधेय



ये ते अग्ने वानस्पत्याः संभाराः संभृताः सह। तेभिर्गच्छ वनस्पतीन्स्वां योनिं यथायथम्॥ अगन्नग्नि-र्यथालोकमसदत्सदने स्वे। अवीरहत्यं देवेषूपागां मनसा सहेति पुरस्तात्स्विष्टकृतः सप्ताहुतीर्जुहोति। १।

जयवद्व्याख्या ॥

सिद्धमिष्टिः संतिष्ठते। २।

गतः ॥

पौर्णमासीमिष्ट्वा ज्वलतोऽग्नीनुत्सृजति। ३।

निमित्तकामयोः सतोरागामिना पौर्णमासेनेष्ट्वानन्तरमुत्सर्गार्थामिष्टिं निरुप्य तदन्ते ज्वलतस्तानग्नीनुत्सृजति बुद्ध्योपेक्षते न रक्षतीत्यर्थः। ज्वलत इति वचनान्न निर्वापयति। तच्च परमतेन प्रसक्तं निवार्यते यथाह बौधायनः अद्भिरग्नीन्समुक्ष्येति। केचित्तु पूर्वेद्युरुत्सर्गेष्टिं निरुप्य पौर्णमासानन्तरमुत्सर्गमिच्छन्ति। तदयुक्तं अग्निहोत्रमारप्स्यमान इत्या-दिवदुद्वासयिष्यन्नित्यनेनोत्सर्गेष्टेरुत्सर्गादपृथक्कालत्वावसायात् उत्सर्गे-ष्ट्यन्ते चाग्नीनामदृष्टतिरोधानेनाकर्माङ्गत्वात् विपर्ययस्यैव सत्याषा-ढादिभिर्व्यक्तवचनाच्च ॥ अथैषात्र मीमांसा। पुनराधाननिमित्ते संजाते यदि स्वयमग्नयो विच्छिद्येरन्विच्छिन्नेषु वाग्निषु निमित्तं जायेत तदा किं पुनराधानमात्रं कर्तव्यमाहो स्विदुत्पाद्याग्नीनुत्सृज्य पुनरा-धातव्यमिति। प्रथमः कल्प इति ब्रूयात्। कुतः। धार्यमाणानामग्नीनां हानार्थत्वादुत्सर्गविधानस्य। नह्युद्वासनापेक्षायां स्वयमुद्वासितानां

प्रसभमनुत्सर्गो दोषाय प्रत्युत गुणायैव वीरहत्यादोषश्रुतेस्तस्मात्सिद्धं पुनराधानमात्रमेव कार्यं न पुनरुत्सर्ग इति ॥

## संवत्सरं पराध्यमुत्सृष्टाग्निर्भवति। ४।

पराध्र्यशब्दः षडवरार्ध्यानित्यत्रावरार्ध्यशब्देन व्याख्यातः। संवत्सर एवोत्सर्गस्य परावधिः। अतो ऽर्वागेव संवत्सरादाधातव्यमित्यर्थः। तेन संवत्सरातिक्रमे ऽग्निहोत्राद्यतिक्रमप्रायश्चित्तानि भवन्ति। बौधायनमतात्तु सत्यपि निमित्ते यावत्पुनराधेयकालमासित्वा काले ऽग्नीनुत्सृज्य सद्य एवाधानं भवति यथोत्सर्गेष्ट्यनन्तरमाह तदानीमेवाङ्गिरग्नीन्समुह्य ब्रह्मौदनं श्रपयित्वोपवसतीति। कात्यायनस्त्वाह चिरात्रावरमग्नीनुत्सृज्य सद्यो वेति। सत्याषाढस्त्वाह यावद्दर्शपूर्णमासावतिहितौ तावच्चिरमवसृष्टाग्निर्भवति संवत्सरं द्वादशाहं वेति ॥

## रोहिणी पुनर्वसू अनुराधा इति नक्षत्राणि। ५।

नक्षत्रान्तरपरिसंख्यानार्थं वचनं नित्यत्वख्यापनार्थं चैषाम्। तेन पूर्वविप्रतिषेधे ऽपि नक्षत्रमेवाद्रियते ॥

## वर्षासु शरदि वादधीत। ६।

एतावेवर्तू सर्ववर्णानां भवतः। बौधायनस्त्वत्राह येयमाषाढ्याः पौर्णमास्याः पुरस्तादमावास्या भवति सा सकृत्संवत्सरस्य पुनर्वसुभ्यां संपद्यते तस्यामादधीतेति ॥

## कृताकृताः संभारा यजूंषि च भवन्ति। ७।

पुनराधेय



आग्न्याधेयिकाः संभाराः पक्षे कृताः पक्षे अकृताश्च ब्राह्मणे भवन्ति। तथाधानयजूंषि च। यथर्थ्याधानादीनीत्यर्थः॥ तथा च ब्राह्मणं न संभृत्याः संभारा न यजुः कर्तव्यमित्यथो खलु संभृत्या एव संभाराः कर्तव्यं यजुरिति। तेषां चोभयेषां सहग्रिष्टत्वात्सह प्रवृत्तिः सह वा निवृत्तिर्भवति॥

अपि वा पञ्च पार्थिवान्संभारानाहरति एवं वानस्पत्यान्। ८।

पूर्वसूत्रे द्वौ कल्पावुक्तौ। सप्तकादिषु संभारकल्पेष्वनियमेनान्यतमः कल्पः स्यादित्येको न कश्चिदिति द्वितीयस्तृतीयस्त्वयं कल्पो नियमेन पञ्चकल्पः स्यान्नान्य इति॥

आयतनेषु पुराणान्दर्भान्संस्तीर्य भूमिर्भूम्नेति सर्पराज्ञीभिर्गार्हपत्यमादधाति। ९।

अथारण्याहरणादि समानमा गार्हपत्याधानात्। तत्र संभारकाले पुराणानपि दर्भान्संभृत्य निवपनकाले संभाराणामुपरि तानपिस्तृणाति। तानेव त्वसंभारपक्षे॥ ततो गार्हपत्याधानकाले सर्वाग्न्याधेयिकमन्त्रान्ते चतसृभिरपि सर्पराज्ञीभिर्गार्हपत्यमादधाति। सर्पराज्ञीभिरेव त्वयजुःपक्षे। ता अपि यजमानो ऽनुवर्तयते येनयेनादधातीत्यविशेषवचनात्॥

मध्यंदिन इतरान्। १०।

अह्नो नवधाकृतस्य पञ्चमो भागो मध्यंदिनः तथा बृहस्पतेर्मध्यंदिन इत्यत्र विवेचनात्। तत्र सर्वान्मध्यंदिन इति कल्पान्तरकाराः॥

उपोलवैर्दर्भैः परुत्कैः संवत्सरप्रवातैराहवनीयं ज्वलन्तमुद्धरति। ११।

उपोलवा इत्यालवेभ्य उत्थिता वच्यन्ते। परुत्काः परुष्मन्तः पर्ववन्तो वा। संवत्सरप्रवाताः संवत्सरमुपशुष्काः। ते प्रणयनीयेध्मस्य स्थाने भवन्ति॥

यत्त्वा क्रुद्धः परोवपेति दक्षिणाग्निम्। यत्ते मन्युपरोप्तस्येतीतरान्। १२।

आदधीतेति शेषः॥

मनो ज्योतिर्जुषतामिति बृहस्पतिवत्यर्चोपतिष्ठते। १३।

अग्नीनिति शेषः। तत्राहितमाहितमुपतिष्ठत इति भारद्वाजः॥

सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति। १४।

अनयैवाच पूर्वाहुतिः न तूष्णीम्। नापि द्वादशगृहीतमग्निहोत्रस्य स्थाने भवति मन्त्रवर्णात्त्वग्निर्देवता। प्रातर्होमविकारत्वं च पूर्ववत्॥

इति सप्तविंशी कण्डिका।

---

आग्नेयं पञ्चकपालं निर्वपत्यष्टाकपालं वा। १।

गतः॥

यदि पञ्चकपालो गायत्र्यौ संयाज्ये। यद्यष्टाकपालः पङ्क्त्यौ। २।

पुनराधेय



यस्याजुषद्विष्मा ह्वि त इति गायत्र्यौ। पङ्क्त्यौ स्वयमेव दर्शयिष्यति॥

सर्वमाग्नेयं भवति। ३।

यदस्यामिष्टौ हविर्देवतासंयुक्तं तत्सर्वमाग्नेयं भवति। विकारान्स्वयमेव तत्र कर्तव्यान्वक्ष्यति॥

पञ्चदश सप्तदश वा सामिधेन्यः। ४।

गतः॥

सामिधेनीप्रभृत्युपांशु यजत्योत्तमादनूयाजादुच्चैः स्विष्टकृतम्। ५।

यजतिश्च प्रकरणार्थः उच्चैरुत्तमं संप्रेष्यतीति लिङ्गात् तेनोपांशु प्रचरतीति श्रुतेश्च। तेनाध्वर्युनिगदा अप्युपांशवो भवन्ति॥ अथ याजुर्वैदिकहौत्रार्थे याज्यानुवाक्यासु होतुर्विकारानाह॥

अग्नाग्ने ऽग्नावग्ने ऽग्निनाग्ने ऽग्निमग्न इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्दधाति। ६।

अनेनादितश्चतुर्षु प्रयाजेषु याज्यागतानामाग्नेयशब्दानां पुरस्तादावापिकान्विभक्त्यग्निशब्दान्निधाय पाठः प्रदर्श्यते। तद्यथा समिधो अग्नाग्न आज्यस्य वियन्तु तनूनपादग्नावग्न आज्यस्य वेत्वित्यादि। अग्नाविति संबुद्धे रूपं द्रष्टव्यम्॥

नोत्तमे। ७।

प्रयाजानूयाजेष्वेव विभक्तीः कुर्यादित्यविशेषश्रुतेः पूर्वसूत्रेण प्रयाजचतुष्टये विभक्तिचतुष्टयनियमाच्च पञ्चमे ऽपि अनियमेन न्यायात्काचिद्विभक्तिः कार्येति भ्रमो मा भूदित्यारम्भः॥

विभक्तिमुक्त्वा प्रयाजेन वषट्करोति। ८।

अथवा विभक्तिमुक्त्वा प्रयाजयाज्यया वषट्करोति। याज्यायाः पुरस्ताद्वा विभक्तिं दधातीत्यर्थः। तद्यथा अग्ना समिधो ऽग्न आज्यस्य अग्नौ तनूनपादग्न आज्यस्य वेत्वित्यादि॥

यं कामयेतर्ध्नुयादिति तस्योपरिष्टाद्येयजामहाद्विभक्तिं दध्यात्पुरा वा वषट्कारात्। ९।

काम्याविमावपरौ कल्पौ। येयजामहादुपरिष्टाद्व्याहृतिभ्यश्च पुरस्ताद्विभक्तिरित्येकः कल्पः। तद्यथा ये यजामहे ऽग्ना भूर्भुवः स्वः समिधो ऽग्न आज्यस्य ये यजामहे ऽग्ने भूर्भुवः स्वः तनूनपादित्यादि। पुरा वषट्कारादिति द्वितीयः। तत्र प्लुतिश्च विभक्तावेव भवति तद्यथा वियन्त्वग्ना३ वौषडित्यादि॥

अग्निं स्तोमेन बोधयेत्याग्नेयस्याज्यभागस्य पुरोऽनुवाक्या भवति। अग्न आयूंषि पवस इति सौम्यस्य। १०।

अत्र देवतानिगमेषु सोमस्य स्थाने ऽग्निं पवमानं निगमयेयुः यथाग्नये पवमानायानुब्रूहीत्यादि॥

अग्निर्मूर्धेति वा सौम्यस्य कुर्यात्। ११।

अस्मिंस्तु पक्षे अग्निमेव केवलं निगदेयुरिति शेषः॥

प्रजाकामपशुकामस्य प्रजाव्यृद्धपशुव्यृद्धस्य वा। १२।

प्रजया व्यृद्धो नष्टप्रजः तथा पशुव्यृद्धः। एषामप्यग्निर्मूर्धेति सौम्यस्य कुर्यात्॥

पुनराधेय



**अग्निन्यक्ताः पत्नीसंयाजानामृचो भवन्ति। १३।**

याः पत्नीसंयाजानामृचो याज्यानुवाक्याः ता अग्निन्यक्ताः निषिक्ताग्निशब्दा भवन्ति। तासृचु देवताशब्देभ्यः परं तत्समानया विभक्त्याग्निशब्दः प्रक्षेप्तव्य इत्यर्थः यथा विश्वतः सोमाग्ने वृष्णियमित्यादिनोक्तः पत्नीसंयाजो विक्रियते तस्य स्वयमनाग्नेयत्वात् सर्वाग्नेयार्थत्वाच्च विकारस्य। तथा च ब्राह्मणं अग्निन्यक्ताः पत्नीसंयाजानामृचः स्युः तेनाग्नेयं सर्वं भवतीति॥ ऋच इति वचनाच्च नाध्वर्युनिगमेषु विकारः। आज्यभागानन्तरं व्युत्क्रमेण पत्नीसंयाजवचनमुत्तरसूत्रे सहोभयेषां विकल्पविधानार्थं ब्राह्मणानुसारार्थं च॥

**अपि वा यथापूर्वमाज्यभागावेवं पत्नीसंयाजाः। १४।**

यथापूर्वं यथाप्रकृतीत्यर्थः॥

**अग्ने तमद्याश्वमित्यक्षरपङ्क्त्यो याज्यानुवाक्या भवन्ति। द्वे आग्नेयस्य द्वे स्विष्टकृतः। १५।**

आदितो द्वे प्रधानस्य परतो द्वे स्विष्टकृतो ऽष्टकपालपक्षे यदि पञ्चकपालो गातत्र्यौ संयाज्ये यद्यष्टाकपालः पङ्क्त्याविति नियमात्॥

**पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुतीर्जुहोति। १६।**

अभितः पुरोडाशं पुरोडाशेज्यायाः पुरस्तादेकामुपरिष्टादन्यामित्यर्थः। पुरोडाशस्योपरि अधस्तेति केचित्। तदयुक्तं उत्तरविकल्पानौचित्यात् अभितो वपां जुहोतीति श्रुतेः सूत्रकृतैवान्यथा व्याख्यानाच्च॥

पुनरूर्जति वा पुरस्तात्प्रयाजानां सह रय्येत्युपरिष्टादनूयाजानाम्। १७।

गतौ ॥

एतद्वा विपरीतम्। १८।

उपरिष्टात्प्रयाजानां पुरस्तादनूयाजानामित्यर्थः ॥

उभयीर्दक्षिणा ददाति। १९।

इत्यष्टाविंशी कण्डिका।

---

आग्न्याधेयिकीः पौनराधेयिकीश्च पुनर्निष्कृतो रथ इत्येताः शतमानं च हिरण्यम्। १।

पौनराधेयिकीश्च पुनर्निष्कृतो रथ इत्येता इत्यन्वयः। उक्ता ह्येता ब्राह्मणे पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वासः पुनरुत्सृष्टोऽनड्वानिति ॥ तत्र पुनर्निष्कृतः पुनः संस्कारेण नवीकृतः। पुनरुत्स्यूतं उतं दार्ढ्यार्थं सूत्रैरुत्स्यूतम्। पुनरुत्सृष्टः अवसन्नो गौः ॥ तथा बौधायनः पुनर्निष्कृतो रथो दक्षिणेति पुनःसंस्कृत एव भवति पुनरुत्स्यूतं वास इति पुनःसंस्कृतमेवैतद्भवति पुनरुत्सृष्टोऽनड्वानिति अवशीर्णगव एवैष उक्तो भवतीति ॥ शतमानं हिरण्यमित्युक्तं तत्र किं रजतस्यापि हिरण्यस्य दानं लभ्यते नेत्याह ॥

तस्माद्रजतं हिरण्यमित्युक्तम्। २।

ब्राह्मणे तस्माद्रजतं हिरण्यमित्यारभ्य तस्माद्बर्हिषि न देयमित्युक्तम्। ततः स्वर्णमेव देयमिति भावः ॥

पुनराधेय



पुनरभिहितो रथः पुनरुत्स्यूतं स्यामूलं पुनःकामस्यास्था इत्येकेषाम्। ३।

पुनरभिहितः पुनःसंस्कृतः। स्यामूलं वासोविशेषः यथा स्यामूलेन चौमेण वाश्वं संज्ञपयन्तीत्यादौ। विकल्पते चैतद्द्वयं पुनर्निष्कृतादिभिः। पुनः काम्यत इति पुनःकामः पुनराधेयफलम्॥

यदीतराणि न विद्येरन्नप्यनड्वाहमेव दद्यात्। अनडुहि ह वा एते च कामा अतश्च भूयांस इति पैङ्गायनिब्राह्मणं भवति। ४।

अनड्वानिति पुनरुत्सृष्ट एव गृह्यते यदीतराणि न विद्येरन्नितीतरशब्दसामर्थ्यात्। स चान्याधेयिकीरपि निवर्तयति अनड्वाहमेवेत्यवधारणात्॥

देवे अग्नौ देवो अग्निरिति द्वयोरनूयाजयोर्विभक्ती दधाति। ५।

तद्यथा देवे अग्नौ बर्हिः देवो अग्निर्नराशंस इति॥

नोत्तमे। ६।

व्याख्यात उत्तमप्रयाजेन॥

उच्चैरुत्तमं संप्रेष्यति। ७।

संप्रेष्यतीति प्रदर्शनार्थम्। याज्याप्युच्चैरेव यथोक्तमुपांशु यजत्योत्तमादनूयाजादिति॥

**सिद्धमिष्टिः संतिष्ठते । ८ ।**

गतः ॥

**आग्निवारुणमेकादशकपालमनुनिर्वपति सर्वेषामनुनिर्वाप्याणां स्थाने द्विदेवत्यानां वा । ९ ।**

द्वितीयस्मिन्पक्षे पवमानहविषामन्ते आग्निवारुणः तदन्त आदित्यः तदन्ते वैष्णव इति क्रमः ॥

**सिद्धमिष्टिः संतिष्ठते । संतिष्ठते पुनराधेयम् । १० ।**

गतौ । तथाग्निहोत्रादीनि प्राप्ते काले भवन्ति । नन्वारम्भार्था दर्शहोत्रादय इति प्रागेव दर्शितम् ॥

**यस्तृतीयमादधीत स एतान्होमाञ्जुहुयाल्लोकः सलोकः सुलोक इति । ११ ।**

अथ तृतीयाधाने कश्चिद्विशेष उच्यते तत्र यः पराचीनं पुनराधेयादग्निमादधीत स एतान्होमाञ्जुहुयादिति श्रुत्यनुरोधात् । यः प्रथममग्नीनाधाय ततो द्वितीयं पुनराधेयं कृत्वा पुनस्तृतीयमाधत्ते विशेषवचनात् तस्यैते होमा भवन्ति । यथा कथंचिद्वा तृतीयाधाने विशेषावचनात् तथान्यत्र मीमांसा किं तृतीये पुनराधाने एते होमाः आहो स्विदग्न्याधेये उतोभयस्मिन्निति । प्रकरणात्पुनराधेय इति केचित् । अग्निमादधीतेति श्रुतेरग्न्याधेय इत्यन्ये । उभयस्मिन्नित्येव सूत्रकाराभिप्रायः यस्तृतीयमादधीतेत्यविशेषवचनादेव । तथा चोभयमाह बौधायनः अथेदं तृतीयाधेयं कतरन्नु खल्विदमुपनिश्रयत्य-

पुनराधेय



ग्न्याधेयं पुनराधेयं वेत्यग्न्याधेयमेवेति ब्रूयादिति। तथा पुनराधेयविधानानन्तरमाह तृतीयमादधान आग्नेयस्य पञ्चकपालस्य पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति लेकः सलेकः सुलेक इति॥ एतेनैवाग्न्याधेयकल्पेनैषां होमकालो व्याख्यातः। अथ प्रायश्चित्तं पुनराधानमपि प्रसङ्गादत्रैवोपदिशति॥

## यद्यरण्योः समारूढो नश्येत्। १२।

पुनराधेयं प्रायश्चित्तिरिति वक्ष्यमाणेन संबन्धः। तत्र समारूढेष्वग्निष्वरणिनाशो ऽग्निनाशः यथोक्तमाश्वलायनेन समारूढेषु चारणीनाश इति। स चारणिनाशो द्विविधः शक्तिनाशः स्वरूपनाशश्च। तत्र शक्तिनाशो मन्थनासामर्थ्यं स्वरूपनाशस्त्वपहरणदाहदूषणादिनानेकविधः। दूषणं मूत्रपुरीषाद्युपहतिः यामधिकृत्य स्मर्यत उपहतानामुत्सर्ग इति। तदेवमरण्योरुभयविधनाशे पुनराधेयम्॥ तत्र शक्तिनाशे ऽनुग्रहमाह भारद्वाजः तत्र च लौकिकाग्नावुपावरोहणं स्यादिति। स्वरूपनाशे ऽप्याह बौधायनः अपहृताग्नेर्नष्टारणीकस्य च ब्रह्मौदनेनैव प्रतिपद्यते सिद्धमग्न्याधेयं कामं नष्टेषु वापहृतेषु वाग्निषु नाद्रियेताग्न्याधेयं आधानप्रभृति यजमान एवाग्नयो भवन्ति तस्य प्राणो गार्हपत्यो ऽपानो ऽन्वाहार्यपचनो व्यान आहवनीयः काममुपावरोह्य जुहुयादिति। तथोत्तरारणेरुभयविधनाशे ऽप्याह भारद्वाजः अथ यद्युत्तरारणिः समारूढा जीर्येन्नश्येद्वाधरारण्या आहृत्येति विज्ञायत इति। आहृत्येति अधरारणीं छित्त्वैकः खण्ड उत्तरारणीत्वेनाहर्तव्य इत्यर्थः॥ एवं चाधरारणिस्वरूपनाशे पुनराधेयमेवेत्युक्तं भवति। आहवनीयादेस्तु समारूढस्यारणीनाशे पुनर्योनित उत्पत्तिमिच्छन्ति

स्वयोनौ विद्यमाने ऽत्यन्तोत्सादायोगात्॥ अथासमारूढे ऽग्नावरणी-नाशे को विधिः। किमत्र प्रष्टव्यम्। यदा ध्रियमाणे ऽग्निरनुगतो ऽरणी अपेक्षिष्यते तदागत्यभावादाधानं भविष्यति। तथा छन्दोगपरिशिष्टे कात्यायनः अरण्योः क्षयनाशाग्निदाहेष्वग्निं समाहितः पालयेदुपशान्ते ऽग्नौ पुनराधानमिष्यत इति। तथाप्यनुग्रहमाह भारद्वाजः यद्यरणी समारूढा जीर्येङ्गिर्येद्दुष्येद्वा शकलीकृत्य गार्हपत्यं प्रदीप्य प्रक्षिप्य प्रज्वाल्यादत्ते दक्षिणेनोत्तरारणिं सव्येनाधरारणिमुपर्यग्नौ धारयञ्जपत्युत्तिष्ठाग्ने प्रविश योनिमेतां देवयज्यायै त्वा वोढवे जातवेदः अरण्योररणी अनुसंक्रमस्व जीर्णां तनुमजीर्णया निर्णुदस्वेति अथैनं स्वेन मन्त्रेण स्वयोनौ समारोप्य मथित्वाग्नी विहृत्य जुहुयात्। स्वेन मन्त्रेण समारोपणमन्त्रेण। स्वयोनावरण्योर्विहृत्य जुहुयात् यथाकालं विहृत्य तत्तद्धोमादि कार्यं कुर्यादित्यर्थः॥

**यस्य वोभावनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः। १३।**

वाकारः समुच्चयार्थः। उभावित्यग्न्योः परामर्शः अनुगतशब्दसमभिव्याहारात् तौ च गार्हपत्याहवनीयौ प्राधान्यात्। निम्रोचनमस्तमयः॥ तदयमर्थः। अग्निहोत्रार्थं विहृतमजस्रं वाहवनीयं गार्हपत्यं चोभावनुगतावभि सूर्यो निम्रोचेदुदियाद्वा तस्य पुनराधेयं प्रायश्चित्तिरिति॥ केचित्पुनरत्राविहृते आहवनीये केवलगार्हपत्यानुगमने ऽप्युभयानुगतिमिच्छन्ति पश्चाद्धि स तर्हि गत इति लिङ्गेनाविहृतावस्थायामाहवनीयस्य गार्हपत्यानुप्रवेशानुगमनात्। तत्तु न मृष्यामहे। कस्मात्। उभावित्यनेन तावद्विरोधात्। नह्येको ऽग्निरुभाविति शक्यते व्यपदेष्टुं

पुनराधेय



न च यथोक्ताल्लिङ्गादाहवनीयस्य गार्हपत्यानुप्रवेशसिद्धिस्तस्यान्यपरत्वात्। अस्तु वानुप्रवेशः तथाप्यनुप्रविष्टो ऽयमानुमानिको ऽग्निरस्त्यस्याग्निवन्नाग्नितद्धेदव्यवहारभाजनं भवितुमर्हति प्रत्यक्षाग्निगोचरत्वात्सर्वाग्निव्यवहाराणां यथान्तराग्नी तिष्ठन् यदि गार्हपत्याहवनीयावित्यादि। किं चानुगमनव्यवहारो ऽपि प्रत्यक्षाग्निनाशगोचर एव दृष्टः यथा यदि पूर्वो ऽनुगतः यदि गार्हपत्य आहवनीयो वानुगच्छेदित्यादि। तथा परोक्षव्यतिरेकश्च दृष्टः यदरण्योः समारूढो नश्येदिति। किं चैवं परोक्षस्याप्यग्नेरनुगमनमिच्छतः सर्वत्राविहृतावस्थायां गार्हपत्यानुगतावाहवनीयानुगतिप्रायश्चित्तमपि प्रसज्येत। तयोभयसंसर्गात्संसर्गप्रायश्चित्ताद्यपि प्रसञ्जयितव्यम्। तस्मात्सिद्धं न केवलगार्हपत्यानुगमनमुभयानुगमनमिति न चोभावनुगतावित्युभयाभावमात्रलक्षणेति युक्तं मुख्यार्थसंभवे लक्षणाश्रयणस्यायुक्तत्वात्। तस्माद्ध्रियमाणोभयविनाशविषयो ऽयं विधिरित्येव सांप्रतम्। एवं चाविहृतावस्थायां केवलगार्हपत्यानुगमने सतोरण्युदयात्तमययोरनुगतिप्रायश्चित्तमनुद्धरणप्रायश्चित्तं च कृत्वाग्निहोत्रहोमः कार्य इति सिद्धं भवति॥

**पुनराधेयमित्याश्मरथ्यो ऽग्न्याधेयमित्यालेखन आलेखनः। १४।**

आलेखनमतप्रदर्शनेनैव विकल्पसिद्धावाश्मरथ्यमतप्रदर्शनेन स्वमतसंवादः ख्याप्यते। पुनराधेयं प्रत्यादरविशेषार्थमिति वेदितव्यम्॥

इत्येकोनत्रिंशी कण्डिका।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायामष्टमः पटलः। इति पञ्चमः प्रश्नः॥

ओम् ॥

अथाग्न्याधेयानन्तरमग्निहोत्रं व्याचिख्यासुरधिकारं दर्शयति ॥

**अग्निहोत्रं व्याख्यास्यामः । १ ।**

अग्निहोत्रशब्दः कर्मनामधेयं अग्नेर्होत्रमस्मिन्निति होमे ऽग्निदेवतासंबन्धात् यथोक्तं ब्राह्मणे स एतद्भागधेयमभ्यजायत यदग्निहोत्रं तस्मादग्निहोत्रमुच्यत इति। क्वचिद्द्रव्यवचनो ऽपि यथाधिश्रित्याग्निहोत्रं यस्याग्निहोत्रं दुह्यमानमित्यादौ ॥

**अधिवृक्षसूर्य आविःसूर्ये वा धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय गार्हपत्यमभिमन्त्रयते सुगार्हपत्य इति। २।**

यस्य वेभावनुगतौ यस्य वाग्निभिरग्नीनित्यादिवत्समुच्चयार्थे वाशब्दः। सूर्यशब्देनोभयत्र रश्मिलक्षणा। भूमेरुत्थिता रश्मयो ऽधिवृक्षमेवं निविशन्ते यस्मिन्काले सो ऽधिवृक्षसूर्यः। तथा प्राच्यां दिशि रश्मय आविर्भूता यस्मिन्काले स आविःसूर्यः। एतमर्थमभिप्रेत्योक्तमुद्यत्सु रश्मिषु दशहोत्रेति॥ केचित्त्वाविःसूर्य इत्यपि सायंविहरणस्यैव कालविकल्पं मन्यन्ते। तदयुक्तं प्रातरपि विहरणकालस्य वक्तव्यत्वादनेन च तदवगमादतो ऽन्यस्य चावचनात् अन्यथा प्रातर्विहरणकालस्यानियतकालत्वप्रसङ्गाच्च। न वास्त्विति वाच्यं उदयातिक्रमे प्रायश्चित्तवचनात्। अत एव तर्हि प्रायश्चित्तवचनात्कालविशेषो

ऽवगम्यत इति चेत्समानमिदं विहरणे ऽपीति। तत्रापि कालो विधेयो न स्यात्। तस्माद्यथोक्त एव सूत्रार्थः॥ न विद्युदसीत्यपामुपस्पर्शनं दर्विहोमत्वात्। उपवेषस्तु प्रागेव व्याख्यातः॥

अथैनं बोधयत्युद्बुध्यस्वाग्ने प्रति जागृह्येनमिष्टापूर्ते संसृजेथामयं च। अस्मिन्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदतेति। ३।

बोधयति प्रादुष्करोति। उद्बुध्यस्वाग्न इति मन्त्रोच्चारणमेव बोधनमित्यपरम्॥

उद्धरेत्येव सायमाह यजमानः। उद्धरेति प्रातः। ४।

उद्धरेति द्विरुक्तिर्वैचित्र्यार्था। सायं च प्रातश्चोद्धरेत्याहेत्यर्थः। तत्रोद्धरेत्यनुज्ञामात्रं यजमान आह उद्धरणमन्त्रमध्वर्युरित्येवकारार्थः। यद्वा स्वयं जुह्वदपि स्वयमात्मानमनुजानीयादिति न्यायेनोद्धरेत्येवाहेत्यर्थः। तत्रैव भिन्नक्रमो वा योजनीय उद्धरेत्याहैवेति॥

सहस्रं तेन कामदुघो ऽवरुन्द्धे। ५।

तद्वत्तेनानुज्ञाविषयेण परामर्शद्वारेण लक्षितलक्षणयाग्निहोत्रं परामृश्यते स्तूयते च। तदग्निहोत्रेण सहस्रं कामदुघो गा अवरुन्द्धे लभत इति॥ तथा च श्रुतिमुदाहृत्य व्याचष्टे बौधायनः अथ यस्याग्निहोत्रमुद्धरति सहस्रं तेन कामदुघो ऽवरुन्द्ध इत्यथ यस्याग्निहोत्रं जुहोति सहस्रं तेनेत्येवेदमुक्तं भवतीति॥

वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा मनसा

ब्रह्मणा श्रोत्रेणामीधैतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरा-मीति गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरति। ६।

प्रज्वाल्यैवोद्धरति ॥

भूर्भुवः सुवरुद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वा-न्यच्च विद्वांश्चकार। अह्ना यदेनः कृतमस्ति पापं सर्व-स्मान्मोद्धृतो मुञ्च तस्मादित्युद्ध्रियमाणमभिमन्त्रयते यजमानः सायम्। रात्र्या यदेनः कृतमस्ति पापं सर्व-स्मान्मोद्धृतो मुञ्च तस्मादिति प्रातः। ७।

प्रातस्त्वेतस्यैव मन्त्रस्य रात्र्या यदेन इत्येतावान्विकारः ॥

अग्निपतये ऽग्नये मे विद्यग्निपतये ऽग्नये मे मृड। अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै। तयानन्तं काममहं जयानि प्रजापतिर्यं प्रथमो जिगा-याग्निमग्नौ स्वाहा। ८।

इति प्रथमा कण्डिका।

---

अग्ने सम्राडजैकपादाहवनीय दिवः पृथिव्याः पर्य-न्तरिक्षाल्लोकं विन्द यजमानाय। पृथिव्यास्त्वा मूर्धन्सा-दयामि यज्ञिये लोके। यो नो अग्ने निष्ट्यो यो ऽनिष्ट्यो ऽभिदासतादमहं तं त्वयाभिनिदधामीति पुरस्तात्परि-

अग्निहोत्र



क्रम्योदङ्मुखः प्रत्यङ्मुखो वा सायमायतनेऽग्निं प्रतिष्ठापयति। प्राङ्मुखः प्रातः। १।

न पुरस्तात्परिक्रमणं प्रातः॥

स्वयं यजमान इध्मानाहरति विश्वदानीमाभरन्तो नातुरेण मनसा। अग्ने मा ते प्रतिवेशा रिषामेत्येतया। २।

इध्मानेधान्स्वयमाहरति न त्वन्येनाहारयति॥

यदग्ने यानि कानि चेत्येताभिः पञ्चभिः प्रतिमन्त्रमग्निषु महत इध्मानादधाति। ३।

इदमपि याजमानमेव यजमानाधिकारात्कल्पान्तरेषु व्यक्तत्वाच्च। सत्याषाढेन तावद्याजमानकाण्ड एवेध्मानामाहरणमाधानं चोभयमुक्तम्। भारद्वाजोऽप्याह स्वयं यजमान एधानाहृत्याग्निषु महत इध्मानादधातीति। महत इध्मानिति यावन्तः समिन्धनार्थायालं तावत एकैकस्मिन्नादधातीत्यर्थः॥

आहवनीये वर्षिष्ठम्। ४।

यथान्येभ्यो वर्षिष्ठं भवति तथा॥

यथाहितास्तेनानुपूर्व्येणाहवनीयाद्वा प्रक्रम्य। ५।

इध्मानादधातीत्यर्थः। आहवनीयप्रक्रमेऽपीतरेषां यथाधानमेव क्रमः॥

नथाग्निराधेयो यथाहुतिर्न व्यवेयात्। ६।

तथाग्निरुन्मुखार्चिर्विधातव्यो यथेध्मस्योपरि दत्तामाहुतिमिध्मो न व्यवेयात् व्यवदध्यात् ॥

**नान्तराग्नी संचरति। ७।**

अग्नी इति गार्हपत्याहवनीयौ गृह्येते प्राधान्यात् तथोत्तरसूत्रे व्यक्तत्वाच्च ॥

**यदि पूर्वो ऽनुगतः संचर्यम्। ८।**

पूर्वस्मिन्म्रियमाणे ऽपराग्न्यनुगतावसंचरणार्थं वचनं अन्यथा तदानर्थ-क्यात्। अथात्रैवार्थवादं दर्शयति ॥

**पश्चाद्धि स तर्हि गतः। ९।**

तर्हि तस्मिन्काले सो ऽग्निः पश्चाद्गार्हपत्ये स्वयोनौ हि गतः। तेन संचर्यमिति ॥

**कामं हुते संचर्यमित्येके। १०।**

अजस्रविषये साङ्गाद्धोमादुत्तरकालमन्तराग्न्योरयं संचरणविकल्पः। प्रणयनकल्पे ऽपि प्रधानहोमादुत्तरकालमिति केचित् ॥

**नक्तमाहवनीयं धारयति। ११।**

पूर्वं त्वाहवनीयस्य सायंप्रातर्होमयोः पृथक्प्रणयनमुक्तं यथाधिवृत्तसूर्यं आविःसूर्यं इति तथोदङ्मुखः प्रत्यङ्मुखो वा सायं प्राङ्मुखः प्रातरिति च। इदानीं तु सायमुपक्रम्य प्रातरपवर्गिणो होमद्वयस्यै-ककर्माभिप्रायेणैकमेव प्रणयनमुच्यते यथोक्तं बौधायनेन अथैतदग्नि-होत्रं सायमुपक्रमं प्रातरपवर्गमाचार्या ब्रुवत इति ॥ द्वयोरनयोः

अग्निहोत्र



प्रणयनकल्पयोर्विप्रतिषेधाद्विकल्पः। तथा च कात्यायनः तस्मिन्सायंप्रातर्होममेक इति। भारद्वाजश्चाह अपि वा सायमुद्धृत एव स्याद्वा प्रातरग्निहोत्रादिति। तथा नक्तं वा धारयेयुरिति॥

नित्यो गतश्रियो ध्रियते। १२।

गतश्रीर्व्याख्यातस्त्रयो वै गतश्रिय इत्युक्तमित्यत्र। तस्याधानादारभ्य नित्यो ध्रियते। आहवनीय इति विभक्तिविपरिणामेन संबन्धः॥ सत्याषाढभारद्वाजौ त्वाहतुः नित्यं गतश्रियो धार्यत आयुष्कामस्य वेति। आश्वलायनमतात्तु गतश्रियः सर्वे ऽपि नित्या यथाह आधानाद्व्रादश्वरात्रमजस्रा अत्यन्तं तु गतश्रिय इति। बौधायनमतात्त्वगतश्रियो ऽपि पक्षे नित्याः सर्वे यथाह आधानप्रभृत्येवैते ऽजस्राः स्युरिति शालीकिरिति॥

नित्यं गार्हपत्यम्। १३।

गतश्रीरगतश्रीश्च सर्व एव नित्यं गार्हपत्यं धारयन्तीत्यर्थः पुनर्नित्यग्रहणात्॥

तथान्वाहार्यपचनं यदि मथित्वाहितो भवति। १४।

आधानकाले यदि दक्षिणाग्निर्मथित्वाहितः तमपि सर्वे नित्यमेव धारयेयुः। सत्याषाढमतात्त्वाहार्यो ऽपि नित्यः॥

यद्याहार्यो ऽहरहरेनं दक्षिणत आहरन्ति। १५।

यदि तदानीमाहार्यस्तदा योनित आहरन्ति। बहुवचनमविवक्षितम्। अहरहः कालेकाल इत्यर्थः यथाहरहर्यजमानः स्वयमग्निहोत्रं जुहु-

यादिति। दक्षिणत इति दक्षिणाग्न्यायतनानुवादः। दक्षिणस्माद्दे-शादाहरणनियम इति केचित्॥

**उपवसथ एवैनमाहरेयुर्नवावसान एवैनमाहरेयु-रिति वाजसनेयकम्। १६।**

उपवसथे ऽग्न्यन्वाधानकाले। वासार्थं देशान्तरप्राप्तिरवसानं स्थानं वा इदं श्रेयो ऽवसानमागन्मेति लिङ्गात्। नवमवसानं नवावसानम्। पूर्वस्थानात् स्थानान्तरप्राप्तावाहरेयुर्नान्यथेत्यर्थः॥ सभ्यावसथ्ययो-स्त्वेवमुत्पादनावचनादाधानसंपादितानामग्नीनां स्वतो ऽनुद्वासितव्य-त्वाच्च नित्यधारणमेव युक्तमिति केचित्। तदयुक्तं नित्यधार्याणाम-नुक्रमणेनेतरेषां धारणव्युदासात् इतरथा त्वनुक्रमणानर्थक्यात् अर्था-यार्थायाग्निं प्रणयत्यपवृक्ते कर्मणि लौकिकः संपद्यत इत्यधार्येषु न्यायव्युत्पादनाच्च। न चैतत्प्रणयनशब्दादाहवनीयैकविषयमिति मन्तव्यं उत्पत्तिप्रदर्शनार्थत्वात्तस्य अन्यथा दर्शपूर्णमासादिषु दक्षिणाग्नेराहर-णसिद्धेः शामित्रादीनां धारणप्रसङ्गाच्च। तस्मान्न धार्यौ सभ्यावस-थ्यावापस्तम्बमतात्। सत्याषाढभारद्वाजाभ्यां तु धार्येष्वेवानुक्रान्तौ यथा नित्यौ सभ्यावसथ्याविति॥

इति द्वितीया कण्डिका।

**परिसमूहनेनाग्नीनलंकुर्वन्ति। १।**

परिसमूहनं परितो मार्जनं तेनाग्नीनलंकुर्वन्ति। स एवालंकार इत्यर्थः। बहुवचनं पत्न्यध्वर्युयजमानानामन्यतमप्राप्त्यर्थम्। दर्शितं चैतत्समूहन्त्यग्न्यागारमित्यत्र॥

अग्निहोत्र



**पुरस्तादलंकाराः सायमुपरिष्टादलंकाराः प्रातः।२।**

अग्नय इति शेषः। तत्र यदाप्युपरिष्टाद्धोमादलंकारस्तदाप्युपरितन-समिन्धनादनन्तरमिष्यते पूर्वालंकारे तथादर्शनात्। स चोभयत्र पाणिना कार्यः समिद्धमग्निं पाणिना परिसमूहेन्न समूहन्येति वचनात्॥

**एतद्वा विपरीतम्। उभयतोऽलंकाराः सायं तथा प्रातरित्येके।३।**

गतौ॥

**अग्ने गृहपते शुन्धस्वेति गार्हपत्यमग्ने वह्ने शुन्धस्वेति दक्षिणाग्निमग्ने सम्राट् शुन्धस्वेत्याहवनीयमग्ने सभ्य शुन्धस्वेति सभ्यमग्ने परिषद्य शुन्धस्वेत्यावसथ्यम्।४।**

अलंकुर्वन्तीति संबन्धः॥

**उदगग्रैः प्रागग्रैश्च दर्भैस्तृणैर्वाग्नीन्परिस्तृणात्यग्निमग्नी वा।५।**

व्याख्यातः प्राक्। अग्निमित्याहवनीयो गृह्यते होमार्थत्वात्। परिस्त-रणतृणानि दूर्वादयः॥

**खादिरः स्रुवो वैकङ्कत्यग्निहोत्रहवणी बाहुमात्र्यर-त्निमात्री वा।६।**

अन्य एवाग्निहोत्रस्रुवः पुनर्विधानात्। ययाग्निहोत्रं क्रियते सा स्रुगग्नि-होत्रहवणी। तौ च दार्शपौर्णमासिकाभ्यां स्रुक्स्रुवाभ्यां व्याख्यातौ॥

प्रसृताङ्गुतिरार्यकृताग्निहोत्रस्थाल्यूर्ध्वकपालाचक्रवर्ता भवति। ७।

प्रसृताङ्गुतिरसंकुचितबिला। आर्यकृता आर्यैस्त्रैवर्णिकैः कृता। ऊर्ध्वकपाला अतिर्यग्वृत्तकपाला। अचक्रवर्ता वर्तनं वर्तः न चक्रे वर्तनं यस्याः सा तथोक्ता न चक्रभ्रमणेन निर्मितेत्यर्थः॥

दक्षिणेन विहारमग्निहोत्री तिष्ठति तां यजमानोऽभिमन्त्रयत इडासि व्रतभृदहं नावुभयोर्व्रतं चरिष्यामि सुरोहिण्यहं नावुभयोर्व्रतं चरिष्यामीड एहि मयि श्रयस्वेर एह्यदित एहि गौरेहि अघ्न एहि सत्येन त्वाह्वयामीति। ८।

अग्निहोत्रार्था धेनुरग्निहोत्री॥

अथ वेदिदेशमभिमृशतीयमसि तस्यास्ते ऽग्निर्वत्सः सा मे स्वर्गं च लोकममृतं च धुक्ष्वेति। ९।

गतः॥

पूषासीति दक्षिणतो वत्समुपसृज्य प्राचीमावृत्य दोग्ध्युदीचीं प्राचीमुदीचीं वा। १०।

दक्षिणतो गोर्वत्समुपसृज्य यथा प्राची भवति तथा पर्यावृत्य दोग्धि॥

न शूद्रो दुह्यात्। ११।

किमर्थमिति चेत्॥

**असतो वा एष संभूतो यच्छूद्रः। १२।**

असतो निकृष्टादङ्गात्पादादिति यावत्पद्भ्यां शूद्रो अजायतेति श्रुतेः॥

**दुह्याद्वा। १३।**

नन्विदानीमेवोक्तमसतो वा एष संभूत इति ततः परिहारः। न चात्र सांनाय्यवदुत्पवनेन शुद्धिरस्ति येनानुज्ञायेतापि शूद्रः। तथा च ब्राह्मणं अग्निहोत्रमेव न दुह्याच्छूद्रस्तद्धि नोत्पुनन्तीति। तत्राह

**यदेव गार्हपत्येऽधिश्रयति पवयत्येवैनत्। १४।**

अतोऽनुज्ञायेत शूद्र इति भावः॥

**अग्निहोत्रस्थाल्या दोहनेन च दोग्धि। १५।**

उभयत्राप्यधिकरणस्य करणत्वविवक्षया तृतीया॥

इति तृतीया कण्डिका।

**पूर्वौ दुह्याज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा गतश्रीः स्यात्। अपरौ दुह्यात्कनिष्ठस्य कानिष्ठिनेयस्य यो वानुजावरो यो वा बुभूषेत्। १।**

व्याख्यातौ दर्शपूर्णमासयोरवदानविधौ। पूर्वापराविति तु स्तननिर्देश इति विशेषः॥

**न स्तनान्संमृशति। २।**

प्रस्रवणार्थं न स्तनानभिमृशतीत्यर्थः॥

**यथोपलम्भं नित्ये कल्पे दोग्धि। ३।**

नित्ये दोहनकल्पे यथोपलम्भं योग्यः स्तनो हस्तप्राप्तस्तं दोग्धि न तु पूर्वापरादिनियम इत्यर्थः ॥

**पूर्ववदुपसृष्टां दुह्यमानां धाराघोषं च यजमानोऽनुमन्त्रयते । ४ ।**

पूर्ववत् सांनाय्यवत् ॥

**अस्तमिते दोग्धि । ५ ।**

अत्र दोहनस्यास्तमयात्परत्वनियमात्तत्पूर्वभाविनः समिन्धनादेः प्रागस्तमयादनुमतिः सूचिता भवति ॥

**अग्नरस्तमिते होतव्यम् । ६ ।**

अग्नः सद्यः । अस्तमितमात्रे दोहनादि प्रतिपद्य होमः कार्य इत्यर्थः । एतदेव स्तौति ॥

**समुद्रो वा एष यदहोरात्रस्तस्यैते गाधे तीर्थे यत्संधी तस्मात्संधौ होतव्यमिति शैलालिब्राह्मणं भवति । ७ ।**

संधी नाम सायंप्रातः सूर्यनक्षत्रयोरन्यतरास्तमयादारभ्यान्यतरोदयावधिकालौ । यथा संध्योपासनकालं नियच्छता गौतमेनोक्तं सज्योतिष्या ज्योतिषो दर्शनादिति । तौ समुद्रकल्पस्याहोरात्रस्य गाधे तीर्थे तस्मात्तत्रैव होतव्यम् । यथा गाध एव स्थितो न विपद्यते तथानयोरेव कालयोर्हुतं प्रतिष्ठितं भवति नान्यत्रेति भावः । संधी इति द्विवचनात्प्रातःसंधिरपि स्तुतो भवति ॥

**नक्षत्रं दृष्ट्वा प्रदोषे निशायां वा सायम् । ८ ।**

अग्निहोत्र



सायं चैते ऽपि त्रयो होमकालाः संधिना सह विकल्पन्ते। नक्षत्रं दृष्ट्वा प्रथमनक्षत्रदर्शने। प्रदोषे प्रथमयामे। निशायां द्वितीययामे॥

उषस्युपोदयं समयाविषित उदिते वा प्रातः।९।

प्रातरप्येते ससंधिकाश्चत्वारो होमकालाः। उषसि प्राच्यां जातप्रकाशायाम्। उपोदयं उदयात्पूर्वस्मिन्समये पूर्वतः प्रातःसंधिरित्युक्तं भवति। समयाविषित ईषदाविर्मण्डले सूर्ये। तत्र प्रदोषान्तो होमकालः संगवान्तः प्रातरित्याश्वलायनः॥ अथापदि कालान्तराणामप्यनुग्राहकं ब्राह्मणं दर्शयति॥

यदुदिते जुहोत्यग्निष्टोमं तेनावरुन्द्धे यन्मध्यंदिने जुहोत्युक्थ्यं तेनावरुन्द्धे यदपराह्णे जुहोति षोडशिनं तेनावरुन्द्धे यत्पूर्वरात्रे जुहोति प्रथमं तेन रात्रिपर्यायमाप्नोति यन्मध्यरात्रे जुहोति मध्यमं तेन रात्रिपर्यायमाप्नोति यदपररात्रे जुहोति जघन्यं तेन रात्रिपर्यायमाप्नोति।१०।

उदिते पूर्वाह्ण इत्यर्थः। रात्रिपर्यायैः क्रत्वधिकारादतिरात्रो लक्ष्यते। तदयमर्थः। एतेषु कालेषु जुह्वदेतैर्यज्ञविशेषैरिष्टवान्भवतीति। एवं च सर्वमहः सर्वा रात्रिश्च होमकाल इत्युक्तं भवति। तथा च भारद्वाजः आ सायमाहुतिकालात्प्रातराहुतिकालो नातीयादा प्रातराहुतिकालात्सायमाहुतिकाल इति। न चैवं पूर्वोक्तैः कालैः सहैषां तुल्यविकल्पता भवितव्येत्याह॥

**स न मन्येत सर्वेष्वेतेषु कालेषु होतव्यमापदि हुतमित्येव प्रतीयादिति विज्ञायते। ११।**

सो ऽयं प्रतिपत्ता नैवं मन्येत सर्वे ऽमी होमकाला इति। किं त्वापद्यगत्यामेषु कालेषु हुतमपि हुतं भवतीत्येतावदेव प्रतीयादित्यर्थः॥

**यो होमकालः सो ऽङ्गानाम्। १२।**

सर्वेष्वप्युक्तेषु कालभेदेषु यतमस्मिन्प्रधानं चिकीर्षति ततमस्मिन्नेवाङ्गान्यपि कर्तव्यानि न तु कालान्तरे। विहरणं तु वचनात्प्रागुदयास्तमयाभ्यां क्रियते॥

इति चतुर्थी कण्डिका।

इति प्रथमः पटलः॥

---

**पत्नीवदस्याग्निहोत्रं भवति। १।**

अग्निहोत्रं पत्नीवत्संनिहितपत्नीकं भवति। उत्तरसूत्रेणैव सिद्धे पत्नीवद्वचनमादरार्थम्। अस्येति वचनाद्यजमानस्यैव कर्मणि स्वाम्यं न पत्न्या इति ख्यापितं भवति तच्च दर्शितमेव प्राक्॥

**स्व आयतने पत्न्युपविशति। २।**

उक्तमायतनं पत्न्याः दर्शपूर्णमासयोर्दक्षिणत उदीच्युपविशतीति। पश्चाद्गार्हपत्यस्य प्राच्युपविशति तस्मात्पश्चात्प्राची पत्न्यन्वास्त इत्यनुवादात्॥

**अपरेणाहवनीयं दक्षिणातिक्रम्योपविश्य यजमानो विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमि मयि श्रद्धेत्यप आचामति। ३।**

आचामति भक्षयति॥

अग्निहोत्र



ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति। सत्यं त्वर्तेन परिषिञ्चामीति प्रातः। आहवनीयमग्रे ऽथ गार्हपत्यमथ दक्षिणाग्निमपि वा गार्हपत्यमाहवनीयं दक्षिणाग्निं यथा वाहिताः। ४।

सभ्यावसथ्ययोर्न परिषेचनं त्रयाणामनुक्रमणात्॥

यज्ञस्य संततिरसि यज्ञस्य त्वा संततिमनुसंतनोमीति गार्हपत्यात्प्रक्रम्य संततामुदकधारां स्रावयत्याहवनीयात्। ५।

मन्त्रस्यादिसंयोगो धारात्वात्॥

धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय भूतकृत स्थापोढं जन्यं भयमपोढाः सेना अभीत्वरीरिति गार्हपत्यादुदीचो ऽङ्गारान्निरूह्य व्यन्तान्गार्हपत्येन कृत्वा सगरा स्थेत्यभिमन्त्र्य जपत्यग्नय आदित्यं गृह्णाम्यह्ने रात्रिमिति सायम्। आदित्यायाग्निं गृह्णामि रात्र्या अहरिति प्रातः। ६।

व्यन्तान् गार्हपत्यस्याग्नेरन्ताद्विगतान्बहिरायतनाद्गतानित्यर्थः॥

इडायाः पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व। ये ग्राम्याः पशवो विश्वरूपा विरूपास्तेषां सप्ताना मिह रन्तिरस्तु। रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति तेष्वग्निहोत्रमधिश्रयति। ७।

दोहनस्थमपि पयो ऽग्निहोत्रस्थाल्यामानीय तामधिश्रयति ॥

इति पञ्चमी कण्डिका।

रेतो वा अग्निहोत्रम्। न सुशृतं कुर्याद्रेतः कूलयेन्नो ऽशृतमन्तरेवैव स्यात्। १।

सुशृतं चेत्कुर्याद्रेतः कूलयेत् दहेत्। नो अशृतं च भवति। यथान्तरा मध्य इव शृताशृतयोर्भवति तथैव स्यात् ॥

समुदन्तं होतव्यम्। २।

अन्तेषु समुद्गतः फेनो यस्य न मध्ये तत्समुदन्तम्। तावन्मात्रेण शृतं होतव्यमित्यर्थः ॥

उदन्तीकृत्य प्रतिषिच्यम्। ३।

यदोदन्तं भवति तदा प्रतिषिच्यं प्रतिषेक्यम्। उपरिष्टादब्बिन्दुक्षेपः प्रतिषेकः तत्प्रकारश्चानन्तरमेव वक्ष्यते ॥

अप्रतिषेक्यं स्यात्तेजस्कामस्य ब्रह्मवर्चसकामस्य पाप्मानं तुस्तूर्षमाणस्याथो सर्वेभ्यः कामेभ्यो ऽथो यः कामयेत वीरो म आजायेतेति। ४।

पाप्मानं तुस्तूर्षमाणस्येत्युकारो बाहुलकं तिस्तीर्षमाणस्येत्यर्थः। पाप्मानं जिघांसत इति यावत्। वीरः पुत्रः। यस्यैवं कामानुसारादनित्यं होमं वक्ष्यति। पयसि तु नित्यः प्रतिषेकः ॥

अग्नेरधिश्रितं वा। ५।

अग्निहोत्र



उदन्तीकृत्य प्रतिषेक्यमधिश्रितमात्रं वेत्यर्थः ॥

**अदब्धेन त्वा चक्षुषावेक्ष इति तृणेन ज्वलतावेक्षते । ६ ।**

तृणेनोपगृहीतेन हविरभिद्योतयन्नवेक्षते। अभिद्योतयति अभ्येवैनद्धारयतीति श्रुतेः। तृणाग्नेः प्रतिसर्गावचनादुत्सर्गः ॥

**दोहनसंक्षालनं स्रुव आनीय हरस्ते मा विनैषमिति तेन प्रतिषिञ्चत्यपां वा स्तोकेन । ७ ।**

दोहनं क्षाल्यते येन तदुदकं केवलं वोदकलेशं स्रुवेणाक्षिपति ॥

**उद्भव स्थोदहं प्रजया प्र पशुभिर्भूयासं हरस्ते मा विगादुद्यन्सुवर्गो लोकस्त्रिषु लोकेषु रोचयेति पुनरेवावेक्ष्यान्तरितं रक्षो ऽन्तरिता अरातयो ऽपहता व्यृद्धिरपहतं पापं कर्मापहतं पापस्य पापकृतः पापं कर्म यो नः पापं कर्म चिकीर्षति प्रत्यगेनमृच्छेति त्रिः पर्यग्नि कृत्वा घर्मो ऽसि रायस्पोषवनिरिहोर्जं दृंहेति वर्त्म कुर्वन्प्रागुद्वासयत्युदक् प्रागुदग्वा । ८ ।**

पुनरेवेति पूर्ववत्तृणेन ज्वलतेत्यर्थः। वर्त्म कुर्वन् कर्षन् ॥

**न वर्त्म करोतीत्येके । ९ ।**

उद्धृत्योद्वास्यत इत्यर्थः ॥

**इह प्रजां पशून्दृंहेति त्रिर्भूमौ प्रतिष्ठाप्य सुभूतकृत**

स्थ प्रत्यूढं जन्यं भयं प्रत्यूढाः सेना अभीत्वरीरिति गार्हपत्ये ऽङ्गारान्प्रत्यूह्य। १०।

इति षष्ठी कण्डिका।

देवस्य त्वा सवितुः प्रसव इति स्रुक्स्रुवमादाय प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्यारिष्टो यजमानः पत्नी चेति संमृश्य हिरण्ययष्टिरस्यमृतपलाशा स्रोता यज्ञानामित्यग्निहोत्रहवणीमभिमन्त्र्योमुन्नेष्यामि हव्यं देवेभ्यः पाप्मनो यजमानमिति सायमाह। ओमुन्नयामीति प्रातः। १।

अवरोप्याग्निहोत्रं यत्रोन्नयनमिच्छन्ति तत्र त्रिः प्रतिष्ठापयति। स्रुक्स्रुवयोरादानमन्त्रस्यावृत्तिः एकलिङ्गत्वात्। प्रतितपनसंमर्शने तु तन्त्रेण विभवत्वात्॥

हविर्देवानामसि मृत्योर्मे ऽभयं स्वस्ति मे ऽस्त्वभयं मे अस्त्वित्युपांशूक्त्वोमुन्नयेत्युच्चैरनुजानाति। अपचारे यजमानस्य स्वयमात्मानमनुजानीयात्। २।

अपचारो ऽसंनिधिः। अनेनैव न्यायेन स्वयंहोमे ऽप्यात्मानुज्ञा यजमानस्य व्याख्याता भवति॥

उन्नीयमान उभौ वाचं यच्छत आ होमात्। ३।

गतः॥

**न चाभिमीलते तिष्ठति च यजमानः। ४।**

नाभिमीलते न मीलयेच्चक्षुषा होमात्तिष्ठति च। स्वयंहोमे ऽपि तिष्ठन्नेवोन्नयति। आसीन इत्यपरं विबाधमान आर्त्विज्यं वलीय इति न्यायात्॥

**उन्नीत उपविशति। ५।**

गतः॥

**चतुरुन्नयति। ६।**

चतुरवत्तिन इति शेषः पञ्चमं जमदग्नीनामित्युत्तरत्रवचनात्॥

**यं कामयेत पुत्राणामयमृध्नुयादिति तं प्रति पूर्णमुन्नयेत्। ७।**

यजमानपुत्राणां मध्ये यतममध्वर्युः कामयेतायमृद्धिशीलः स्यादिति तं प्रति पूर्णमुन्नयेत्स कथितो भवति। तत्समानस्थानं स्रुवमितरेभ्यः पूर्णमुन्नयेदित्यर्थः॥

**यदि कामयेत ज्येष्ठतो ऽस्य प्रजार्धुका स्यादिति पूर्णं प्रथममुन्नयेत्तत ऊनतरमूनतरम्। कनिष्ठत इत्येतद्विपरीतम्। सर्वे समावद्वीर्या इति समम्। ८।**

अथ यदि ज्येष्ठोज्येष्ठ ऋद्धः स्यादिति कामयेत तदा प्रथमादारभ्य क्रमात्स्रुवान्ह्रासयेत्। यदि पुनः कनिष्ठःकनिष्ठ इति तदा प्रथमादारभ्य क्रमाद्वर्धयित्वात्यन्तं पूर्णमुन्नयेत्। अथ यदि सर्वे समवीर्या इति

तदा सर्वान्समानुन्नयेत् ॥ सर्वं चैते ऽध्वर्योर्यजमानाभिप्रायं विदुषः कामाः तत्काम्यत्वात्कामानां यथोक्तं याजमाने कामानां कामन-मिति ॥

यथोपलम्भं नित्ये कल्प उन्नयति । ९ ।

कामाभावे यथासंभवमुन्नयति ॥

इति सप्तमी कण्डिका ।

---

अग्नये च त्वा पृथिव्यै चोन्नयामीति प्रथमं वायवे च त्वान्तरिक्षाय चेति द्वितीयं सूर्याय च त्वा दिवे चेति तृतीयं चन्द्रमसे च त्वा नक्षत्रेभ्यश्चेति चतुर्थम् । १ ।

उन्नयतीत्यन्वयः । उत्तरतः स्थाल्याः स्रुचमासाद्येत्याश्वलायनः ॥

अद्भ्यस्त्वौषधीभ्यश्चेति पञ्चमं जमदग्नीनाम् । २ ।

गतः ॥

भूरिडा भुव इडा सुवरिडा करदिडा पृथगिडेति वा प्रतिमन्त्रम् । ३ ।

अत्रापि जमदग्नीनां पञ्चमो मन्त्रः ॥

पशून्मे यच्छेत्यपरेण गार्हपत्यमुन्नयनदेशे ऽभितरां वा सादयित्वा गार्हपत्ये हस्तं प्रताप्य संमृशति सजूर्देवैः सायंयावभिः सायंयावानो देवाः स्वस्ति संपारयन्तु

अग्निष्टोम



पशुभिः संपृचीय प्रजां दृंहेति सायम्। सजूर्देवैः प्रातर्यावभिः प्रातर्यावाणो देवाः स्वस्ति संपारयन्तु पशुभिः संपृचीय प्रजां दृंहेति प्रातः। ४।

अभितरामिति संनिकर्षे गार्हपत्यस्येत्यर्थः। संमृशति सुगतम्। स्थालीगतं चेति कल्पान्तरकाराः॥

दशहोत्रा चाभिमृश्य पालाशीं समिधं प्रादेशमात्रीमुपरि धारयन्गार्हपत्यस्य समयार्चिर्हरति। ५।

समयार्चिः अर्चिषः समीपेन। तथा समिधं स्रुचं चाध्यधि गार्हपत्यं हृत्वेत्याश्वलायनः॥

उर्वन्तरिक्षं वीहीत्युद्द्रवति। ६।

उद्द्रवति गच्छति॥

उद्द्रवन्दशहोतारं व्याचष्टे। ७।

व्याचष्टे जपति॥

समं प्राणैर्हरति। ८।

समं नासिकया हरतीत्यर्थः॥

स्वाहाग्नये वैश्वानरायेति मध्यदेशे नियच्छति। ९।

विहारस्य मध्यदेशे निगृह्णाति॥

वाताय त्वेत्युद्गृह्णाति। १०।

पुनः प्राणसममुद्गृह्णाति॥

उपप्रेत संयतध्वं मान्तर्गात भागिनं भागधेयात्सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्युप प्रत्नमुप भूर्भुवः सुवरायुर्मे यच्छेत्यपरेणाहवनीयं दर्भेषु सादयति। ११।

पूर्वत्रापरत्र च कूर्चे सादयतीति बौधायनः॥

इत्यष्टमी कण्डिका।

इति द्वितीयः पटलः॥

---

अत्र ब्राह्मणे रौद्रं गवि वायव्यमुपसृष्टमित्यादिनाग्निहोत्रद्रव्यस्योत्पत्तिप्रभृत्या होमादवस्थाविशेषाणामनेकदेवतासंबन्धप्रदर्शनेनाग्निहोत्रस्तुतिमुक्त्वा यदग्निमुद्धरति वसवस्तर्ह्यग्निरित्यादिनाहवनीये ऽपि तथा कृतम्। तदिदानीं सूत्रकारो दर्शयति॥

यस्याग्नावुद्ध्रियमाणे हूयते वसुषु हुतं भवति। निहितो धूपायञ्छेते रुद्रेषु। प्रथममिध्ममर्चिरालभत आदित्येषु। सर्व एव सर्वश इध्म आदीप्तो भवति विश्वेषु देवेषु। नितरामर्चिरुपावैति लोहिनीकेव भवतीन्द्रे हुतं भवति। अङ्गारा भवन्ति तेभ्यो ऽङ्गारेभ्यो ऽर्चिरुदेति प्रजापतावेव। शरो ऽङ्गारा अध्यूहन्ते ततो नीलोपकाशो ऽर्चिरुदेति ब्रह्मणि हुतं भवति। १।

अग्निहोत्र



यस्याग्नावुद्ध्रियमाणे हूयत इति यद्धोमार्थमुद्ध्रियते वसुषु हुतं भवतीत्युद्धरणावस्थास्तुतिः अन्यथोद्ध्रियमाणे होमासंभवात्। येस्त्वा-हवनीयायतनस्योपरि ध्रियमाण इति व्याख्यातं तैर्भूर्भुवः सुवरुद्ध्रियमाण इत्युद्ध्रियमाणमभिमन्त्रयते यस्याग्निरुद्धृत इत्याद्यपि तथा व्याख्यात-व्यम्। इत्यास्तां तावत्॥ अथोत्तरे ऽवस्थाविशेषाः। सो ऽयमुद्धृतो ऽग्निरायतने निहितः सधूमः शेते। ततः प्रथमं काष्ठमर्चिर्जहाति। ततः सर्व एवेध्मः सर्वप्रदेशेष्वादीप्तो भवति। ततो ऽर्चिरुपरिमन्दवे-गान्नीचैर्गच्छति लोहितेव च भवति। ततः काष्ठेभ्यो ऽङ्गारीभूतेभ्यो ऽर्चिरुत्तिष्ठति। ततो ऽङ्गाराः शरो ऽभ्यूहन्ते शरसा भस्मना सूक्ष्मेण संयोगमापद्यन्ते। ततश्च तेभ्यो नीलप्रकाशो ऽर्चिस्तोदेतीति॥ तत्र रुद्रेष्वादित्येष्वित्यादीनामपि हुतं भवतीत्यनुषङ्गः। तदुक्तं भवति यदेवमनेकविधावस्थाश्रयभूते ऽग्नौ हूयते तत्सर्वास्वेव देवतासु हुतं भवतीति। स्पष्टश्चायमर्थो ब्राह्मणे यथा वसुषु रुद्रेष्वादित्येष्वित्यादि॥ अथ होमार्थमवस्थाविधिं दर्शयति॥

**यदङ्गारेषु व्यवशान्तेषु लेलायदीव भाति तद्देवाना-मास्यं तस्मात्तथा होतव्यं यथास्ये ऽपिदधात्येवं तदिति विज्ञायते। २।**

अवस्थेयं दर्शपूर्णमासयोरेव व्याख्याता तत्रापि नित्या च। तयादरश्च दर्शितो ऽस्या देवतास्थलवचनात्॥

**विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमीति होष्य-न्नप उपस्पृश्य पालाशीं समिधमादधात्येकां द्वे तिस्रो वा। ३।**

होष्यन्नित्यनेन होष्यन्नुपस्पृशेदिति ब्राह्मणं व्याचष्टे सो ऽयं तत्र कालो विवक्षित इति। पुनःपालाशवचनात्सर्वाः पालाश्यः। तथा सर्वासामपि स्रुचा धारणमुक्तं हिरण्यकेशिना यथैकां द्वे तिस्रो वोपरिष्टात्स्रुग्दण्ड उपसंगृह्णोति॥

एषा ते अग्ने समिदिति। हिरण्मयं त्वा वंशं स्वर्गस्य लोकस्य संक्रमणं दधामीति द्वितीयाम्। रजतां त्वा हरितगर्भामग्निज्योतिषमक्षितिं कामदुघां स्वर्ग्यां स्वर्गाय लोकाय रात्रिमिष्टकामुपदधे तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति सायं तृतीयाम्। हरिणीं त्वा रजतगर्भां सूर्यज्योतिषमक्षितिं कामदुघां स्वर्ग्यां स्वर्गाय लोकायाहरिष्टकामुपदध इति प्रातः।४।

गतः॥

इति नवमी कण्डिका।

---

समिधमाधाय प्राण्यापान्य निमील्य वीक्ष्य हुत्वा ध्यायेद्यत्कामः स्यात्।१।

प्राणनमुच्छ्वासो ऽपाननं निश्वासः। यत्कामः स्याद्यजमानस्तदध्वर्युर्ध्यायेद्यथा पुत्रो ऽस्यास्त्वित्यादि॥

हुत्वा महदभिवीक्षते।२।

अग्निहोत्र



हुत्वा तदेव हुतं महद्भूयिष्ठमभिवीक्षेत इत्यर्थः । अथवा पूर्वाहुत्यर्थं प्रमादान्महद्धुत्वा तदेवाभिवीक्षेत प्रायश्चित्तार्थमित्यर्थः ॥

आदीप्तायां जुहोति श्यावायां वा यदा वा समतीतार्चिर्लेलायतीव । धूपायत्यां ग्रामकामस्य ज्वलत्यां ब्रह्मवर्चसकामस्याङ्गारेषु तेजस्कामस्य । ३ ।

समिधस्त्वाद्यास्तिस्रो ऽवस्था नित्याः शेषाः काम्याः । तत्र श्यावा श्यामीभूता । व्याख्यातः शेषः ॥

ह्रग्रङ्गुले मूलात्समिधमभि जुहोति । ४ ।

समिधमभि समिधि ॥

अभिक्रामं सायं जुहोत्यवक्रामं प्रातः । ५ ।

अग्निं प्रति क्रान्त्वा सायमग्नेः प्रतीपं क्रान्त्वा प्रातः ॥

उभयत्र वाभिक्रामम् । ६ ।

गतः ॥

भूर्भुवः सुवरिति होष्यन्नपति । ७ ।

होष्यन्निति पुनर्वचनमवश्यकर्तव्यैरप्यव्यवायार्थम् ॥

अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायमग्निहोत्रं जुहोति । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः । ८ ।

गतः ॥

संसृष्टहोमं वाग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति सायम्। सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातः। ९।

कुर्यादिति शेषः। संसृष्टेन मन्त्रेण होमः संसृष्टहोमः संसृष्टाभ्यां देवताभ्यां वा॥

इषे त्वेति सुङ्मुखादवाचीनं सायं लेपमवमार्ष्ट्यूर्जे त्वेति। ऊर्ध्वं प्रातः। १०।

अवाचीनमग्रादारभ्या बिलात्। तद्विपरीतमूर्ध्वम्। तण्डुलादिभिर्होमे पार्श्वतो मार्जनं सामर्थ्यात्॥

ओषधीभ्यस्त्वौषधीर्जिन्वेति बर्हिषि लेपं निमृज्य वर्चो मे यच्छेति सुचं सादयित्वाग्ने गृहपते मा मा संताप्सी-रात्मन्नमृतमधिषि प्रजा ज्योतिरदब्धेन त्वा चक्षुषा प्रतीक्ष इति गार्हपत्यं प्रतीक्ष्य भूर्भुवः सुवरित्युत्तरा-माहुतिं पुर्वार्धे समिधि जुहोति तूष्णीं वा। ११।

पूर्वार्धेऽग्नेः समिधि जुहोति॥

न समिदभिहोतवा इत्येके। १२।

न समिदभिहोतव्योत्तराहुतिः। तदापि पूर्वार्ध एव होमः॥

इति दशमी कण्डिका।

अग्निहोत्र



वर्षीयसीमुत्तरामाहुतिं हुत्वा भूयो भक्षायावशिनष्टि। १।

पूर्वाहुतेर्भूयस्युत्तराहुतिः ततो ऽपि भूयान् भक्षार्थः शेषः॥

यं कामयेत पापीयान्स्यादिति भूयस्तस्य पूर्वं हुत्वोत्तरं कनीयो जुहुयात्। २।

कनीयो ऽल्पीयः॥

हुत्वा स्रुचमुद्गृह्य रुद्र मृडानार्भव मृड धूर्त नमस्ते अस्तु पशुपते त्रायस्वैनमिति त्रिः स्रुचाग्निमुदञ्चमतिवल्गयति। ३।

हुत्वेत्येतदसंदेहार्थम्। असति हि तस्मिन्वचने उत्तरं कनीयो जुहुयात्स्रुचमुद्गृह्येत्यप्यन्वयः प्रतीयते। अतिवल्गयति कम्पयति ज्वालाम्॥

पूर्ववल्लेपमवमृज्य प्राचीनावीती स्वधा पितृभ्यः पितृञ्जिन्वेति दक्षिणेन वेदिं भूम्यां लेपं निमृज्य प्रजां मे यच्छेति स्रुचं सादयित्वा वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागामिति हुत्वाप उपस्पृश्यान्तर्वेदि स्रुक्। अथाङ्गुल्यापादाय पूषासीति लेपं प्राश्नात्यशब्दं कुर्वन्नतिहाय दतः। ४।

पूर्ववत् पूर्वाहुतिवत्। प्राचीनावीतिवचनमविस्मरणार्थं लेपमार्जनोत्तरकालार्थं वा। दक्षिणेन वेदिमिति वेदिदेशो लक्ष्यते वेद्यभावात्। हुत्वाप उपस्पृश्येति होष्यन्नप उपस्पृश्येत्यनेन व्याख्यातः। अन्तर्वेदि

स्रुगिति क्रियाविशेषणं यथान्तर्वेदि स्रुग्भवति न त्वात्ता तथेत्यर्थः। वाक्यभेदेन वा योजना अन्तर्वेदि स्रुग्भवति अथाङ्गुल्यापादायेति। अङ्गुल्या यया कयापि। अनामिकयेति तु कात्यायनः। अशब्दं कुर्वन्मुखशब्दमकुर्वन्। अतिहाय दतः अतीत्य दन्तान् ॥

अप आचम्यैवं पुनः प्राश्याचम्य बर्हिषोपयम्योदङ्ङा-वृत्योत्सृप्य गर्भेभ्यस्त्वा गर्भान्प्रीणीह्याग्नेयं हविः प्रज-ननं मे अस्तु दशवीरं सर्वगणं स्वस्तये। आत्मसनि प्रजासनि पशुसन्यभयसनि लोकसनि वृष्टिसनि। अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धेहि। रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहेत्युदग्दण्डया प्रा-ग्दण्डया वा स्रुचाचामति। ५।

अप आचम्येति प्राश्याचम्येति चापां भक्षणविधिः न तु शौचार्थाचम-नानुवाद इति केचित्। बर्हिषोपयम्य स्रुचाचामतीत्यन्वयः ॥

इत्येकादशी कण्डिका।

---

सौर्यं हविरिति प्रातर्मन्त्रं संनमति। १।

सौर्यं हविरित्येतत्सूर्यः प्रजामित्यस्यापि प्रदर्शनार्थम्। तथा सूर्यः प्रजामित्येव बौधायनः। संसृष्टहोमे चोभयं भवति यथाग्नेयं सौर्यं हविरिति ॥

द्विः स्रुचं निर्लिह्याद्भिः पूरयित्वोच्छिष्टभाजो जि-

अग्निहोत्र



न्वेति पराचीनं निनीयाचम्याग्रेणाहवनीयं दर्भैरग्निहोत्रहवणीं प्रक्षालयति । २ ।

पराचीनमनावृत्त्या सकृदेवापो निनीय तत आचामति न तु भक्षणानन्तरम् ॥

न मांसधौतस्य देवा भुञ्जत इति विज्ञायते । ३ ।

यद्धि पात्रं मांसधौतं हस्तधौतं भवति तस्मिन्संभृतं हविर्देवा न भुञ्जते। अतो दर्भैरेव प्रक्षालयेत्। अत एव वचनादन्यत्रापि हविर्धारणार्थानि पात्राणि न हस्तेन क्षालयितव्यानि ॥

अद्भिः स्रुचं पूरयित्वा सर्पेभ्यस्त्वा सर्पाञ्जिन्वेति प्रतिदिशं व्युत्सिच्य सर्पान्पिपीलिका जिन्व सर्पेतरजनाञ्जिन्व सर्पदेवजनाञ्जिन्वेति तिस्रः स्रुच उत्सिच्य चतुर्थीं पूरयित्वा पृथिव्याममृतं जुहोमि स्वाहेत्यपरेणाहवनीयं निनीय शेषं पत्न्या अञ्जलौ गृहेभ्यस्त्वा गृहाञ्जिन्वेति । ४ ।

निनयेदिति वक्ष्यमाणेन संबन्धः। विभागेनोर्ध्वंसेको व्युत्सेकः। स हस्तेन भवति स्रुचा दुःशकत्वात्। तथोर्ध्वायामपि दिशि भवति पूर्णपात्रव्युत्सेके तथादर्शनात्। स्रुचः स्रुक्परिमिता अपः। पत्न्यनेकत्वे शेषमञ्जलिषु विभज्य निनयति ॥

यदि पत्नी नानुष्याद्देवानां पत्नीभ्यो ऽमृतं जुहोमि स्वाहेति पत्न्यायतने निनयेत् । ५ ।

नानुख्यान्नान्वासीना स्यात् पूर्ववदनालम्भुकत्वादिना ॥

**अपरं स्रुच्यानीय विप्रुषां शान्तिरसीत्युन्नयनदेशे निनीयाहवनीये स्रुचं प्रताप्य हस्तो ऽवधेयो हस्तो वा प्रताप्य स्रुच्यवधेयः । ६ ।**

अपरमुदकमिति शेषः। स्रुग्घस्तयोः प्रतापने विकल्पः। अवधानं च तत्रोभयत्र हस्तस्यैव ॥

**तयोदगुद्दिशति सप्तर्षिभ्यस्त्वा सप्तर्षीञ्जिन्वेति । ७ ।**

तया तथा युक्तहस्तया स्रुचोदङ्मुखस्तमूष्माणं सप्तर्षीनुद्दिश्य मुञ्चति सप्तर्षिभ्यस्त्वेति ॥

इति द्वादशी कण्डिका ।

इति तृतीयः पटलः ॥

---

**अग्ने गृहपते परिषद्य जुषस्व स्वाहेति स्रुवेण गार्हपत्ये जुहोत्येकां द्वे तिस्रश्चतस्रो वा । १ ।**

आहुतीरिति शेषः। ताश्च शेषादेव स्थालीगताज्जुहोति द्रव्यान्तरावचनात्। तथैतस्मादेवाग्निहोत्रशेषादित्येव भारद्वाजः। ततश्च शेषकार्यत्वादासां न प्रयोजकत्वमिति सिद्धं भवति ॥

**अग्नये गृहपतये रयिपतये पुष्टिपतये कामायान्नाद्याय स्वाहेत्येतामेके समामनन्ति । २ ।**

गतः ॥

आग्निहोत्र



समभ्युच्चयवदेके। ३।

अस्मिन्पक्षे द्वाभ्यां सकृद्द्विर्वा होमः॥

अग्ने ऽदाभ्य परिषद्य जुषस्व स्वाहेति स्रुवेणान्वाहार्यपचने जुहोत्येकां द्वे तिस्रश्चतस्रो वा। ४।

गतः॥

अन्नपते ऽन्नस्य नो देहीति द्वितीयाम्। ५।

द्वित्वादिकल्पे द्वितीयामनेन मन्त्रेण जुहोति। ततो ऽन्याः पूर्वेण॥

अप्राश्य वापरयोर्जुहुयात्। ६।

आहवनीयहोमानन्तरमेव वापराग्न्योरपि जुहुयात्॥

आहवनीये होमो नापरयोः। ७।

इदमपि कल्पान्तरम्॥

यदाहवनीये हुत्वापरयोर्जुहुयाद्यथा स्वर्गाल्लोकात्प्रत्यवरोहेत्तादृक्तदिति विज्ञायते। ८।

किमसौ निन्दितत्वादनादरणीय एवापराग्निहोमः। नेत्याह॥

सर्वे वा एते होमार्था आधीयन्ते। चतस्रो गार्हपत्ये जुहोति चतस्रो ऽन्वाहार्यपचने द्वे आहवनीये। दश संपद्यन्ते। दशाक्षरा विराड्विराजा यज्ञः संमित इति बह्वृचब्राह्मणं भवति। ९।

एवं होमो ऽपि शाखान्तरे श्रूयते। अतो याथाकामी होमयोरिति भावः। वाक्क्रूच्चे लपराग्न्योस्ततस्ततस्तस्य आहुतयो नियताः॥

दीदिहि दीदिदासि दीदायेत्येषो ऽग्न्युपसमिन्धन आम्नातः। १०।

सर्वेषामग्नीनामेष एवोपसमिन्धने मन्त्रः॥

दीदिहि दीदिदासि दीदाय दीद्यासं दीद्यस्वेति वा प्रतिमन्त्रम्। ११।

पञ्च वैते मन्त्राः पञ्चानामेकैकस्य न स्युः॥

यथाहितास्तेनानुपूर्व्येणाहवनीयाद्वा प्रक्रम्य। १२।

उपसमिन्द्ध इति शेषः॥

अन्तर्वेद्यपो निनीय। १३।

गतः॥

इति त्रयोदशी कण्डिका।

---

पूर्ववदग्नीन्परिषिञ्चति। न धाराम्। १।

स्रावयतीति शेषः। अत एव प्रतिषेधाज्जानीमः परिषेचनाङ्गं धारेति। तेन बहुविदुद्धरणे ऽर्वाक् परिषेचनाद्भवति॥

अपिप्रेरग्ने स्वां तन्वमयाड् द्यावापृथिवी ऊर्जमस्मासु धेहीत्यग्निहोत्रस्थाल्यां तृणमङ्क्त्वानुप्रहरति। २।

अग्निहोत्र



अग्निहोत्रसाधनार्थाद्बर्हिष एकं तृणमादायाग्निहोत्रस्थाल्यामङ्क्त्वाहवनीये ऽनुप्रहरति ॥

सा ह्यग्निहोत्रस्य संस्थितिः । ३ ।

तृणप्रहारस्यैव स्तुतिरियम्। यथा दर्शपूर्णमासयोर्बर्हिःप्रहरणेन संस्था भवत्येवमग्निहोत्रस्यापीति ॥

न बर्हिरनुप्रहरेत्। असंस्थितो वा एष यज्ञो यदग्निहोत्रमित्युक्तम्। ४ ।

शाखान्तरे तु न बर्हिरनुप्रहरेदिति प्रकृत्यासंस्थित इत्यादिनानुप्रहरणं निन्दित्वा तस्मान्नानुप्रहृत्यमित्युपसंहृतम्। अतो वैकल्पिकं तृणप्रहरणमिति भावः ॥

अग्निहोत्रस्थालीं प्रक्षाल्याक्षितमक्षित्यै जुहोमि स्वाहेत्युन्नयनदेशे निनयति। अन्तर्वेदि वा। ५ ।

गतः ॥

वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागामस्मु श्रद्धेत्यप आचम्य यजमानो ऽन्तर्वेदि मार्जयते ऽन्नादाः स्थान्नादो भूयासं यशः स्थ यशस्वी भूयासं श्रद्धा स्थ श्रद्धिषीयेति। ६ ।

आचम्य भक्षयित्वा। अन्तर्वेदि मार्जयते वेद्यां हस्तं प्रसार्य तस्मिन्नप आसिञ्चति। यथाश्वलायनः हस्ते ऽप आसेचयते तन्मार्जनमिति ॥

आपो ह स्लेष्म प्रथमं संबभूव येन धृतो वरुणो येन

मिचः। येनेन्द्रं देवा अभ्यषिञ्चन्त राज्याय तेनाहं मामभिषिञ्चामि वर्चस इति शिरस्यप आनयते।७।

अनयापः शिरस्यानयते चावभृथार्थम्। तथा च श्रुतिः अपो निनयत्यवभृथस्यैव रूपमकरिति। अथाग्निहोत्रे काम्यान्कल्पानाह॥

द्वयोः पयसा पशुकामस्य जुहुयात्।८।

द्वयोर्गवोरिति शेषः॥

अग्निहोत्रस्थाल्या पूर्वां दोग्धि। दोहनेनोत्तराम्।९।

पृथगुभाभ्यामुभे दुह्यान्न तु पूर्ववत्समुच्चिताभ्याम्॥

अधिश्रित्य पूर्वमुत्तरमानयति।१०।

पूर्वं दुग्धमग्निहोत्रस्थालीगतम्। पूर्वमधिश्रित्य तस्मिन्नुत्तरं दुग्धमानयति॥

यस्य रुद्रः पशूञ्छमायेतैतयैवावृता द्वयोः पयसा सायंप्रातर्जुहुयात्।११।

रुद्रः ज्वरः पशून् शमायेत शमयेत् हन्यात्। एतयैवावृता उक्तेन दोहप्रकारेण॥

तच्चेदतिहन्यात्सजूर्जातवेदो दिव आ पृथिव्या अस्य हविषो घृतस्य वीहि स्वाहेति सायंप्रातराज्येन जुहुयात्।१२।

सायंप्रातर्हुतमतीत्य पुनश्चेद्रुद्रो हन्यात्ततः सायंप्रातराज्येन हविषाग्नि-

अग्निहोत्र



होत्रं जुहुयात्। सजूरिति मन्त्रेण पूर्वाहुतिः। जातवेदसं हविरिति शेषः॥

अनारमत्यग्ने दुःशीर्ततनो जुषस्व स्वाहेति द्वादशाहमाज्येन हुत्वा तत ऊर्ध्वं न हृत्सेत्। १३।

पुनरप्यविरमति रुद्रे द्वादशाहमनेन मन्त्रेणाज्येनैव जुहुयात्। ततः परमप्यनुपरमे न हृत्सेत् नाद्रियेत कर्म तावतैव कृतेन स्वयमारंस्यति। न चेदारंस्यति प्रबलादृष्टप्रयुक्तत्वान्नैतादृशेन कर्मणा सौम्यकारमण इत्यालोच्यानुगुणमारभेतेति भावः। न च कर्मानर्थक्यं भवान्तरे ऽपि फलदानोपपत्तेः॥

इति चतुर्दशी कण्डिका।

---

पयसा पशुकामस्य जुहुयाद्दध्नेन्द्रियकामस्य यवाग्वा ग्रामकामस्यौदनेनान्नाद्यकामस्य तण्डुलैरोजस्कामस्य। बलकामस्येत्येके। मांसेन यशस्कामस्य सोमेन ब्रह्मवर्चसकामस्याज्येन तेजस्कामस्य। १।

पयसो नित्यस्यैव सति कामे फलवचनम्। अन्ये सर्वे गुणकामा इति शेषः॥

प्रतिषेकं यवागूं श्रपयति। २।

यवागूं श्रपयंस्तूष्णीमुदकेन प्रतिषिच्य श्रपयति॥

**शृतां यजुषा प्रतिषिञ्चति । ३ ।**

ततः शृतां सतीं पुनर्यजुषा हरस्ते मा विनैषमित्यनेन प्रतिषिञ्च-तीत्यर्थः ॥

**एवं मांसम् । ४ ।**

गतः ॥

**नाज्यं प्रतिषिञ्चति हरस्ते मा विनैषमिति । द्वे दर्भाग्रे प्रत्यस्यत्येकं वा । ५ ।**

आज्यं न प्रतिषिञ्चति तत्स्थाने तु दर्भाग्रे प्रत्यस्यति ॥

**न दध्यधिश्रयति । शृतं हि तन्न प्रतिषिञ्चति प्रतिषिक्तं हि तदातञ्चनेनेति विज्ञायते । ६ ।**

गतः ॥

**एवं तण्डुलानोदनं सोमं च । ७ ।**

एवं नाधिश्रयति न प्रतिषिञ्चतीत्यर्थः । अधिश्रयणप्रतिषेधादेवाप्रति-षेके सिद्धे पुनस्तत्प्रतिषेधात्ततोऽन्येषां अपणसहभुवां ज्वलतावेक्षणा-दीनामनिवृत्तिः । तथा च दध्यादि प्रकृत्य भारद्वाजः यदन्यदधिश्र-यणात्प्रतिषेचनादि सर्वं तत्क्रियत इति ॥

**आज्येन तण्डुलैरोदनेन सोमेन वा जुहुयाद्यस्या-प्रतिषेक्यं स्यात् । ८ ।**

यस्य तेजस्कामादेरप्रतिषेक उक्तः स एतेषामप्रतिषेक्याणामन्यतमेनैव

अग्निहोत्र



जुहुयान्न तु पयोयवागवादिना प्रतिषेक्येण। तत्र त्वादिगुणकामा न भवन्ति ॥

**आज्येन तेजस्कामः संवत्सरं जुहुयाद्द्वादशाहं वा।९।**

फलवैषम्यं तु कालयोः कर्मवैषम्यादनुसंधातव्यम् ॥

**न राजन्यस्य जुहुयात्।१०।**

राजन्यस्याग्निहोत्रनिषेधे ऽपि गतश्रीत्वादाहवनीयो नित्यो धार्यते ॥

**होमकाले गृहेभ्यो ब्राह्मणायान्नं प्रहिणुयात्तेनो हैवास्य हुतं भवति।११।**

गृहेभ्य इत्यनेन गृहे पाक्यतामन्नस्य दर्शयति। होमकाले गृहेभ्यो ऽपाकृष्यान्नं ब्राह्मणाय प्रहिणुयात् प्रदिशेत्। उ हेति निपातसमुदायः प्रसिद्धौ। तेनैवास्य हुतं भवति स होमप्रत्याम्नाय इत्यर्थः ॥

**नित्यमग्न्युपस्थानं वाचयितव्यः।१२।**

अग्न्युपस्थानं तु मन्त्रमध्वर्युणा नित्यं कालेकाले वाचयितव्यः ॥

**यो वा सोमयाजी सत्यवादी तस्य जुहुयात्।१३।**

य एवमुभयगुणो राजन्यस्तस्य जुहुयाद्वा। अथाग्निहोत्रस्य कर्तृविकल्पानाह ॥

**अहरहर्यजमानः स्वयमग्निहोत्रं जुहुयात्।१४।**

अहरहर्नित्यं यजमानः स्वयं जुहुयात् ॥

**पर्वणि वा। १५।**

पर्वणि वा स्वयं जुहुयात्। अपर्वणि तु वक्ष्यमाणो ब्रह्मचार्यादिरित्यर्थः। तथा चाश्वलायनः स्वयं पर्वणि जुहुयादृत्विजामेक इतरं कालमिति। पर्वणि स्वयं जुहुयादपर्वणि त्वनियम इत्यपरम्। तथा च कात्यायनः स्वयं वा जुहुयादुपवसथे नियम इति॥

**ब्रह्मचारी वा जुहुयाद्ब्रह्मणा हि स परिक्रीतो भवति। क्षीरहोता वा जुहुयाद्धनेन हि स परिक्रीतो भवतीति बह्वृचब्राह्मणम्। १६।**

ब्रह्मचार्यत्रान्तेवासी गृह्यते ब्रह्मणा हि स परिक्रीत इति लिङ्गात्। बौधायनस्त्वाह पुत्रो ऽन्तेवासी वेति। यो ऽग्न्याधेय एवर्त्विक्त्वेन परिगृहीतः स क्षीरहोता धनेन हि स परिक्रीत इति लिङ्गात्। हारीतस्त्वाह यो ऽस्याग्नीनाधत्ते स क्षीरहोतेति। इयमप्येतद्युक्तमाश्वलायनके यथा ऋत्विजामेक इतरं कालमन्तेवासी वेति। तयोरन्यतरो जुहुयात्॥ अपर्वण्यपीत्यपरं अविशेषाच्छाखान्तरीयविधित्वाच्च। तत्र प्रथमो वाशब्दो वैचित्र्यार्थो यजमानेन सह विकल्पार्थो वा॥

इति पञ्चदशी कण्डिका।

इति चतुर्थः पटलः॥

---

**अग्न्युपस्थानं व्याख्यास्यामः। १।**

अधिकारप्रदर्शनं मुखग्रहणार्थं अग्न्युपस्थानवदत्र समिध इत्यादौ विशिष्टकर्मसंप्रत्ययार्थं च॥

अग्निहोत्र : अग्न्युपस्थानम्



उपतिष्ठत इति चोद्यमान आहवनीयमेवोपतिष्ठेत। वचनादन्यम्। २।

अस्मिन्नधिकारे अविशेषितायामुपस्थानचोदनायामाहवनीयमेवोपतिष्ठेत। वचनात्त्वन्यं गार्हपत्यादिकम् ॥

उत्तरामाहुतिमुपोत्थाय कवातिर्यङ्ङिवेोपतिष्ठेत। ३।

उत्तरामाहुतिमुपोत्थाय उत्तरामाहुतिं प्रत्याहवनीयसमीप उत्थायेत्यर्थः। कवातिर्यङ्ङीषत्तिर्यङ्मुखः सन्नग्निं प्रत्यपीषदभिमुखः स्थित इति यावत्। अत्रोपोत्थानवचनादन्यत्रासीनस्योपस्थानविधावासीन एवोपतिष्ठते ॥

उपप्रयन्तो अध्वरमिति षड्भिः। ४।

आहवनीयमुपतिष्ठत इति शेषः ॥

अग्नीषोमाविमं सु म इति सप्तम्या पूर्वपक्षे। ऐन्द्राग्न्या सप्तम्यापरपक्षे। ५।

ऐन्द्राग्न्या उभा वामिन्द्राग्नी इत्यनया प्रकरणात्। तत उभा वामिन्द्राग्नी इत्यैन्द्राग्नीत्येव सत्याषाढः। तस्मात्पूर्वासु षट्सु पठिता सैव पुनरावर्तनीया ॥

दधिक्राव्णो अकारिषमित्युभयत्राष्टम्या। ६।

उभयत्रोभयोः पक्षयोः ॥

ममाग्ने वर्चो विहवेष्वस्त्विति चतस्रः पुरस्तादग्नीषोमीयायाः पूर्वपक्षे। तथैन्द्राग्न्या अपरपक्षे। ७।

सप्तम्याश्च पुरस्ताच्चतस्र एता उपस्थानार्थाः स्युरित्यर्थः। जपार्था एता नोपस्थानार्था इति केचित्। तदयुक्तं उपस्थानाधिकारात् प्रातरवनेके चतस्रो ऽग्नीषोमाविमं सु म इत्येषेत्यत्रोपस्थानार्थताया व्यक्तत्वात् ममाग्ने वर्चो विहवेष्वस्त्विति चतस्रो जपित्वेति क्वचिद्विशेषप्रदर्शनाच्च। तथा चतसृभिरुपतिष्ठेतेत्येव सत्याषाढभारद्वाजौ ॥ तत्र त्वादितः षड्भ्यो ऽनन्तरमेतास्तस्र उक्त्वा ततो ऽग्नीषोमीयेन्द्राग्न्यौ पक्षवशादेकादश्यौ नियम्येते। ततो दधिक्राव्ण इति द्वादश्येत्यनुक्तिः पर्यनुयोज्या विचित्रत्वात्सूत्रक्रियायाः ॥

**अग्न आयूंषि पवस इति षड्भिः संवत्सरेसंवत्सरे सदा वा। ८।**

प्रतिसंवत्सरं सकृत्सकृदेताभिराहवनीयमुपतिष्ठते। सदाहरहर्वा ॥

**पवमानहवींषि वा संवत्सरेसंवत्सरे निर्वपेदेतासां स्थाने। ९।**

अथवा नैताभिरुपतिष्ठेत किं तु प्रत्याम्नायत्वेन संवत्सरे पवमानहवींषि समानतन्त्राणि निर्वपेत् ॥

**आयुर्दा अग्न इति सिद्धमा चित्रावसोः। १०।**

चित्रावसुशब्देन तदादिमन्त्रो लक्ष्यते। आयुर्दा इत्यादि चित्रावसो स्वस्ति ते पारमशीयेत्यन्तो मन्त्रः। पूर्वमन्त्रचतुष्टयं सिद्धमुपस्थाने। न तत्र कश्चिद्विशेष इत्यर्थः ॥

**चित्रश्चित्रावसुना सायमुपतिष्ठते। चित्रर्वाग्वसुना प्रातर्वाग्वसो स्वस्ति ते पारमशीय। ११।**

अग्निहोत्र : अग्न्युपस्थान



इतिकरणो ऽन्ते द्रष्टव्यः। इत्यर्वाग्वसुना प्रातरिति। अर्वाग्वसुवचनं च प्रसङ्गात्प्रातरवनेकार्थं न तस्मिन्नेवोपस्थाने प्रातर्विशेषप्रदर्शनार्थम्। सायंकाल एवास्य नियम इष्यमाणत्वात्। तथा अर्वाग्वसो स्वस्ति ते पारमशीयेति प्रातः प्रातरवनेक इत्येव भारद्वाजः॥

इन्धानास्त्वा शतं हिमा इत्युपस्थायेन्धानास्त्वा शतं हिमाः। अग्नेः समिदस्यभिशस्त्या मा पाहि सोमस्य समिदसि परस्पा म एधि यमस्य समिदसि मृत्योर्मा पाहीति चतस्रः समिध एकैकस्मिन्नाधाय सं त्वमग्ने सूर्यस्य वर्चसागथा इत्यनुवाकशेषेणोपस्थाय वयं सोम व्रते तव मनस्तनूषु बिभ्रतः प्रजावन्तो अशीमहीति मुखं विमृष्टे। १२।

इन्धानास्त्वेत्यनया सप्तपदयर्चा प्रथममाहवनीयमुपस्थाय पुनरनयापरैश्च त्रिभिर्यजुर्भिरेकैकत्राग्नौ चतस्रश्चतस्रः समिध आदध्यात्॥

इति षोडशी कण्डिका।

---

संपश्यामि प्रजा अहमिति गृहान्प्रेक्षते। १।

गृहमेव गृहाः॥

अम्भः स्थाम्भो वो भक्षीयेति गोष्ठमुपतिष्ठते। २।

गोसमूहो गोष्ठं न तु गोस्थानं अम्भो वो भक्षीयेति लिङ्गात्॥

रेवती रमध्वमित्यन्तराग्नी तिष्ठञ्जपति। ३।

गतः ॥

**संहितासि विश्वरूपीरिति वत्समभिमृशति । ४ ।**

वत्सं यं कंचिदभिमृशत्यविशेषात् । अग्निहोत्र्या वत्समित्येव तु बौधायनः ॥

**संहितासि विश्वरूपेति वत्साम् । ५ ।**

तेनैव वत्सामप्यभिमृशति । विश्वरूपेति तु विकारः ॥

**भुवनमसि सहस्रपोषं पुषेति वा वत्सम् । ६ ।**

वत्समिति वचनान्न वत्सायामयं मन्त्रः ॥

**उप त्वाग्ने दिवेदिव इति तिसृभिर्गायत्रीभिर्गार्हपत्यमुपतिष्ठते ऽग्ने त्वं नो अन्तम इति चतसृभिश्च द्विपदाभिः । ७ ।**

गायत्रीभिर्द्विपदाभिरिति ब्राह्मणानुकरणार्थं तद्व्याख्यानार्थं वा ॥

**स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मादित्येषा चतुर्थी भवति । ८ ।**

द्विपदेति शेषः ॥

**ऊर्जा वः पश्याम्यूर्जा मा पश्यतेति गृहान्प्रेक्षते पशून्वा । ९ ।**

गतः ॥

महि त्रीणामवो ऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्ष वरुणस्य ॥ नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशंसः ॥ ते हि पुत्रासो अदितेश्छर्दिर्यच्छन्त्यजस्रम् । वि दाशुषे वार्याणीति प्राजापत्येन तृचेनोपतिष्ठते । १० ।

आहवनीयमिति शेषः ॥

यं कामयेत स्वस्ति पुनरागच्छेदिति तमेताभिरन्वीक्षेत । स्वस्त्येव पुनरागच्छतीत्ययज्ञसंयुक्तः कल्पः । ११ ।

यो ऽन्यं प्रवत्स्यन्तं कामयेत अनामयमेवायं पुनरागच्छेदिति स तं प्रस्थितमेतेन तृचेनान्वीक्षेत स स्वस्त्येव पुनरागच्छति । सर्वार्थश्चायं कल्पो न यजमानस्यैवेत्यर्थः ॥

मा नः शंसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥ यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः ॥ परि ते दूडभो रथो ऽस्माँ अश्नोतु विश्वतः । येन रक्षसि दाशुषः । १२ ।

इति सप्तदशी कण्डिका ।

तत्सवितुर्वरेण्यं सोमानं स्वरणं मित्रस्य चर्षणीधृतः प्र स मित्र कदा चन स्तरीरसि कदा चन प्रयुच्छसि परि त्वाग्ने पुरं वयमित्युपस्थाय । १ ।

आहवनीयमिति शेषः ॥

निमृदो ऽसि न्यहं तं मृद्यासं यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इति दक्षिणस्य पदः पार्ष्ण्या निमृद्नीयाद्यदि पापीयसा स्पर्धेत। प्रभूरसि प्राहं तमभिभूयासं यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इति दक्षिणतः पदो निगृह्णीयाद्यदि सदृशेन। अभिभूरस्यभ्यहं तं भूयासं यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इति प्रपदेन यदि श्रेयसा ।२।

काम्यो ऽयं प्रयोगः। यदि पापीयसात्मनो हीनर्द्धिना स्पर्धेत न किलायमस्मत्तुल्यः स्यादिति तदा दक्षिणस्य पदः पार्ष्ण्या पश्चिमभागेन निमृद्नीयात् निपीडयेद्भूमिम्। यदि सदृशेन स्पर्धेत कथं किलायं मम तुल्यः संवृत्त इति दक्षिणस्य पदो दक्षिणतः दक्षिणेन भागेन निगृह्णीयात् निपीडयेत्। यदि श्रेयसा स्फीतर्द्धिना स्पर्धेत धिगयं मदधिकः पाप इति प्रपदेन पादाग्रेण निगृह्णीयात्। एवं कृते स स न्यक्कृतो भवतीति भावः ॥

पूषा मा पशुपाः पातु पूषा मा पथिपाः पातु पूषा माधिपाः पातु पूषा माधिपतिः पात्विति लोकानुपस्थाय प्राची दिगग्निर्देवताग्निं स ऋच्छतु यो मैतस्यै दिशो ऽभिदासति। दक्षिणा दिगिन्द्रो देवतेन्द्रं स ऋच्छतु यो मैतस्यै दिशो ऽभिदासति। प्रतीची दिक् सोमो देवता

अग्निहोत्र : अग्न्युपस्थान



सोमं स ऋच्छतु यो मैतस्यै दिशो ऽभिदासति। उदीची दिङ्मित्रावरुणौ देवता मित्रावरुणौ स ऋच्छतु यो मैतस्यै दिशो ऽभिदासति। ऊर्ध्वा दिग्बृहस्पतिर्देवता बृहस्पतिं स ऋच्छतु यो मैतस्यै दिशो ऽभिदासति। इयं दिगदितिर्देवतादितिं स ऋच्छतु यो मैतस्यै दिशो ऽभिदासतीति यथालिङ्गं दिश उपस्थाय। ३।

इत्यष्टादशी कण्डिका।

---

अग्नीनुपसमाधाय धर्मो मा धर्मणः पातु विधर्मो मा विधर्मणः पात्वायुश्च प्रायुश्च चक्षुश्च विचक्षुश्च प्राङ्चावाङ्चोरुग उरुगस्य ते वाचा वयं सं भक्तेन गमेमहीत्युपस्थायाग्न आयूंषि पवस इत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते। १।

लोकोपस्थानमेकैकस्यैकेन मन्त्रेणैकलिङ्गत्वात्। चतुर्थी विकल्पार्थं। उपसमाधानं काष्ठैरुपसमिन्धनम्। धर्मो मेत्याहवनीयस्योपस्थानम्॥

अग्ने गृहपत इति च। पुत्रस्य नाम गृह्णाति तामाशिषमाशासे तन्तव इत्यजातस्य। अमुष्मा इति जातस्य ।२।

व्याख्यातो ऽयं याजमाने॥

यत्किंचाग्निहोत्री कामयेत तदग्नोन्याचेत। उपैनं तन्नमतीति विज्ञायते। ३।

अग्न्युपस्थानान्ते यजमानो ऽभिमतमर्थमग्नीन्याचेत। सो ऽर्थो ऽस्य स्वयमागच्छति। एवमुपस्थानमुक्त्वा तस्यानित्यत्वमपि दर्शितं ब्राह्मणे। तदिदानीं दर्शयति ॥

उपस्थेयो ऽग्नी३र्नोपस्थेया३ इत्युक्तम्। ४।

ब्राह्मणे ऽप्युपस्थेयो ऽग्नीर्नोपस्थेया इति विचार्योपस्थानं तावन्निन्दित्वा तस्मान्नोपस्थेय इति निषिध्य तत उपस्थानं प्रशंसापुरःसरमुक्तं तस्मादुपस्थेय इति। तेनैवं विहितप्रतिषिद्धमुपस्थानं वैकल्पिकमिति भावः। अथोपस्थानकल्पे ऽपि सायमेवोपस्थानं न प्रातरित्युक्तं ब्राह्मणे। तदपि दर्शयति ॥

नक्तमुपतिष्ठते न प्रातः। ५।

एवं च यथोक्तमेतदुपस्थानं न प्रातःकाले लभ्यत इति सिद्धं भवति। अत एव चोत्तरस्मिन्कल्पे सायंप्रातरिति वक्ष्यति। सुव्यक्तं चैतत्सूत्रान्तरेषु यथैवमेव सायंसायमुपतिष्ठेतेत्यादि ॥ अथ शाखान्तराभिप्रायेण याजमानान्तरस्यापि प्रातर्निवृत्तिं दर्शयति ॥

न प्रातरग्निमुप चनावरोहेन्न प्रातराहिताग्निश्चन मन्येतेति वाजसनेयकम्। ६।

चनेति निपातो ऽप्यर्थे। प्रातरग्निमपि नोपगच्छेत्। आहिताग्निरस्मीत्यपि न मन्येत च। का कथा याजमानेष्वित्यर्थः ॥

भूर्भुवः सुवः सुप्रजाः प्रजया भूयासं सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैरित्येवोपतिष्ठेतेति वाजसनेयकम्। भर्तुं वः शकेयं श्रद्धा मे मा व्यागादिति वा। ७।

इमावपि कल्पौ सायंकालिकावेव उत्तरत्र सायंप्रातर्ग्रहणात् । एव-कारः सर्वेतरोपस्थानतन्त्रनिवृत्त्यर्थः ॥

**वात्सप्रेणैव सायंप्रातरुपतिष्ठेतेत्येके । ८ ।**

वात्सप्रं दिवस्परीत्यनुवाकः सूत्रब्राह्मणप्रसिद्धेः । तच्च सायंप्रातर्ग्रहणा-त्प्रातरपि प्रातरवनेकेन विकल्प्यते । पूर्ववदेवकारार्थः । यदा सायमु-पस्थानं वात्सप्रेण तदा प्रातरपि तेनैवेत्येवकारार्थ इत्यपरम् ॥

**गोषूक्तेनाश्वसूक्तेन वा । ९ ।**

गोषूक्तिना दृष्टं साम गोषूक्तं अश्वसूक्तिना दृष्टं सामाश्वसूक्तं तथा छन्दोगप्रसिद्धेः । तयोश्चाद्यमाग्नेयं सौर्यमितरत् । अतः सायंप्रातर्व्यव-तिष्ठेते । गोषूक्तमा गावो अग्मन्नित्यनुवाकशेषः । षकारश्छान्दसः । यदक्रन्द इत्यनुवाको ऽश्वसूक्तमित्यन्य ॥

इत्येकोनविंशी कण्डिका ।

इति पञ्चमः पटलः ॥

---

**प्रातरवनेकेन प्रातरुपस्थेयः । १ ।**

प्रातरवनेको नाम शाखान्तरीयमुपस्थानं प्रातःकालसंबन्धात् हस्ता-वनेजनसंबन्धाच्च । तेन प्रातरुपस्थेयो ऽग्निर्न सायम् ॥

**अधिश्रित उन्नीयमाने वा ममाग्ने वर्चो विहवेष्व-स्त्विति चतस्रो जपित्वापां पते यो ऽपां भागः स त एष**

प्रतिषिक्ता अरातयः प्रतिषिक्ता अरातयः प्रतिषिक्ता अरातय इति त्रिर्भूमौ प्रतिषिच्य कालाय वां जैत्रियाय वामौद्भेत्त्रियाय वामन्नाद्याय वामवनेनिजे सुकृताय वाम्। इदमहं दुरद्मन्यां निष्प्लावयामि भ्रातृव्याणां सपत्नानामहं भूयासमुत्तमः। अपां मेध्यादिवोदकमिति हस्तौ प्रक्षाल्य श्रियं धातर्मयि धेहि श्रियो माधिपतिं कुरु। विश्वामीशानो मघवेन्द्रो मा यशसा नयदिति जपित्वा*थर्व्युंष्टा देवजूता वीडु छपथजम्भनीः। आपो मलमिव प्राणिजन्नस्मत्सु शपथाँ अधी*त्याचम्येन्द्रियावतीमद्याहं वाचमुद्यासं दीर्घप्राणोऽच्छिन्नोऽदब्धो गोपाः। अजस्रं दैव्यं ज्योतिः सौपर्णं चक्षुः सुश्रुतौ कर्णौ देवश्रुतौ कर्णौ केशा बर्हिः शिखा प्रस्तरो यथास्थानं कल्पयध्वं शं हृदयायादो मा मा हासिष्टेति यथालिङ्गमङ्गानि संमृश्य। २।

इति विंशी कण्डिका।

---

वर्चोऽसि वर्चो मयि धेह्यायुष्कृदायुःपत्नी स्वधा वो गोप्त्यो मे स्थ गोपायत मा रक्षत मात्मसदो मे स्थ।

---

* thus according to the MSS., corrupted from Atharva Veda 2. 7. 1.

आग्निहोत्र : अग्न्युपस्थान



मा नः कश्चित्प्रघान्मा प्रमेष्मह्युप प्रत्नमुप भूर्भुवः सुव-रायुर्मे यच्छतेति सर्वानुपस्थायोत्तरेणानुवाकेनाहवनीयं घर्मा जठरान्नादं मामद्यास्मिञ्जने कुरुतमन्नादो ऽहम-द्यास्मिञ्जने भूयासमनन्नादः स यो ऽस्मान्द्वेष्टि। कवी मातरिश्वाना पशुमन्तं मामद्यास्मिञ्जने कुरुतं पशुमा-नहमद्यास्मिञ्जने भूयासमपशुः स यो ऽस्मान्द्वेष्टि। यमा-ङ्गिरसा यशस्विनं मामद्यास्मिञ्जने कुरुतं यशस्व्यहम-द्यास्मिञ्जने भूयासमयशाः स यो ऽस्मान्द्वेष्टि॥ अग्ने यो नो अन्ति शपति यश्च दूरे समानो अग्ने अरणो दुर-स्युः। वैश्वानरेण सयुजा सजोषास्तं प्रत्यञ्चं संदह जातवेदः॥ अग्ने यत्ते ऽर्चिस्तेन तं प्रत्यर्च यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो ऽग्ने यत्ते शोचिस्तेन तं प्रतिशोच यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो ऽग्ने यत्ते तपस्तेन तं प्रति-तप यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो ऽग्ने यत्ते हरस्तेन तं प्रतिहर यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो ऽग्ने यत्ते तेजस्तेन तं प्रतितितिग्धि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः। १।

इत्येकविंशी कण्डिका।

---

अग्ने रुचां पते नमस्ते रुचे रुचं मयि धेहि। अर्वा-ग्वसो स्वस्ति ते पारमशीयार्वाग्वसो स्वस्ति ते पारम-

शीयार्वाग्वसो स्वस्ति ते पारमशीय। तन्तुरसि ततो मा च्छित्था असौ स्वस्ति ते ऽस्त्वसौ स्वस्ति ते ऽस्त्वसौ स्वस्ति ते ऽस्त्विति पुत्राणां नामानि गृह्णाति त्रिस्त्रिरेकैकस्य। स्वस्ति वो ऽस्तु ये मामनुस्थ षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चापश्चौषधयश्चोर्क्च सूनृता च। यथा ह त्यद्वसवो गौर्यं चित्पदि षिताममुञ्चता यजत्राः। एवो ष्वस्मन्मुञ्चता व्यंहः प्र तार्यग्ने प्रतरं न आयुः॥ वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः। अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान्॥ अग्न आयूंषि पवसे दधिक्राव्णो अकारिषमिति द्वे ममाग्ने वर्चो विहवेष्वस्त्विति चतस्रो ऽग्नीषोमाविमं सु म इत्येषा। तत्सवितुर्वृणीमहे वयं देवस्य भोजनम्। श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि॥ अस्य हि स्वयशस्तरं सवितुः कच्चन प्रियम्। न मिनन्ति स्वराज्यम्। १।

इति द्वाविंशी कण्डिका।

---

अद्या नो देव सवितः प्रजावत्सावीः सौभगं। परा दुःष्वप्नियं सुव॥ विश्वानि देव सवितर्दुरितानि परा सुव। यद्भद्रं तन्न आ सुव॥ अनागसो अदितये वयं

अग्निहोत्र : अग्न्युपस्थान



देवस्य सवितुः सवे। विश्वा वामानि धीमहि ॥ स हि रत्नानि दाशुषे सुवाति सविता भगः। तं चित्रं भागमीमहे ॥ वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यं सावीः सौभगम्। वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥ दीक्षा तपो मनसो मातरिश्वा बृहस्पतिर्वाचो अस्याः स योनिः। वेदांसि विद्या मयि सन्तु चारवोऽग्नीषोमा यशो अस्मासु धत्तम् ॥ अग्निर्येन विराजति सोमो येन विराजति सूर्यो येन विराजति विराड् येन विराजति तेनाहं विश्वतस्परि विराज्यासमिहैकवृदित्युपस्थायाग्नेस्तृणान्यपचिनोति। तेजस्वी ह ब्रह्मवर्चसी भवतीति विज्ञायते।१।

प्रतिषिक्ता अरातय इति प्रत्यभ्यासं भूमावप आसिञ्चति। अभ्यस्तरूपनिर्देशः प्रतिप्रतिषेकं मन्त्रावृत्त्यर्थोऽसर्वमन्त्रावृत्त्यर्थश्च। हस्तावनेजनमदृष्टार्थम्। अग्रव्युष्टा इत्याचमनमपां भक्षणम्। इन्द्रियावतीमित्यास्यसंमर्शनं दीर्घप्राण इति नासिकायाः अजस्रमिति चक्षुषः सुश्रुताविति कर्णयोः केशा इति केशानां शिखेति शिखायाः यथास्थानमिति हृदयस्य। वर्चोऽसीत्यादिना सर्वानग्नीनुपस्थाय तत उत्तरामाहुतिमुपोत्थाय घर्मा जठरेत्यादिनेहैकवृदित्यन्तेनानुवाकेनाहवनीयमुपस्थायेति वक्ष्यमाणेन संबन्धः। तत्र त्रिर्वाग्वसुना प्रातरिति प्रागुक्ताभ्यासप्रदर्शनमर्वाग्वसो स्वस्तीति। तन्तुरसीत्येतत्पुत्रेपुत्रेऽभ्यावर्तते। तत्राभ्यस्तरूपनिर्देशः प्रतिषेकवद्व्याख्येयः। दधि-

क्राव्णो अकारिषमिति द्वे इति दधिक्राव्ण आ दधिक्रा इत्यनयो-र्ग्रहणम्। अग्नेस्तृणान्यपचिनोति यान्यग्नीनां परिस्तरणतृणानि तानि तेभ्यः स्वयमपोहति। नाध्वर्युः प्रकरणात्प्रातरवनेक एवायं नियमः। अन्यत्र त्वध्वर्युरेव परिसमूहनकाले ऽपोहति ॥

इति त्रयोविंशी कण्डिका।

इति षष्ठः पटलः ॥

---

प्रवत्स्यन्संप्रेष्यत्यग्नीन्समाधेहीति। १।

ग्रामान्तरे रात्रिवासः प्रवासः। तं करिष्यन्नग्नीन्समाधेहीति विहृत्य प्रज्वलयेत्यग्निहोत्रहोतारं परिकर्मिणं वा संप्रेष्यति ॥

ज्वलत उपतिष्ठते। २।

गतः ॥

पशून्नः शंस्य पाहि तान्नो गोपायास्माकं पुनरागमादित्याहवनीयम्। प्रजां नो नर्य पाहि तां नो गोपायास्माकं पुनरागमादिति गार्हपत्यम्। अन्नं नो बुध्न्य पाहि तन्नो गोपायास्माकं पुनरागमादित्यन्वाहार्यपचनम्। ३।

उपतिष्ठत इत्यनुषङ्गः ॥

अन्तराग्नी तिष्ठञ्जपतीमान्नो मित्रावरुणा गृहान्गो-

अग्निहोत्र : अग्न्युपस्थान



पायतं युवम्। अविनष्टानविहृतान्पूषैनानभिरक्षत्वा-स्माकं पुनरागमादिति। ४।

अग्नी इति पूर्ववत्॥

पूर्ववद्विराट्क्रमैरुपस्थायाश्नित्वा प्रवसथमेष्यन्नाहाग्नीन्समाधेहीति। ५।

पूर्ववदग्न्याधेयवत्। विराट्क्रमैरुपस्थाने कृते ऽश्नित्वा गमनकाले पुनरग्नीन्समाधेहीत्याह यद्यश्नित्वा गन्तुमिच्छति। अनश्नित्वा गमने तु पुनःसमाधानम्। उपस्थानमेवात्र कार्यं अविच्छेदात् आगतोपस्थाने तथादर्शनाच्च। अशनं पुनःसमाधानं पुनरुपस्थानमित्येतत्त्रयमपि नित्यमेवेत्यपरम्। पुनःसमाधाने विहृतानामेव ज्वलनं न पुनर्विहरणं एककर्म्यात्॥

ज्वलत उपतिष्ठते प्रजां मे नर्य पाहि तां मे गोपायास्माकं पुनरागमादिति गार्हपत्यम्। अन्नं मे बुध्य पाहि तन्मे गोपायास्माकं पुनरागमादित्यन्वाहार्यपचनम्। पशून्मे शंस्य पाहि तान्मे गोपायास्माकं पुनरागमादित्याहवनीयम्। ६।

गतः॥

मम नाम प्रथमं जातवेद इति च। ७।

यदाहवनीयमुपतिष्ठत इत्यन्वयः॥

वाग्यतो ऽभिप्रव्रजति मा प्रगाम पथो वयं मा

यज्ञादिन्द्र सोमिनः। मान्तःस्थुर्नो अरातयः। उद्स्माँ उत्तरान्नयाग्ने घृतेनाहुत। रायस्पोषेण संसृज प्रजया च बहून्कृधीति। ८।

मन्त्रान्ते विहारान्निर्गच्छति ॥

आराद्ग्निभ्यो वाचं विसृजते। ९।

आरात् दूरात् अच्छदिर्दर्श इति यावत्। तथोत्तरत्र व्यक्तं भविष्यति ॥

इति चतुर्विंशी कण्डिका।

---

प्रवसन्काले विहारमभिमुखोऽग्न्युपस्थानं जपति।१।

प्रवसन्नग्निहोत्रकाले यत्र विहारस्तां दिशमभिवीक्षमाणः सर्वानग्न्युपस्थानाधिकारविहितान्मन्त्राञ्जपतीत्यर्थः॥ तथा चाग्न्युपस्थानान्ते भारद्वाजः एवं विहितमेवास्य प्रवसतोऽप्यग्न्युपस्थानं भवत्येतावन्नाना यानि संसृज्य कर्माण्यध्वर्युस्तानि कुर्याद्यजमानः काले तां दिशमभिमुखो मन्त्राञ्जपेदिति ॥

इहैव सन्तस्तत्र सतो वो अग्नयः प्राणेन वाचा मनसा बिभर्मि। तिरो मा सन्तमायुर्मा प्रहासीज्ज्योतिषा वो वैश्वानरेणोपतिष्ठ इति यद्यनुपस्थाय प्रवसेद्देतयैवोपतिष्ठेत। २।

अग्निहोत्र ; अग्न्युपस्थान



अद्यैवागमिष्यामीति बुद्ध्या राजपुरुषनिर्बन्धादिना यदानुपस्थाय चेत्प्रवसेत्तदा तत्रस्थ एव मन्त्रेतयैवाग्नीनुपतिष्ठेत । एतयेत्येतदेतं मन्त्रमुक्त्वा भक्षयेदित्यादिवद्वैचित्र्यार्थम् । एवकारः सर्वेतरमन्त्रव्यावृत्त्यर्थः ॥ पूर्वेण सहैकग्रन्थमेके योजयन्ति प्रवसन्काले विहारमभिमुख इहैव सन्नित्येतदग्न्युपस्थानं जपति अनुपस्थाय प्रोषितोऽप्येतयैव प्रवासोपस्थानं कुर्यादिति । बौधायनस्त्वाह अथेदं परोक्षोपस्थानं भवतीहैव सन्नित्यादि ॥

समिधः कृत्वा प्रत्येति । ३ ।

प्रत्यागमनकाले समिधः पाणौ कृत्वा प्रत्येति ॥

यथा ह वा इतं पितरं प्रोषिवांसं पुत्राः प्रत्याधावन्त्येवं ह वा एतमग्नयः प्रत्याधावन्ति । स शकलान्दारूणि वाहरन्नेति यथैव तत्पुत्रेभ्य आहरन्नेति । तादृक्तदिति विज्ञायते । ४ ।

प्रोषिवांसं प्रोषितवन्तम् । इतं पुनरागतम् । स यजमानः । शकलान् भिन्नानि काष्ठानि । दारूणि तान्येवाभिन्नानि । यथैव तत्पुत्रेभ्य आहरन् यथा तत्र पिता पुत्रेभ्यः फलान्याहरन्नित्यर्थः । अर्थवादप्रदर्शनमादरार्थम् ॥

आराद्ग्निभ्यो वाचं यच्छति । ५ ।

पूर्ववद्व्याख्या ॥

यद्येनं राजा पिताचार्यो वान्तरेणाग्नीन्स्याच्छदिर्दर्शे नैनमाद्रियेत । ६ ।

यावति देशे ऽग्न्यगारस्य छदिर्दृश्येत तत्रैतमग्नीञ्शान्तरा यद्यप्यत्यन्तं पूज्या राजादयः संनिहिताः स्युस्तानपि न संभावयितुमाद्रियेत किं पुनरन्यान्। एवमत्र छदिर्दर्शे वाग्यमननियमाद्गमनदशायां वाग्विसर्गो ऽप्यच्छदिर्दर्श इत्यनुसंधातव्यम् ॥

विश्वदानीमाभरन्तो ऽनातुरेण मनसा। अग्ने मा ते प्रतिवेशा रिषाम ॥ नमस्ते अस्तु मीढुषे नमस्त उपसद्वने। अग्ने शुम्भस्व तन्वः सं मा रय्या सृजेत्यभ्यैति। ७।

अभ्यागच्छत्यग्न्यगारम् ॥

अग्नीन्समाधेहीति। ८।

संप्रेष्यतीति शेषः ॥

ज्वलत उपतिष्ठते। ९।

गतः ॥

पशून्नः शंस्याजूगुपस्तान्नः पुनर्देहीत्याहवनीयमभिप्राण्याग्ने सहस्राक्ष शतमूर्धञ्छतं ते प्राणाः सहस्रमपानाः। त्वं साहस्रस्य राय ईशिषे सहस्रधारस्य पयसः। तस्य नो रास्व तस्य ते भक्षीय तस्य ते वयं भूयिष्ठभाजो भूयास्मेत्याहवनीयम्। १०।

अभिप्राणनमुपर्युच्छ्वासः। उपतिष्ठत इत्यनुषङ्गः ॥

इति पञ्चविंशी कण्डिका।

अग्निहोत्र : आग्न्युपस्थान



प्रजां नो नर्याजूगुपस्तां नः पुनर्देहीति गार्हपत्यमभिप्राण्याग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासं सुगृहपतिर्मया त्वं गृहपतिना भूयाः। शतं हिमा द्वा यू राधांसीत्संपृञ्चानावसंपृञ्चानौ तन्व इति गार्हपत्यम्। १।

गतः ॥

अन्नं नो बुध्न्याजूगुपस्तन्नः पुनर्देहीत्यन्वाहार्यपचनमभिप्राण्यान्तराग्नी तिष्ठञ्जपति यथा प्रवत्स्यदुपस्थाने।२।

यथा प्रवत्स्यदुपस्थाने तथेमान्नो मित्रावरुणेति जपति ॥

अजूगुपतमभ्यराक्षीदिति मन्त्रं संनमति। ३।

तत्र 'तु गोपायतमभिरक्षतमिति शब्दावजूगुपतमभ्यराक्षीदिति विपरिणमयति'॥

मम नाम तव च जातवेद इति चतसृभिराहवनीयम्। ४।

उपतिष्ठत इति शेषः ॥

प्रजां मे नर्याजूगुपस्तां मे पुनर्देहीति गार्हपत्यमभ्यपान्यान्नं मे बुध्न्याजूगुपस्तन्मे पुनर्देहीत्यन्वाहार्यपचनमभ्यपान्य पशून्मे शंस्याजूगुपस्तान्मे पुनर्देहीत्याहवनीयमभ्यपान्य पूर्ववद्विराट्क्रमैरुपतिष्ठते। अजूगुप इति मन्त्रं संनमति। ५।

अभ्यपाननमग्नेरुपरि निश्वासः। विराट्क्रमेषु गोपायेत्यस्य अजूगुप इति मस्त्रसंनामः॥

अग्न्युपस्थानवदच समिधो दिशां चोपस्थानम्। ६।

अत्रास्मिन्काले अग्न्युपस्थानवदिन्धानास्त्वेत्यादिभिः समिध आदध्यात्। प्राची दिगित्यादिभिर्दिशश्चोपतिष्ठते॥

नवमीं चेदतिप्रवसेन्मित्रो जनान्यातयति प्रजानन्निति मैत्र्योपस्थाय मनो ज्योतिर्जुषतामित्याहुतिं जुहुयात्। ७।

अध्वर्युरिति शेषः जुहोतिचोदनत्वात् तदङ्गत्वाच्चोपस्थानस्य। तथा मनो ज्योतिर्जुषतामित्यध्वर्युराहुतिं जुहोतीत्येव सत्याषाढः। भारद्वाजश्चाह प्रोषित आहुतिं जुहोतीति। तथा पवित्रेष्टिं विधायाह सैषा संवत्सरमतिप्रवसत इति॥

समिध आहुतिमुपस्थानमित्येवमनुपूर्वाण्येके समामनन्ति। ८।

समिदाधानदिगुपस्थानयोर्मध्ये मनस्वत्याहुतिरिति शेषः। समानमन्यत्॥

इति षड्विंशी कण्डिका।

तदाहुर्नाग्निरुपस्थेयः कः श्रेयांसं विषुमं बोधयिष्यतीति। अभयंकराभयं मे कुरु स्वस्ति मे ऽस्त्वभयं मे

अग्निहोत्र : अग्न्युपस्थान



**अस्त्वित्येव ब्रूयात्। प्रवत्स्यदुपस्थानमागतोपस्थानं चाधिकृत्य वाजसनेयिनः समामनन्ति। १।**

तत्राहुर्ब्रह्मवादिनः प्रवत्स्यता चागतेन च नैवमग्निसमाधानादिना विधिनाग्निरुपस्थेयः। को हि श्रेयांसं सुप्तं मध्ये बोधयितुमर्हतीति। तस्मादप्रादुष्कृतमेवाग्निं प्रत्यभयंकराभयमित्येतं मन्त्रमेव ब्रूयादित्यध्याहारः। प्रवत्स्यदागतोपस्थाने उभे अप्यधिकृत्य वाजसनेयिनः समामनन्तीत्यर्थः॥ तथा च सत्याषाढः कः श्रेयांसं विषुप्तं बोधयिष्यतीति। प्रादुष्कृतानामेवोपस्थानं स्यादभयंकरेत्यादि। स त्वागतोपस्थाने संनामं च दर्शितवान् यथा अभयंकराभयं मे कार्षीरिति॥ तत्र चोपस्थानमधिकृत्येति वचनादुपस्थानादन्ये गमनप्रत्यागमनधर्मा वाग्यताभिप्रव्रजनसमिदाहरणादयस्तत्रतत्र भवन्त्येव॥ नवरात्रादिप्रवासे तु मनस्वत्याहुतिरागामिनी विहरणकाले भवति प्रादुष्करणप्रतिषेधात्॥

**नमो वो ऽस्तु प्रवत्स्यामि नमो वो ऽस्तु प्रावात्स्यमिति बह्वृचाः। २।**

बह्वृचास्तु द्वयोः प्रवत्स्यदागतोपस्थानयोर्द्वावेतौ मन्त्रौ समामनन्ति। समानमितरत्पूर्वेण। त्रिष्वपि चैतेषु कल्पेषु प्रवत्स्यदागतोपस्थानयोः सहशिष्टत्वाद्य एव कल्पः प्रवत्स्यदाश्रितः स एवागतेनाप्याश्रयणीय इत्यनुसंधातव्यम्॥

**गृहा मा बिभीत मा वेपिढ्वमूर्जं बिभ्रत एमसि। ऊर्जं बिभ्रद्वः सुवनिः सुमेधा गृहानैमि मनसा मोद**

मानः॥ येषामध्येति प्रवसन्येषु सौमनसो बहुः। गृहानुपह्वयामहे ते नो जानन्तु जानतः॥ उपहूता भूरिधनाः सखायः स्वादुसंमुदः। अरिष्टाः सर्वपूरुषा गृहा नः सन्तु सर्वदा॥ उपहूता इह गाव उपहूता अजावयः। अथो अन्नस्य कीलाल उपहूतो गृहेषु न इति गृहानभ्येति। ३।

अग्न्यगाराद्गृहान्प्रतिगच्छति यत्र पुत्रदाराः प्रवसन्ति॥

क्षेमाय वः शान्त्यै प्रपद्ये शिवं शग्मं शंयोः शंयो-रिति प्रविशति। ४।

गतः॥

ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानागां मनसा मोदमानः। इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशामीति प्रविश्य जपति। संविशन्वा। ५।

प्रविष्टमात्रे जपति गृहानागामिति लिङ्गात्। संविशन् निषीदन्वा सुमनाः संविशामीति लिङ्गादिति भावः। सत्याषाढस्त्वाह न तद-हरागतः कलहं करोतीति॥ एवं केवलस्य यजमानस्य प्रयाणमुक्तम्। अथ सपत्नीकस्य वच्यते। पत्न्यास्तु केवलायाः प्रवासो नेष्टः पत्नी-वदस्याग्निहोत्रं भवतीति वचनात् यदि यजमानः प्रवसेदित्यादि-वत्प्रवासानुज्ञानुपलम्भाच्च। किमिदानीं दैवात्पत्न्याः प्रवाससंभवे लुप्यत एवाग्निहोत्रम्। क एवमाह। गुणस्तु तस्य लुप्यते कर्माङ्गत्वा-

अग्निहोत्र : आज्ञानुपस्थान



त्पत्न्याः ॥ दर्शितं चैतदस्माभिर्दर्शपूर्णमासयोर्यां वा कश्चिदविद्यमाना-यामित्यत्र । मनुनाप्युक्तोऽयमर्थः यद्विनापि पत्न्याः कदाचिदग्नयो भवन्तीति । यथातिथिलक्षणमधिकृत्योक्तमुपस्थितं गृहे विद्याद्भार्या यत्राग्नयो ऽपि चेति ॥ यदा तु विनाग्निभिरुभौ प्रवसतः पत्नी यजमानश्च तदाग्निहोत्रलोपः पुनराधानं च स्मर्यते । यथा च छन्दोगपरिशिष्टे कात्यायनः

असमक्षं हि दंपत्योर्होतव्यं नर्त्विगादिना ।

द्वयोरप्यसमक्षं हि कृतमप्यकृतं भवेदिति ॥

तथा विहायाग्निं सभार्यश्चेत्सीमामुल्लङ्घ्य गच्छति ।

होमकालात्यये तस्य पुनराधानमिष्यत इति च ॥

यानि क्वचित्कानिचिद्गन्धर्ववाक्यानि पठ्यन्ते पत्न्याः प्रवासे नदीतरणे वा पुनराधेयं कार्यमित्येवंजातीयकानि तानि परीक्ष्यमाणानामाका-शपतितत्वादुपेक्षणीयानि ॥

इति सप्तविंशी कण्डिका ।

इति सप्तमः पटलः ॥

---

## सगृहः प्रयास्यन्वास्तोष्पतीयं जुहोति । १ ।

सगृहः सदारः । प्रयास्यन् प्रवासं गमिष्यन् वास्तोष्पतीयं वास्तोष्प-तिदेवत्यं होमं जुहोति ॥

## अहुते यानेषु भण्डान्यारोपयन्ति । २ ।

भण्डानि भाण्डानि । कुटुम्बार्थेषु द्रव्येषु भाण्डशब्दः प्रसिद्धः । तान्य-

ऊत एव वास्तोष्पतीये यानेषु शकटेष्वारोपयन्ति कर्मकराः यानि नेतुमिष्यन्त इति भावः। यथाह सत्याषाढः सर्वं भाण्डं यानेष्वा-दधाति यान्यन्वाजिहीर्षतीति ॥

न हीनमन्वाहरेयुः। ३।

यत्तत्र हीनमकृते ऽनारोपितं तद्धोमात्परं नान्वाहरेयुः। हीयेतैव तन्न तु नीयेतेत्यर्थः ॥

यद्यनोवाह्यं स्यात्पूर्वं तं प्रवहेयुरप वोद्धरेयुः। ४।

अथ यद्यनोभिर्वाह्यं भाण्डं नेतव्यं स्यात्तमर्थं यानेष्वारोप्य पूर्वमेव होमाद्गन्तव्यं देशं प्रति पुरुषा वहेयुः अपोद्धरेयुर्वा देशान्तरं गमयित्वा तत्रावस्थापयेयुः पश्चात्प्रस्थापयितुमित्यर्थः॥ अथापरा व्याख्या। तत्रारोपितेषु मध्ये यदि पुरुषादिभिर्दुर्वहमनसैव वाह्यं भाण्डं स्यात्तमर्थं पूर्वमेव प्रवहेयुः अनसा नयेयुः अपोद्धरेयुर्वा॥ यदनोवाह्यादन्यत्पु-रुषादिभिरपि शक्यनयनं तत्सर्वं पुरुषादयः सह नयेयुरिति ॥

यत्र संहिता रात्रीर्वसेत्पञ्च सप्त नव दश वा तत्प्रया-स्यञ्जुहुयात्। ५।

यत्र वास्तुनि वास्त्वन्तरवासेनाव्यवेताः संहिता एव पञ्च रात्रीर्वसे-त्तस्माद्वास्तुनः प्रयास्यन्षष्ठीप्रभृति जुहुयात्। न ततो ऽर्वाग्वास इत्यर्थः। एवं सप्तावररात्रिवासे ऽष्टमीप्रभृतीत्यादि द्रष्टव्यम् ॥

नवरात्रवास्तौ वा पुनरेत्यैकामुषित्वा प्रयास्यञ्जुहु-यात्। ६।

अग्निहोत्र: अग्न्युपस्थान



यस्तु क्वचिद्वास्तुनि नवरात्रमुषित्वा ततो ऽन्यत्र गच्छन्दशरात्रपर्या-प्ययणेनाकृतवास्तोष्पतीयो गत्वा पुनरपि तस्मिन्नेव नवरात्रवास्तुन्या-गत्यैकान्तरां रात्रिमुषित्वा ततस्तस्मात्प्रयास्यन्भवति सो ऽपि जुहुया-देव वास्तोष्पतीयम्। दशरात्रोषितत्वात्तत्रेति भावः। पूर्वत्र संहिता इति वचनादप्राप्तो होम इत्यारम्भः॥ केचित्तु प्रदर्शनार्थमेतदिष्ट्वा पञ्चावरादिकल्पेष्वपि चतूरात्रादित्रास्तौ पुनरेत्येत्यादि योजयन्ति। तदयुक्तं प्रदर्शनार्थत्वे प्रमाणाभावात् तथा सत्यष्टरात्रवास्तौ पुनरेत्य द्वे उषित्वेत्यादिप्रदर्शनप्रसङ्गाच्च॥

**दक्षिणो युक्तो भवति सव्यो ऽयुक्तः। अपि वाग्निष्ठस्य दक्षिणो युक्तः सव्यस्य योक्त्रं परिहृतम्। सर्वेषु वा युक्तेषु।७।**

त्रयो ऽमी होमकालविकल्पाः। यदा सर्वेषां भाण्डवाहिनामनसां दक्षिणो वाहो युक्तो भवत्ययुक्तः सव्यस्तदेत्येकः। यदाग्निष्ठस्य अग्नि-वाहिनो ऽनसो दक्षिणं युक्त्वा सव्यस्यापि योक्त्रपरिहरणमात्रं कृतं न तु योगो निर्वृत्तस्तदेति द्वितीयः। सर्वेषामनसां सर्वेषु युक्तेष्विति तृतीयः॥

**वास्तोष्पत इत्यनुद्रुत्योत्तरया गार्हपत्ये हुत्वावक्षाणानि संप्रक्षाप्य पृथगरणीष्वग्नीन्समारोपयते ये धार्यन्ते।८।**

अथ वास्तोष्पते प्रति जानीहीत्येतामनुद्रुत्य वास्तोष्पते शग्मयेत्ये-

तया जुहोति द्वाभ्यामेकाहुतिं जुहोतीत्यर्थः ॥ नात्राहवनीयः प्रणी-यते ऽर्थाभावात् । ततो धार्यमाणानामग्नीनामवक्षाणान्यर्धदग्धानि काष्ठानि संप्रक्षाप्य निःशेषं दाहयित्वा तान्पृथक्पृथगरणीष्वाधान-क्रमेण समारोपयते । अध्वर्युरिति शेषः जुहोतीनामाध्वर्यवत्वादु-त्तरविधौ यजमानग्रहणात् प्राजहितं समारोप्य शालामुखीयं द्वितीयं गतश्रिय इति षष्ठीनिर्देशाच्च ॥

उपर्यग्न्यावरणी धारयञ्जपत्ययं ते योनिर्ऋत्विय इति । ९ ।

प्रत्यग्न्यन्ये अरणी धारयञ्जपति ॥

अपि वा यजमान एवात्मन्समारोपयते । १० ।

आत्मन् आत्मनि ॥

या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मान-मच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि । यज्ञो भूत्वा यज्ञमासीद स्वां योनिं जातवेदो भुव आजायमानः स क्षय एहीति हस्तं प्रताप्य मुखायाहरते । ११ ।

तूष्णीं हस्तं प्रताप्य मन्त्रेण मुखं प्रत्याहरते यथा तद्गत ऊष्मान्तः-प्रविशति आरोहात्मात्मानमिति लिङ्गात् । धार्याग्न्यनेकत्वे ऽत्रापि पूर्ववदेव क्रमः ॥

वास उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् । आयुः प्रजां रयिमस्मासु धेह्यजस्रो

अग्निहोत्र : अग्न्युपस्थान



दीदिहि नो दुरोण इति लौकिके ऽग्नावुपावरोहयति। १२।

वासे रात्रिवासे। अथवा वसतिर्वासो रात्रिरिति पर्यायाः। यथोक्तमाश्वलायनेन द्वयोर्दुग्धेन वासे ऽग्निहोत्रं जुहुयादिति॥ तत्र प्रणयनकाल एवात्मसमारूढाग्नीँस्तेनैव क्रमेण लौकिके ऽग्नावुपावरोहयति मुखानिलेनार्पयति। मन्त्रोच्चारणमेवोपावरोहणस्यानुष्ठानार्थं इत्यपरम्॥

अरण्योर्वोपावरोह्य मन्थेत्। १३।

अनेन मन्त्रेण तस्यतस्याग्नेररण्योरुपावरोह्य ततस्ततो मन्थेत्॥

यदरण्योः समारूढः स्यान्निर्वर्तमान एतं मन्त्रं जपेत्। १४।

यदारण्योः समारूढस्तदा मथित्वा जातमात्रे ऽग्नावुपावरोहणमन्त्रं जपेत्। समारूढवचनस्यारणीस्थाग्निप्रदर्शनार्थत्वान्निर्वर्तमानत्वविशेषाच्चारण्योरुपावरूढस्य मन्थने ऽपि भवत्येव निर्वर्तमानजपः॥

इत्यष्टाविंशी कण्डिका।

इदं श्रेयो ऽवसानं यदागां स्योने मे द्यावापृथिवी अभूताम्। अनमीवाः प्रदिशः सन्तु मह्यम्। गोमद्धनवदश्ववत्पुरुषवद्धिरण्यवत्सुवीरवत्स्वाहेत्यवसिते जुहोति। १।

अवसिते गन्तव्यदेशप्राप्त्या पुनःस्वदेशप्राप्त्या वा प्रतिष्ठिते यजमाने विहृत्याहवनीयमिदं श्रेय इति जुहोति ॥ अत्राध्वन्यग्निहोत्रसमासमाह भारद्वाजः तस्माद्यायावरधर्मेणामयाव्यार्तो ऽध्वन्यापत्सु वार्धमासायाग्निहोत्रं जुहुयात् प्रतिपदि सायं चतुर्दश चतुर्गृहीतानुन्नयति एका समित्सकृद्धोमः सकृत्पाणिनिमार्जनमेवं प्रातरेतावान्विकारः शेषं प्रकृतिवदग्नीन्समारोपयते धारयते वौपवसथादौपवसथ्ये ऽहनि तु न धारयत्यूर्ध्वं द्वादशाहान्निर्मन्थ्यौपवसथादि कर्म प्रतिपद्यते यदि समारूढा भवन्तीति। तथा जननमरणयोरापत्स्वर्धमासायाग्निहोत्रं जुहोतीति च ॥

## नानिष्ट्वाग्रयणेनाहिताग्निर्नवस्याश्नीयात्। २।

उक्तः प्रवासः। अथाग्रयणमारभ्यते। यत्र नवसस्यानामग्रपाको देवान्नीयते तदाग्रयणं नाम नित्यं कर्म। तेनानिष्ट्वा सर्वमेव सस्यं नाश्नीयात्। यदप्ययज्ञियं कोद्रवादि तदपि नाश्नीयादेव नवस्येति सामान्यनिर्देशात् नवानां फलानां अनिष्टे ऽपीति लिङ्गाच्च ॥ आश्वलायनस्तु प्रागाग्रयणान्नवैर्हुताग्निहोत्रस्याशनमनुजानाति यदाह सस्यं नाश्नीयादग्निहोत्रमहुत्वा यदा वर्षस्य तृप्तः स्यात्तथाग्रयणेन यजेतेति ॥

## व्रीहीणां यवानां श्यामाकानामित्यग्रपाकस्य यजेत। ३।

यागस्तासामेवौषधीनामग्रपाकेन भवति नान्यासामित्यर्थः। अग्रे पच्यत इत्यग्रपाकः। प्रथमपक्वमन्नमिति यावत् ॥

## अमावास्यायां पौर्णमास्यां वा। ४।

अग्निहोत्र : अग्न्युपस्थान



यजेतेत्यनुषङ्गः । यदिष्ट्यादिविधिसिद्धस्यापि पर्वणो विधानमामावास्यतन्त्रत्वादाग्रयणस्यामावास्यैककालत्वभ्रमनिरासार्थम् । अमावास्यापौर्णमासीशब्दाभ्यां च प्रतिपत्पञ्चदश्योः संधिमानहोरात्र उच्यते तत्रैव तयोर्व्युत्पत्तेः ॥ अतः स एव तावद्विकृतीनां यागकालः । तास्तु प्रकृतिसंनिपाते तदनुरोधेन नेतव्याः यथोक्तं सत्याषाढभारद्वाजाभ्यां दर्शपूर्णमासयोर्विकृतेश्च संनिपाते तत्र दर्शपूर्णमासौ बलीयांसाविति । तत्रेयं विरोधगतिः यदा संधिमदहरुपवसथं करोति तदा विकृत्येष्ट्वा प्रकृतेरुपवासः यदा यजनीयं तदा प्रकृत्येष्ट्वा विकृत्या याग इति । सत्याषाढस्तु काम्येष्टीः प्रकृत्याह अमावास्यां पौर्णमासीं वा संस्थाप्य यजेतेति ॥ ऋतुमध्याग्रयणस्योत्तरत्र विधास्यति तेन च पर्वणोः समुच्चयः ॥

## आमावास्यं तन्त्रम् । ५ ।

ऐन्द्राग्नस्य मुख्यत्वादेव सिद्धे पूर्णमासविकाराणां हविषां भूयस्त्वात्पौर्णमासतन्त्रत्वशङ्कापनयनार्थ आरम्भः । तेन च भूयस्त्वान्मुख्यत्वं बलवदिति ज्ञापितं भवति ॥

## सप्तदश सामिधेन्यः । ६ ।

गतः ॥

## निर्वपणकाल आग्नेयमष्टाकपालं निर्वपति पुराणानां व्रीहीणाम् । ७ ।

व्रीहीणां संबन्धिनं व्रीहिमयमित्यर्थः ॥

यथा दान्तेनादान्तं संयुनक्ति तादृक्तदिति विज्ञायते। ८।

यथा दान्तेन बलीवर्देन सहाक्लान्तश्रमं बलीवर्दं योजयति कर्षकः शाकटिको वा तादृगेव नवानां हविषां पुराणेन सह निर्वपणमित्यर्थः। अत एवोपपत्तिवचनाद्दर्शपूर्णमासयोरन्वायात्यमान आग्रयणे पृथगाग्नेयं नेच्छन्ति तत्र दान्तादान्तयोरसंभवात् अनाग्रयणहविष्ट्वाच्चाग्नेयस्य। तत्र च लिङ्गं आग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थाभ्य इति। भारद्वाजस्तु स्वतन्त्राग्रयणे ऽप्याह अपि वा नवान्येव निर्वपेन्नाग्नेयमिति॥

येन यज्ञेनेत्सँत्कुर्यादेव तत्राग्नेयमष्टाकपालमिति विज्ञायते। ९।

न केवलमाग्रयणे किं तु सर्वत्रैवेष्टिमात्रे येनार्द्धुमिच्छति तत्राग्नेयं मुख्यं समानतन्त्रं च निर्वपेदित्यर्थः॥

नवानामितराण्यैन्द्राग्नं द्वादशकपालमाग्नेन्द्रं वा वैश्वदेवं पयसि चरुं सौम्यं श्यामाकं चरुं द्यावापृथिव्यमेककपालम्। १०।

श्यामाकमपि नवानामेव॥

पुरस्तात्सौम्याद्द्यावापृथिव्यमेके समामनन्ति। ११।

गतः॥

निरुप्तं हविरुपसन्नमप्रोक्षितं भवति। अथ पञ्चाज्यानीर्जुहोति शतायुधाय शतवीर्यायेति। १२।

निरुप्तं हविरित्यादि गुरुसूचकरणमाग्रयणं निरुप्यैता आहुतीर्जुहोतीति ब्राह्मणव्याचिख्यासयेति द्रष्टव्यम्। सूत्रं चैतद्याख्यातमाधाने। अग्न्या-नयो भद्रान्न इत्यन्ताः॥

पुरस्ताद्वा स्विष्टकृतः। १३।

नारिष्ठेभ्य उपरिष्टाज्जुहोत्यागन्तुत्वात्। आग्रयणं निरुप्येति यागानु-वादो ऽयं न निर्वापमात्रस्येति भावः॥

प्रोक्षादि कर्म प्रतिपद्यते। १४।

गतः॥

एकमुलूखलं मुसलं प्रतिबीजं वा। १५।

अत्रोलूखलमुसलमात्रग्रहणाद्द्वयोरेवायं नानात्वविकल्पो नान्येषाम्। अतः शूर्पादीन्येकैकानि भवन्ति। सत्याषाढस्त्वाह एकमुलूखलं मुसलं शूर्पं कृष्णाजिनं चेति। प्रदर्शनार्थमेतद्विभूनामित्यन्ये। भारद्वाजस्त्वाह त्रीणि शूर्पाणि प्रयुनक्ति त्रीण्युलूखलानि द्वे दृषदाविति॥ तत्र शूर्पैकत्वे प्रदेशभेदेन निर्वापोद्वापौ विवेकपरापवने तु सामर्थ्यात् पात्रान्तरे चैकैकस्य बीजस्य भवतः। तथा दृषद्यधिवापः पर्यायेण पात्रीकृष्णाजिनयोः प्रस्कन्दनं संवापस्य प्रदेशभेदेनेत्यादि द्रष्टव्यम्॥ बीजसंस्कारेषु संभवतां तन्त्रत्वमितरेषामावृत्तिश्च यथायथमनुसं-धातव्ये। तथाह भारद्वाजः आ तन्त्रिभावादेकैकं बीजमपवर्जये-दिति॥

सर्वेषु हविष्कृदवहननमन्त्रः। १६।

यदावहननार्थो हविष्कृन्मन्त्रः तदोलूखलैकत्वे च बीजेबीज आवर्तते। यदाह्वानार्थः तदाप्युलूखलैकत्व आवर्तते भिन्नकालत्वात् यथा वक्ष्यति हविष्कृदग्निगुपुरोऽनुवाक्यामनोतस्यावृत्तिर्भिन्नकालेष्विति। भिन्नकालता च तत्र कर्मणः काण्डानुसमयेनैवानुष्ठेयत्वात्। तथा च भारद्वाजः अपि वैकस्मिन्नुलूखले पूर्वापरमवहन्यात् तत्रावपनप्रभृतयो विवेचनान्ता मन्त्रा बीजंबीजमभ्यावर्तेरन्निति। यदा तूलूखलभेदस्तदा न हविष्कृदाह्वानमावर्तते कालाव्यवेतत्वात् कालाव्यवायस्य तत्र कर्मणां समानजातीयन्यायतः प्रवृत्तिसिद्धेः। तथा चैकैकस्मिन्कृष्णाजिने त्रीण्युलूखलान्यधिवर्तयतीति प्रकृत्य भारद्वाजः सर्वाणि हवींष्योप्य हविष्कृतमाह्वयति सर्वाण्यवहत्य दृषदुपले समाहन्त्यनुपूर्वं सर्वाणि हवींष्युद्वपति परापुनाति विविनक्तीति॥

## तुषोपवपनम्। १७।

तुषोपवपनमपि सर्वेषु बीजेषु भवत्युलूखलाभेदे भेदे च सर्वेषां तुषाणां प्रतिपाद्यत्वात्। तत्र सर्वे तुषाः समाहृत्यान्ततः प्रतिपादनीयाः विभुत्वात्। भारद्वाजस्त्वाह सर्वेषामन्ततस्तुषानुपवपतीति॥ प्रक्षालननिनयनमप्येतेनैव व्याख्यातम्॥

## उत्तममोप्य वाचं विसृजते। १८।

हविष्कृदावृत्तोक्तौ तूत्तमं बीजमोप्य यो हविष्कृत्तेन वाचं विसृजते न पूर्वेणेत्यर्थः। अथ पेषणादीनामपि पूर्ववत्तन्त्रावृत्तिभ्यां प्रवृत्तिः। चरुपुरोडाशधर्मास्तु यथायथं प्रत्येतव्याः॥

## एषो ऽन्येषां नानाबीजानां समवेतानां कल्पः। १९।

अन्येषामप्येकस्मिंस्तन्त्रे समवेतानां नानाबीजानामेकमुलूखलं मुसल-मित्यादिरेष एव कल्पः प्रयोगः ॥

**अलंकरणकाल आज्येनैककपालमभिपूरयति । २० ।**

अथोद्वासनकाले पात्र्यां क्रोडं कृत्वा तत्र प्रतिष्ठापितमेककपालमलं-करणकाले ऽलंकरणमन्त्रेणाभिपूरयति । यथा स निमज्जत्याज्ये तथा क्रोडं पूरयतीत्यर्थः ॥

**आविःपृष्ठं वा कृत्वासादयति । २१ ।**

अथवा तं आविःपृष्ठं प्रकाशपृष्ठं कृत्वानभिपूर्य ततो हवींष्यासादयती-त्यर्थः । तथा च व्यक्तं प्रदेशान्तरे यथा आविःपृष्ठं कृत्वा व्याहृतीभिर्ह-वींष्यासादयेदिति ॥ अथापरा व्याख्या। उद्वासनकाले पात्रान्तर उद्वा-सितमेककपालमाज्येनाभिपूर्याविःपृष्ठं वा कृत्वा तेनैव पात्रेण सह साद-यति । तथा च सत्याषाढः अथान्यस्मिन्पात्र एककपालमुद्वास्येत्यादि ॥

**प्रचरणकाल उद्धृत्य बर्हिषदं कृत्वा जुह्वामुपस्तीर्या-धायाशयमन्वानीयाभिघार्योपांशु प्रचरति । २२ ।**

प्रचरणकाले घृतादेककपालमुद्धृत्य बर्हिषि सन्नं कृत्वा ततो जुह्वामु-पस्तीर्य तत्र कृत्स्नं पुरोडाशं तूष्णीं निधाय यस्मिन्घृते आशयितस्त-दाशयमाज्यं पश्चादानीय सकृदभिघार्य उपांशु प्रचरति । द्विरभि-घारणमित्येके । तदयुक्तं आशयेनैव चतुरवत्ततासिद्धेः कृत्स्नं वैश्वानर-मवदाय द्विरभिघार्येत्यन्यत्रवचनाच्च ॥

इत्येकोनत्रिंशी कण्डिका ।

सर्वंहुतमपर्यावर्तयन्नृजुं प्रतिष्ठितं न हस्तेन जुहु-यात्। १।

सर्वंहुतमिति विस्पष्टार्थम्। अथवा यथा अस्कन्नः सर्वो हुतो भवति तथेत्यर्थः। अपर्यावर्तयन् यथा हूयमानो हुतस्च न पर्यावर्तेत तथा स्रुक्पार्श्वेन शनैश्श्यावयेत्॥

यदि हुतः पर्यावर्तेत स्रुचो ऽग्रेण कल्पयेत्। २।

कल्पयेत् यथास्थानं प्रतिष्ठापयेत्। हुत इति वचनादहुतस्य पर्या-वर्तने यद्येककपालः स्कन्देत्पर्यावर्तेतेत्यनेन विधिना कल्पयेत्॥

न पाणिना। ३।

सहकार्यन्तरापेचायामपि न पाणिना कल्पयेत्॥

वरे दत्ते कल्पयितव्यः। ४।

कल्पयिष्यमाणे अध्वर्यवे वरो देय इत्यर्थः॥

आधायाभिघार्य पुनर्होतव्य इत्येके। ५।

अथवा नैव कल्पयितव्यः किं तदुद्धृत्य स्रुच्याधायाभिघार्य पुनराश्रा-वणादिविधिना होतव्यः॥

अपि वा नैककपालं कुर्वीताज्येन द्यावापृथिवी यजेत। ६।

उभयोरपि पचयोर्वैशेषिकमेव हुतानुमन्त्रणं न प्राकृतमिति दर्शितं याजमाने॥

अग्निहोत्र : अग्न्युपस्थान



ये प्राचीनमेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं ददाति। वासः श्यामाके। ७।

एकाष्टका वक्ष्यते या माघ्याः पौर्णमास्या इति। तस्या अनिवृत्तायाः प्रागेव ये यजमानस्य गोषु वत्सा जाताः पूर्वस्मिन्संवत्सरे तेषां प्रथमजं ददाति। वासः श्यामाके चरौ निमित्तभूते। तयोश्चाभिमर्शनादावूहः प्रकृतावेव दर्शितः॥

भद्रान्नः श्रेयः समनैष्ट देवा इति यजमानभागं प्राश्नाति। ८।

प्रत्याम्नानात्प्राकृतमन्त्रो निवर्तते॥

सर्वेषां वा भक्षाणां मन्त्रवतां प्रत्याम्नायः स्यात्। ९।

न केवलं यजमानभागमात्रस्यैव किं तु ये यजमानस्यर्त्विजां वा मन्त्रवन्तो भक्षा इडाप्राशित्रादिविषयास्तेषां सर्वेषामपि मन्त्रस्यायं प्रत्याम्नायः स्यात्॥

अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः। शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिरिति श्यामाकानाम्। १०।

श्यामाकानां यजमानभागं पृथगनेन मन्त्रेण प्राश्नाति। सर्वेषां वेत्यादि पूर्ववत्॥

सिद्धमिष्टिः संतिष्ठते। ११।

गतः॥

**अपि वामावास्यायां पौर्णमास्यां वाग्रयणेष्टिमन्वायातयेत्। १२।**

अथापत्स्वनुग्रहार्थमाग्रयणस्यानुकल्पा उपदिश्यन्ते। तेषामुत्तरोत्तरकल्पस्यानुकल्पत्वं आपत्तारतम्यानुसारित्वं च बोद्धव्यम्॥ तत्रानापद्यपि क्वचित्क्वचिद्विषयसामर्थ्याद्व्यवतिष्ठते तंतं विषयविशेषं तत्रतत्र कल्पे प्रदर्शयिष्यामः। तत्र यः कदाचिदसंपदा पृथगाग्रयणेष्टिं निर्वप्तुं न शक्नुयात् स तां दर्शपूर्णमासयोरन्यतरत्रान्वायातयेत्। तदेकतन्त्राण्याग्रयणहवींष्यनुनिर्वपेदित्यर्थः। तत्र चाज्यान्यादि वैशेषिकमप्यविरोधात्कार्यम्। पुराणाग्नेयं तु नेच्छन्ति तच्च दर्शितमेव प्राक्॥ दक्षिणास्तु समुच्चीयन्ते वासः श्यामाके इति लिङ्गात्। भक्षणे तु नवस्य पृथक्कृतस्य भक्षणं मन्त्रभेदात्॥

**अपि वामावास्यां पौर्णमासीं वा नवैर्यजेत। १३।**

पूर्वकल्पस्याप्यशक्तौ दर्शपूर्णमासयोरन्यतरमेव नवैर्यजेत। तत्र तु सर्वस्यापि वैशेषिकस्य निवृत्तिः॥ अथ यत्राक्रिया दर्शपूर्णमासव्यतिरिक्तेष्टीनां यथा ताभ्यां संवत्सरमिष्ट्वा तत ऊर्ध्वमन्यानि कर्माणि कुरुत इति तत्रायमेव पक्षो व्यवतिष्ठते सामर्थ्यात्॥

**अपि वाग्निहोत्रीं व्रीहिस्तम्बं यवस्तम्बं वा ग्रासयित्वा तस्याः पयसा सायंप्रातर्जुहुयात्। १४।**

व्रीह्याग्रयणकाले सव्रीहिकं व्रीहिस्तम्बं यवाग्रयणकाले यवस्तम्बं च प्रातरेव गां ग्रासयित्वा भक्षणप्रपीनायास्तस्याः पयसा सायं जुहुयादपरेद्युः प्रातश्च। तत्र व्रीहियवनियमाच्छ्यामाकानां निवृत्तिः॥

अग्निहोत्र : अनुपस्थान



अथ यदा दर्शपूर्णमासयोरप्यक्रिया यथा संवत्सरमग्निहोत्रं हुत्वाथ दर्शपूर्णमासावारभत इति तदायं विधिरुत्तरो वा सामर्थ्यात् ॥

अपि वा नवानां यवाग्वा सायंप्रातर्जुहुयात् । १५ ।

पूर्वेणायं पक्षो व्याख्यातः तुल्यविकल्पस्य सर्वत्र ॥

अपि वा नवानां गार्हपत्ये स्थालीपाकं श्रपयित्वाहवनीये जुहुयादाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः । १६ ।

स्विष्टकृच्चतुर्थीभ्य इति वचनाच्छ्यामाकदेवतायाः सोमस्य निवृत्तिः । स्थालीपाक इति वचनाच्च पार्वणप्रकृतिको यजमानकर्तृकश्च । अथ यदा संवत्सरे पवमानहविषामुत्कर्षस्तदायमेव पक्षः सामर्थ्यात् ॥

अपि वा नवानां चतुःशरावमोदनं पक्त्वा चतुरो ब्राह्मणान्भोजयेत् । १७ ।

पुरुषाशनपर्याप्तग्राहिणा महता शरावेण चतुर्वारं निरुप्तमोदनं लौकिकेऽग्नौ पक्त्वा चतसृणामासां देवतानामर्थे चतुरो ब्राह्मणान्भोजयेत् । अथ यदोत्सृष्टाग्निर्यजमानस्तदायमेव पक्षः सामर्थ्यात् ॥

एवं यवैर्यजेत । १८ ।

वसन्ते यवानामग्रपाकेनाप्येवं व्रीह्याग्रयणस्य सानुकल्पस्यावृता यजेत ॥ तत्र त्वाह भारद्वाजः न यवानामाग्रयणं विद्यत इत्यौडुलोमिरिति । तथा अपि वाक्रिया यवेष्वित्याश्वलायनः ॥

तत्राग्नेयश्यामाकौ न भवतः । १९ ।

तत्र यवाग्रयणे पुराणाग्नेयश्यामाकचरू न भवतः ॥

य ऊर्ध्वमेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं ददाति ॥ एतमु त्यं मधुना संयुतं यवं सरस्वत्या अधि मनावचर्कृषुः । इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानव इति यजमानभागं प्राश्नाति ॥ सर्वेषां वा भक्षाणां मन्त्रवतां प्रत्याम्नायः स्यात् । २० ।

पूर्ववद्व्याख्या ॥

सिद्धमिष्टिः संतिष्ठते । २१ ।

गतः ॥

इति त्रिंशी कण्डिका ।

---

यदि नानातन्त्रां श्यामाकेष्टिं कुर्वीत श्यामाकानुद्धर्तवा इति संप्रेष्यति । १ ।

यो व्रीह्याग्रयणे श्यामाकस्तरुक्तः तं यदि पृथक्तन्त्रं कुर्वीत तदा वर्षासु श्यामाकसस्ये पक्वे सति श्यामाकानुद्धर्तवै उद्धार्याहरतेति कर्मकरान्यजमानः संप्रेष्यति । श्यामाकसस्य इत्यपि संप्रेषावयव इति न भ्रमितव्यं विपर्ययस्यैवोत्तरत्रव्यक्तत्वात् यथा वेणुयवेषु पक्वेषु वेणुयवानुद्धर्तवा इति संप्रेष्यतीति ॥

तस्याः सप्तदश सामिधेन्यः । २ ।

अग्निहोत्र : आग्न्युपस्थान



साप्तदश्यवचनमज्यान्यादेः सर्वस्यापि विशेषस्य प्रदर्शनार्थम्। तन्त्वं त्वस्याः पौर्णमासं अग्नीषोमीयविकारत्वात् ॥

सद्वन्तावाज्यभागौ। विराजौ संयाज्ये। ३।

सद्वन्तौ अस्तिधातुमन्तौ ॥

त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः। त्वया यज्ञं वितन्वते। सोम यास्ते मयोभुव इति सद्वन्तौ। प्रेद्धो अग्न इमो अग्न इति विराजौ। ४।

गतः ॥

वासो दक्षिणा दधिमन्थो मधुमन्थो मधुपर्को मधुग्लुन्थो बभ्रुर्वा पिङ्गलः। ५।

वाससः पुनरुपादानमुत्तरैर्विकल्पार्थम्। सर्पिरादिसंयुक्ताः सक्तवो मन्थः। स दध्ना संयुक्तो दधिमन्थः मधुना मधुमन्थः। मधुपर्कं गृह्ये व्याख्यास्यति। अनिस्रोतितमधुर्मधुकोशो मधुग्लुन्थः। मधुमिश्रं गुडमित्यन्ये। बभ्रुः कपिलः। पिङ्गलः पिङ्गाक्षः। एवं द्विरूपो गौर्वेत्यर्थः ॥

सिद्धमिष्टिः संतिष्ठते। ६।

गतः ॥

हरितयवशाकशमीधान्यानां नवानां फलानामनिष्टेऽपि प्राशने याथाकामी। ७।

पूर्वत्रानिष्ट्वाग्रयणेनेत्यनेन प्रागाग्रयणात्सर्वस्यापि नवस्याशनं प्रतिषि-

ह्नम्। तत्र केषांचिदशनमनेनाभ्यनुज्ञायते। हरितयवा नाम सस्यविशेषाः तथा शाकाः शमीधान्यानि कोशीधान्यानि। तेषां जम्ब्वादिफलानां च नवानामनिष्टे ऽप्याग्रयणे यथाकाम्यं भक्षणे भवति॥

**वेणुयवानामिष्टिमेके समामनन्ति। ८।**

वेणुयवैरप्याग्रयणं कैश्चिद्विधीयते॥

**वेणुयवेषु पक्वेषु वेणुयवानुद्धर्तवा इति संप्रेष्यति। ९।**

श्यामाकसंप्रैषेणायं व्याख्यातः॥

**तस्या एतदेव तन्त्रमेषा देवता। १०।**

यच्छ्यामाकेष्ट्यामुक्तं सप्तदशसामिधेन्यादि तदेवास्यास्तन्त्रं देवतापि। तत्रत्यः सोम एवेत्यर्थः॥

**आग्नेयी मैत्रावरुणी प्राजापत्या वा। ११।**

इष्टिरिति शेषः॥ अथ सर्वस्यैवाग्रयणस्य हौत्रे विकारमाह॥

**स प्रत्नवदिति द्वे धाय्ये चतस्र आज्यभागयोर्दश हविषां द्वे स्विष्टकृतः। १२।**

स प्रत्नवदिति पारुच्छेपस्यानुवाकस्यादितो द्वे धाय्ये भवतः। ततः परास्ततस्रो व्रीहियवाग्रयणयोराज्यभागार्था अनुवाक्यास्तास्वादितो द्वे आग्नेयस्य परे द्वे सौम्यस्य। श्यामाकेष्ट्यां तु सद्वन्ताविप्युक्तं याज्यास्तु जुषाणवत्य एवं सर्वत्र। परास्तु दश प्रधानहविषां याज्यानुवाक्याः तास्च यथालिङ्गं गृह्यन्ते न तु क्रमशः सौम्ययोः प्राथम्यात्। ततः परे द्वे संयाज्ये॥

अग्निहोत्र: अग्न्युपस्थान



व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेता यवेभ्यो दर्शपूर्णमासावेवं यवैरा व्रीहिभ्यो ऽपि वा व्रीहिभिरेवोभयत्रैते ह वै स्रूपचरतमा भवन्तीति बह्वृचब्राह्मणम्। १३।

दर्शपूर्णमासयोर्व्रीहीन्यवान्वेति व्रीहियवयोः सर्वकालं विकल्प उक्तः। इदानीं शाखान्तरीयो विनिवेशः पक्षे यवबाधश्च प्रदर्श्यते। व्रीह्याग्रयणेनेष्ट्वा व्रीहिभिरेव दर्शपूर्णमासौ यजेतायवाग्रयणात्। एवं यवाग्रयणादारभ्या व्रीह्याग्रयणाद्यवैः। अपि वा व्रीहिभिरेव यजेतोभयोः कालयोः। यत एते स्रूपचरतमाः सुखेनावहन्यन्ते पिष्यन्ते च न यववत् दुःखेन तस्माद्व्रीहिभिरेव नित्यं यजेत। दर्शपूर्णमासाविति वचनान्नाग्निहोत्रार्थेषु तण्डुलेष्वयं नियमः। दर्शपूर्णमासाभ्यामेव तद्विकाराश्च व्याख्याताः॥

वर्षासु श्यामाकैर्यजेत शरदि व्रीहिभिर्वसन्ते यवैर्यथर्तु वेणुयवैरिति विज्ञायत इति विज्ञायते। १४।

यदि नानातन्त्वा श्यामाकेष्टिस्तदानया वर्षासु यजेत। ततः शरदि केवलैर्व्रीहिभिः। समानतन्त्रत्वे तूभयैः शरदि। ततो वसन्ते यवैः। वेणुयवैस्तु यथर्तु यजेत। ते ह्यनियतकालनिष्पत्तयः यस्मिन्नेवर्तौ निष्पद्यन्ते तस्मिन्नेव यजेतेत्यर्थः॥

इत्येकत्रिंशी कण्डिका।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायामष्टमः पटलः।

इति षष्ठः प्रश्नः॥

# ओम् ॥

सर्वांल्लोकान्पशुबन्धयाज्यभिजयति । १ ।

अथ नित्यः पशुरारभ्यते । यस्मिन्कर्मणि यज्ञार्थं पशुर्बध्यते स पशुबन्धः तेनेष्टवान् पशुबन्धयाजी सर्वांल्लोकाञ्जयति । सर्वकामो दर्शपूर्णमासाविति वदाहारपृथक्त्वाभिप्रायं सर्वाभिजयवचनम् । सर्वेष्वपि लोकेषु यंयमेव लोकं प्रयोगभेदेन कामयते तंतमेवाभिजयति न कुतश्चित्प्रतिहन्यत इत्यर्थः । नित्यस्य चायं फलविधिः दर्शपूर्णमासवदेव वेदितव्यः । फलार्थवादो वा कर्मेरश्रवणात् यथोक्तं हिरण्यकेशिना क्रतावर्थं श्रूयमाणं यजमानः कामयते यानि कामयति आवयेदिति तयार्थवादा इतर इति च ॥

तेन यक्ष्यमाणो ऽमावास्यायां पौर्णमास्यां वा षड्ढोतारं मनसानुद्रुत्याहवनीये सग्रहं जुहोति सूर्यं ते चक्षुरिति । २ ।

अमावास्यायां पौर्णमास्यां वा तेन यक्ष्यमाण इत्यन्वयः यदीष्ट्यादिविधिना तयोरेव यागविधानात् । तेन द्व्यहकालत्वे पशोश्चतुर्दश्यां हूयते षड्ढोता । तच्च प्रकृत्यविरोधगतिराग्रयण एव दर्शिता ॥ नन्वेवं यदीष्ट्यादिविधिनैव सिद्धेः किमर्थं पर्वणोर्वचनम् । परमतनिरासार्थमिति ब्रूयात् यथाह बौधायनः आमावास्येन हविषेष्ट्वा नक्षत्रे वेति ।

अथवा सांनाय्यविकारत्वात्पशोरमावास्यामेवास्य कालं मा मंस्तेत्यारम्भः। सांनाय्यविकारत्वमेव पशोः। कस्मादिति चेत्। एतदेव पृष्ट्वोक्तं भारद्वाजेन समानयोनित्वं पयसः पशोश्च दर्शयतीति। श्रुतिरिति शेषः। कथं दर्शयतीति चेत्। तदप्युदाहृतं यद्देवो वर्षति अथौषधयो जायन्त ओषधीर्जग्ध्वाप: पीत्वा पयः संभवतीति तथा यद्देव इत्याद्यपः पीत्वेत्यन्तं पुनः पठित्वा रेतः संभवतीति च। बौधायनो ऽप्याह दधिपयआमिक्षापशवः सांनाय्यविकारा इति। तच्च कतरस्य सांनाय्यस्य पशुर्विकार इति चेत्। तदप्याह सत्याषाढः पशुः प्रातर्दोहविकारः कालसामान्यादिति। तथा पयोधर्माः पशाविति भारद्वाजः। सूत्रे चात्र लिङ्गानि भवन्ति यथा उदक् पवित्रे कुम्भ्यां दक्षिणस्यां वेदिश्रोण्यामासाद्य आज्येन पशुं यस्त आत्मा पशुषु प्रविष्ट इत्यादि। तस्मात्सिद्धं पशुः प्रातर्दोहविकार इति॥ षड्ढोतारं मनसानुद्रुत्येत्यादि व्याख्यातं तच्च षड्ढोतृविदित्वात् सूर्यं ते चक्षुरिति विशेषप्रदर्शनं तच्चोदवसाय जुहोति उपयज्य मनुष्याः प्रयान्तीति लिङ्गात्। तथोदवसाय षड्ढोतारं हुत्वेत्येव बौधायनः। तथा इष्टिकाले पशौ विशेषमाह अजस्रैरग्निभिरुदवसायेति॥

## आग्नावैष्णवमेकादशकपालं निर्वपति। ३।

अथान्यमाहवनीयं प्रणीयाग्नावैष्णवं निर्वपति। तस्य चाङ्गत्वादबहिस्तन्त्रवर्तित्वाच्च नान्वाहार्यं दृश्यते॥ सत्याषाढस्त्वत्रानुग्रहमाह अपि वा चतुर्गृहीतमाज्यमाग्नावैष्णव्यर्चाहवनीये जुहोतीति। तथा पशुबन्धे ऽग्नाविष्णुभ्यामिति चतुर्गृहीतं स्यादिति भारद्वाजः॥

अग्न्यन्वाधानस्य प्रत्याम्नायो भवति ।४।

अतो ऽग्न्यन्वाधानं निवर्तते ॥

सिद्धमिष्टिः संतिष्ठते ।५।

गतः ॥

धारयत्याहवनीयम् ।६।

इष्टेरपवर्गादग्नेरपवर्गो मा विज्ञायीत्यारम्भः। इदमेव धारणवचनं ज्ञापकं तन्त्रान्तरशेषभूता अपि बहिस्तन्त्रवर्तिन इष्टिदर्विहोमाः पृथगग्नयो भवन्तीति। दर्शितं चैतदस्माभिरन्वारम्भणीयायाम् ॥

उरु विष्णो विक्रमस्वेति स्रुवेणाहवनीये यूपाहुतिं जुहोति ।७।

अथ शाखामाहृत्य निधाय यूपाहुतिं जुहोति। वक्ष्यमाणनिर्मथ्यविकल्पार्थमाहवनीयग्रहणम्। यूपाहुतिसमाख्यानाद्यूपाभावे निवर्तते परिधौ पशून्नियुञ्जन्तीत्यादौ ॥

स्रुचा वा चतुर्गृहीतेन ।८।

स्रुचा वा जुहोति। तदा चतुर्गृहीतेन ॥

न दीक्षितस्य जुहुयात् ।९।

गतः ॥

वैष्णवीमृचमनूच्याच्छेत्यः ।१०।

तस्य तु यथैव वैष्णव्या होम उक्तः तामुक्त्वा यूपो ऽच्छेत्यः आप्तुं गन्तव्यः ॥

निरूढपशुबन्धः



जुहुयाद्वा। ११।

गतः ॥

यूपसकाशे वाग्निं मथित्वा तस्मिञ्जुहुयात्। १२।

स्रुवेण स्रुचा वा पूर्ववत् ॥

स्रुवमाज्यशेषं चाध्वर्युरादत्ते। तक्षा शस्त्रम्। १३।

शस्त्रं वाशी तया हस्तेन वाश्येति लिङ्गात्। येन चान्येनार्थो भवति तदप्यन्यो हरति ॥

यत्र यूपस्तद्यन्ति। १४।

यत्र यूपश्छेद्यस्तत्र व्रजन्ति ब्रह्मयजमानाध्वर्यवस्तक्षा च ॥

यूप्या वृक्षाः पलाशखदिरबिल्वरौहीतकाः। १५।

यूप्याः यूपभावार्हाः। रौहीतको नाम वटावान्तरजातीयः ॥

पालाशं तेजस्कामो यज्ञकामो वा। खादिरं स्वर्गकामो वीर्यकामो वा। बैल्वमन्नाद्यकामो ब्रह्मवर्चसकामो वा। रौहीतकं प्रजाकामश्चक्षुष्कामो वा। १६।

यूपं कुर्वीतेति शेषः। नित्येष्वमीष्वेवामी कामाः ततोऽन्यस्य यूपस्याभावात् ॥

समे जातमशाखाजं बहुपर्णशाखमप्रतिशुष्काग्रमसुषिरमव्यावृत्तमघूर्णमृजुमूर्ध्वमूर्ध्वशकलमग्र ईषदुपावनतं प्रागुदक् प्रत्यग्वोपनतम्। १७।

समे जातं समस्थले जातम् । अशाखाजं भूमेरेव रूढम् । अव्यावृत्तं अवलिताग्रम् । अघूर्णं अघूर्णितयष्टिम् । ऋजुं अवक्रम् । ऊर्ध्वं अतिर्यङ्नतम् । ऊर्ध्वशकलं शकलैरप्यूर्ध्वैरेवोपेतम् । अग्रे किंचिदवनतं दक्षिणेतरासु दिक्षु प्रह्वं च यूपं वृश्चेत् । तथा सुषिरत्वादयो ऽपि यूपदोषाः परिहर्तव्याः ॥

## यं कामयेताप्रतिष्ठितः स्यादित्युक्तम् । १८ ।

यं कामयेताप्रतिष्ठितः स्यादित्यारोहं तस्मै वृश्चेदित्यादिब्राह्मण एव यूपस्य गुणदोषास्तत्फलानि चोक्तानि तत्सर्वं तत्रैवानुसंधातव्यमित्यर्थः । आरोहमिति वृक्षात् न भूमेरिति आरोहः शाखाजः । आरोहमिति एमुलन्त इति केचित् । तदयुक्तं एष वै वनस्पतीनामप्रतिष्ठित इति लिङ्गात् तथा प्रतिष्ठितं वृश्चेत्प्रतिष्ठाकामस्यैष वै वनस्पतीनां प्रतिष्ठितो यः समे भूम्यै स्वाद्योने रूढ इति च लिङ्गात् स्वरवशाच्च । अत एव चोक्तं सूत्रकृता समे जातमशाखाजमिति ॥

## अतिक्रम्य यूप्यान्यं जोषयते तमभिमन्त्रयते । १९ ।

इति प्रथमा कण्डिका ।

---

## अत्यन्यानगामिति । १ ।

प्रथमप्राप्तांस्त्र्यवरान्यूप्यान्वृक्षानतिक्रम्य ततो यं जोषयते यत्र प्रीतो भवति तमभिमन्त्रयते अत्यन्यानगामिति लिङ्गादिति भावः ॥

अथैनमुपस्पृशति तं त्वा जुषे वैष्णवं देवयज्याया इति। २।

गतः॥

देवस्त्वा सविता मध्वानक्त्विति स्रुवेण सर्वतो मूलं पर्यनक्ति। ३।

सर्वं मूलभागं परितोऽनक्ति॥

ओषधे त्रायस्वैनमित्यूर्ध्वाग्रं दर्भमन्तर्धाय स्वधिते मैनं हिंसीरिति स्वधितिना प्रहरति। ४।

स्वधितिः क्षुरः तेन प्रहरति। तक्ष्णः शस्त्रमेवात्र स्वधितिर्विवक्षित इत्यन्ये॥

प्रथमपरापातिनं शकलमाहरति। ५।

गतः॥

गुल्फदघ्ने वृश्चेज्जानुदघ्नेऽनक्षसङ्गं वा। ६।

गुल्फः चरणग्रन्थिः। अनक्षसङ्गं यथा शकटस्य गच्छतोऽक्षस्थाणौ न सज्यते तथेत्यर्थः॥

दिवमग्रेण मा लेखीरिति प्राञ्चं पातयत्युदञ्चं प्राञ्चमुदञ्चं वा। ७।

गतः॥

वनस्पते शतवल्शो विरोहेत्याव्रश्चने जुहोति। ८।

यतो वृक्णो यूपः तद्वृक्षमूलमाव्रश्चनम् ॥

**सहस्रवल्शा वि वयं रुहेमेत्यात्मानं प्रत्यभिमृश्य यं त्वायं स्वधितिरित्यन्वग्रमङ्गांश्छिनत्ति। ९।**

अन्वग्रं मूलादारभ्याग्रात्। अङ्गाः शाखाग्रन्थयः ॥

**अच्छिन्नो रायः सुवीर इत्यग्रं परिवासयति। १०।**

परिवासयति छिनत्ति ॥

**पञ्चारत्निमिति काम्याः। ११।**

पञ्चारत्निं तस्मै वृश्चेदित्यादयः काम्या यूपपरिमाणकल्पाः यथाब्राह्मणमेवानुसंधातव्या इत्यर्थः ॥

**एकारत्निप्रभृत्या चयस्त्रिंशदरत्नेरव्यवायेनैके समामनन्ति। १२।**

अव्यवायेनेति एतासां संख्यानां मध्ये न काचिदपि हेयास्ति। सर्वा एव मिथो विकल्पन्त इत्यर्थः। तत्रारत्निसंख्या यूपस्य सहोपरेणेति भारद्वाजसत्याषाढौ ॥

**यावान्यजमान ऊर्ध्वबाहुस्तावान्। १३।**

सहोपरेण तावान्भवति ऊर्ध्वं निखाताद्यजमानसंमितेत्यौदुम्बर्यां वचनात् ॥

**यावान्वा रथे तिष्ठन्। १४।**

अनूर्ध्वबाहुरिति शेषः ॥

निरूढपशुबन्धः



ऊर्ध्वबाहुर्वा। १५।

रथे तिष्ठन्नित्येव॥

पुरुषमात्री त्वेतस्यावमा मात्रा। अथ ततो वर्षीयान्। वर्षीयानेव कार्य इत्येके। १६।

यूपस्यापकृष्टा मात्रा पुरुषमात्री पुरुषमात्रया संमिता। अतस्तावन्नापकृष्यते ततः परं तु यथालाभं वर्षीयानेव कार्य इत्येके शाखिनः॥

त्र्यरत्निश्चतुररत्निर्वा पालाशो निरूढपशुबन्धस्यातोऽन्यः सौम्यस्याध्वरस्येति वाजसनेयकम्। १७।

सोमाद्यद्धविर्यः स्वतन्त्रः क्रियते स निरूढपशुबन्धः। तस्य पालाशस्त्रिचतुररत्निश्च यूपः स्यात् वृक्षान्तराणि परिमाणान्तराणि च सौमिकस्य यूपस्येति विनिवेशो वाजसनेयिनामित्यर्थः॥

इति द्वितीया कण्डिका।

मूलतोऽतष्टमुपरम्। १।

मूलभागे यदुपरं निखातव्योऽंशः तदतष्टं भवति शेषस्त्वेवं तष्टव्य इत्याह॥

अष्टाश्रिरनुपूर्वोऽग्रतोऽणीयान्प्रज्ञाताग्निष्ठाश्रिरस्थूलोऽनणुः। २।

अनुपूर्वः मूलादारभ्याग्रात् क्रमेण तनुरग्रतस्त्वणीयान् अणुतरः। याग्नेरार्जवेन तिष्ठति साग्निष्ठाश्रिः सा स्फुटा भवत्यन्याभ्यः॥

**अवतक्षणानां स्वरुरधिमन्थनश्च शकलः। ३।**

तक्षणप्रभवाः शकला अवतक्षणास्तेषां मध्ये कश्चित्स्वरुर्भवति अन्यो ऽधिमन्थनः। यस्योपरि मथ्यते ऽग्निः सो ऽधिमन्थनः॥

**अग्राच्चषालं पृथमाचमष्टाश्रिमध्ये संनतम्। ४।**

यूपस्याग्रिमो ऽवयवश्चषालं तत्परिवासितादग्रादपच्छिद्य कार्यम्। पृथस्त्वयोदशाङ्गुलमिति बौधायनः। संनतं तत्कृतं निष्टुब्धं च भवति यूपे प्रतिमोच्यमानत्वात्॥

**यं कामयेतान्यो ऽस्य लोकमभ्यारोहेदिति तस्यान्य-वृक्षस्य स्वरुचषाले कुर्यात्। ५।**

एवं निन्दितत्वाद्वर्जनीयो ऽन्यवृक्ष इति भावः। अपि वान्यस्य तज्जातीयस्य वृक्षस्य कुर्यादिति बौधायनः॥

**यावदुक्तमङ्गुलिकाण्डं तावदूर्ध्वं चषालाद्यूपस्याति-रिक्तं द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा। ६।**

अङ्गुलिकाण्डमङ्गुलिपर्व॥

**रथमाची निरूढपशुबन्धस्य वेदिः। ७।**

एतदेव व्याकरोति॥

**अक्षसंमिता पश्चात्तिर्यगीषया प्राची विपथयुगेन पुरस्ताद्यावता वा बाह्ये छिद्रे। ८।**

पश्चात्तिर्यगक्षसंमिता। ईषासंमिता प्राची। पुरस्तात्तिरश्ची तु

विपर्ययुगेन संमिता। तस्यैव वा युगस्य बाह्ययोश्छिद्रयोर्यावदन्तरं तावता संमिता॥ अचादिप्रमाणानि शुल्बे वच्यति अष्टाशीतिशत-मीषेति॥

अरत्निभिर्वा चतुर्भिः पश्चात् षड्भिः प्राची त्रिभिः पुरस्तात्। ९।

गतः॥

तां वेदं कृत्वा दर्शपूर्णमासवत्संनमनवर्जं प्रागुत्त-रात्परिग्राहात्कृत्वापरेण यूपावटदेशं संचरमवशिष्य वेद्यामुत्तरवेदिं दशपदां सोमे करोति। १०।

तां एवं विमितां सतीं कृत्वा कथं नाम कृत्वा वेदं कृत्वा दर्शपूर्ण-मासवदोत्तरपरिग्राहात्कृत्वा तस्यामेव वेद्यामुत्तरवेदिं करोति। कुच प्रदेशे। पश्चाद्यूपावटदेशस्य संचरं शिष्टानन्तरदेशे तां सोमे दशपदां करोति सर्वतश्च दशपदां अविशेषात्। तथा सर्वतो दशपदामित्येव भारद्वाजः। तथा च चेत्रतः शतपदेत्युक्तं भवति। सौमिकास्त्विद वचनं प्रासङ्गिकं पाशुबन्धिकयास्तु प्रमाणमनन्तरमेव प्रवच्यते॥

अंहीयसीं पुरस्तादित्येके। ११।

अंहीयसीति तनीयसी पुरस्तात् अर्थादेव प्रथीयसी पश्चात् न तु सर्वतो दशपदा शतपदैव तु चेत्रतः॥

तां युगेन यजमानस्य वा पदैर्विमाय शम्यया परि-मिमीते। १२।

युगेन वा विमायेति वचनाद्युगमात्रीत्यपि सिद्धं भवति। यजमान-ग्रहणाच्च यजमानस्याध्वर्योर्वेति विकल्पो निवृत्तः। तथा युगमात्रीं यजमानदशपदां सोम इति कात्यायनः॥ तत्र यदा पद्माना वेदिस्तदा युगमात्रैवेष्यते न दशपदा अन्यथा सदोहविर्धानादिप्रसङ्गात्। शम्यामानं तूत्तरवेदिसंस्कारार्थमुभयत्र समुच्चीयते॥

**शम्यामात्री निरूढपशुबन्धस्योत्तरवेदिः। १३।**

शम्याप्रमाणं तु दर्शितमेव दर्शपूर्णमासयोः॥

**शम्यां पुरस्तादुदगग्रां निधाय स्फ्येनोदीचीमभ्यन्तरमुपलिखति वित्तायनी मे ऽसीति। एवं दक्षिणतः प्राचीं तिक्तायनी मे ऽसीति। पश्चादुदीचीमवतान्मा नाथितमिति। उत्तरतः प्राचीमवतान्मा व्यथितमिति। १४।**

पुरस्तात्सैमिक्याः पाष्ण्याश्चोत्तरवेदेः पूर्वसीम्नीत्यर्थः। उदगग्रामुदीचीनकुम्बां तथा पेषणे व्यक्तत्वात्। अभ्यन्तरं शम्यायाः अन्तरतः। उपलिखति तस्याः समीपे लिखति॥

इति तृतीया कण्डिका।

इति प्रथमः पटलः॥

---

**उत्तरस्माद्वेद्यंसादुदक्प्रक्रमे चात्वालः। १।**

उत्तरवेदिपांसवर्यो ऽवटश्चात्वालः॥

तमुत्तरवेदिवत्तूष्णीं शम्यया परिमित्य देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादाय परिलिखितं रक्षः परिलिखिता अरातय इति त्रिः प्रदक्षिणं परिलिख्य तूष्णीं जानुदघ्नं त्रिवितस्तं वा खात्वोत्तरवेद्यर्थान्पांसून्हरति विदेरिति । २ ।

चात्वालप्रमाणमुत्तरवेद्या व्याख्यातम् । अभ्रिः खनित्रम् । प्रदक्षिणवचनमविस्मरणार्थम् । वितस्तिः कनिष्ठाङ्गुल्योरायामः ॥

सिंहीरसीत्युत्तरवेद्यां निवपति । ३ ।

गतः ॥

एतेनैव यो द्वितीयस्यामिति द्वितीयं यस्तृतीयस्यामिति तृतीयम् । ४ ।

एतेनैव विदेरिति मन्त्रेण यो द्वितीयस्यामित्येवं विकृतेन द्वितीयं हरति । एवं तृतीयम् ॥

तूष्णीं चतुर्थं हृत्वोरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति प्रथयित्वा ध्रुवासीति शम्यया संहत्य देवेभ्यः कल्पस्वेत्यभिमन्त्र्य देवेभ्यः शुन्धस्वेत्यद्भिरवोक्ष्य देवेभ्यः शुम्भस्वेति सिकताभिरवकीर्य प्रोक्षणीशेषमुत्तरत उत्तरवेद्यै निनीयापो रिप्रं निर्वहतेति स्फ्येनोदीचीमेकस्फ्यां निःसार्य विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपताव-

विहुतम्। वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा विराजतीत्युत्तरवेद्या अन्तान्कल्पयति । ५ ।

चतुर्थे सर्वान्पांसून्हरति तैरेवोत्तरवेदिसमुच्छ्रयो व्याख्यातः। संहृत्य लोष्टानि विमृद्य। प्रोक्षणीशेषं अवोक्षणशेषम्। उत्तरवेद्या इति षष्ठ्यर्थे चतुर्थी। स्फ्यकृतैकरेखैकस्फ्या तां निःसार्य तयोदकं गमयित्वा। अन्तान्कल्पयति मृत्तोयैर्दृढयति यथा न विशीर्येरन् ॥

संमृशतीत्येके। ६।

तूष्णीं वा कल्पयित्वा मन्त्रेण संमृशति ॥

इति चतुर्थी कण्डिका।

---

अथास्या मध्ये प्रादेशमात्रीं गोपदमात्रीमश्वशफमात्रीं वोत्तरनाभिं चतुःस्रक्तिं कृत्वा चतुःशिखण्डे युवती कनीने घृतप्रतीके भुवनस्य मध्ये। तयोर्देवा अधिसंवसन्त उत्तमे नाक इह मादयन्तामित्युभे अभिमन्त्र्येन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्वित्येतैर्यथालिङ्गमुत्तरवेदिं प्रोक्षति। १।

नाभिरिव मध्ये भवति। उत्तरनाभिं चतुःस्रक्तिं चतुष्कोणाम्। यथालिङ्गं यस्मिन्मन्त्रे यस्या दिशो लिङ्गं तेन तं दिग्भागं प्रोक्षति ॥

त्वष्टा त्वा रूपैरुपरिष्टात्पात्विति मध्यम्। २।

अव्यक्तलिङ्गत्वादारम्भः ॥

निरूढपशुबन्धः



प्रोक्षणीशेषं दक्षिणत उत्तरवेद्यै निनयेच्छुचा त्वार्पयामीति द्वेष्यं मनसा ध्यायन् । ३ ।

शुचा त्वार्पयामीति द्वेष्यध्यानप्रकारः । निनयनं तु पूर्ववत्तूष्णीमेव लिङ्गानुगुणात् ॥

पूर्ववद्वेकस्फ्यां दक्षिणतो निःसार्य जुह्वां पञ्चगृहीतं गृहीत्वा सर्वत्र हिरण्यमुपास्यन्नक्ष्णयोत्तरवेदिमुत्तरनाभिं वा व्याघारयति । ४ ।

यथाज्यं हिरण्ये पतेत्तथा तदग्रतो नयन्कोणदिशः प्रति दीर्घां धारां करोति ॥

दक्षिणमंसमुत्तरां श्रोणिं दक्षिणामुत्तरमंसं मध्यमिति सिंहीरसीत्येतैः प्रतिमन्त्रम् । ५ ।

एवंक्रमकान्दक्षिणांसादीन् सिंहीरसीत्येतैः प्रतिमन्त्रं व्याघारयति ॥

भूतेभ्यस्त्वेति स्रुचमुद्गृह्य पौतुद्रवैः परिधिभिरुत्तरवेदिं परिदधाति विश्वायुरसीति मध्यमं ध्रुवक्षिदसीति दक्षिणमच्युतक्षिदसीत्युत्तरम् । ६ ।

पूतुद्रुर्देवदारुः ॥

परिधिसंधिना सर्वाहुतीर्जुहोति । ७ ।

परिधिसंधिना प्रपद्य जुहोति । केन । दक्षिणेन दक्षिणा आहुतीरुत्तरेणोत्तरा इति विवेकः ॥

इति पञ्चमी कण्डिका ।

**अग्नेर्भस्मासीत्युत्तरवेद्यां संभारान्निवपति गुल्गुलु सुगन्धितेजनं श्वेतामूर्णास्तुकां पेत्वस्यान्तराशृङ्गीयां लूनस्यालूनपूर्वस्य वा। १।**

सर्वान्संभारानेकीकृत्य निवपति। पुरीषमसीत्यन्तो मन्त्रः अग्नेः पुरीषमसीत्याहाग्नेर्ह्येतत्पुरीषं यत्संभारा इति लिङ्गात् अग्नेर्भस्मासीति सिकता निवपतीत्यत्रापि तथादर्शनाच्च। सुगन्धितेजनस्तृणविशेषः यः सुगन्धितेजनस्य जाठराग्नेर्भवति। ऊर्णास्तुका लोमकलापः सा तु पेत्वस्य शृङ्गान्तरोद्भवा भवति। पेत्वो वृष्णिः। वृष्णेः स्तुका इत्येव कात्यायनः। लूनस्य लूनलोम्नस्तदभावे त्वलूनस्य ॥

**व्याघारणप्रभृति संभारनिवपनान्तमुत्तरवेद्यामुपयम्यौ धार्यमाण एके समामनन्ति। २।**

औत्तरवेदिको ऽग्निरुपर्युत्तरवेदेरन्येन धार्यते। ततो जुह्वां पञ्चगृहीतमित्याद्यध्वर्युः ॥

**प्रोक्षान्तां कृत्वोदुम्बरशाखाभिः प्लक्षशाखाभिर्वा प्रच्छाद्य वसति यद्यसद्यस्कालः पशुर्भवति। ३।**

यद्यसद्यस्काल इत्यनुवादः। द्व्यहकालस्यापि विधिरनुमीयते। बौधायनस्याह इष्टिपशुबन्धाः सोपवसथाः सद्योयज्ञा वेति॥ तदा तु दक्षिणतो निःसारणान्तामुत्तरवेदिं कृत्वा प्रच्छाद्य विरमति। व्याघारणान्युत्तरेद्युरेव क्रियन्ते ॥

निरूढपशुबन्धः



**आहवनीये प्रणयनीयमिध्ममादीप्य सिकताभिरुपयम्याग्नये प्रणीयमानायानुब्रूहीति संप्रेष्यति । प्रणीयमानायानुब्रूहीति वा । ४ ।**

प्रणयनीयमिध्ममादीप्य प्रणयनार्थमिन्धनं ज्वलयित्वा सिकताभिरुपयम्येति यस्मिन्पात्रे ऽग्निरुद्धरिष्यते तस्याधस्तादुपयमनानुगुणाः सिकताः कल्पयित्वेत्यर्थः दीप्तस्यानुद्यतस्योपयमनासंभवादुत्तरत्रोद्यमनवचनाच्च । व्यक्तोक्तं चैतदग्न्याधेये यथा प्रणयनीयमिध्ममादीपयति सिकतास्वोपयमनीरुपकल्पयते तमुद्यच्छतीति ॥

**उद्यम्याग्निमाहवनीय उद्यतहोमं जुहोति यत्ते पावक चकृमा कच्चिदागः पूर्वो यत्सन्नपरो भवासि । घृतेन त्वं तन्वं वर्धयस्व मा मा हिंसीरधिगतं पुरस्तात्स्वाहेति । ५ ।**

उद्यम्याग्निं आदीप्तमिध्ममाहवनीयादुद्धृत्येत्यर्थः । केचित्तु अनन्तरोक्तेनादीपनेनोद्धरणं लक्षयित्वाचोद्यम्येति तस्यैवाग्नेरुत्क्षेपणमात्रमुक्तमित्याचक्षते । तदयुक्तं मुख्यार्थोपपत्तौ जघन्यवृत्त्याश्रयणायोगात् उद्यतहोमसमाख्यानाच्च । तस्य ह्याहवनीयादौत्तरवेदिकोद्धरणं निमित्तं न तूत्क्षेपणं पूर्वो यत्सन्नपरो भवासीति लिङ्गात् । तस्माद्यथोक्त एव सूत्रार्थः ॥

**प्रथमायां त्रिरनूक्तायामुपयमनीभिरुपयम्य हरति । ६ ।**

उपयमनीभिः सिकताभिरुद्यतमग्निम् ॥

52

ऊर्णावन्तं प्रथमः सीद योनिमिति होतुरभिज्ञायाग्ने बाधस्व विमृधो नुदस्वापामीवा अप रक्षांसि सेध। अस्मात्समुद्राद्बृहतो दिवो नो ऽपां भूमानमुप नः सृजेह ॥ यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ त्वा वसूनि पुरुधा विशन्तु। दीर्घमायुर्यजमानाय कृण्वन्नथामृतेन जरितारमङ्ग्धीह यज्ञः प्रत्यष्ठादिति संभारेषु प्रतिष्ठाप्य। ७।

इति षष्ठी कण्डिका।

~~~~~~~~~~~~~~~~~~~~

अग्नेः पुरीषमसीत्युत्तरत उपयमनीर्न्युप्य मनुष्वत्त्वा निधीमहि मनुष्वत्समिधीमहि। अग्ने मनुष्वदङ्गिरो देवान्देवायते यजेत्युपसमिध्य द्वादशगृहीतेन स्रुचं पूरयित्वा सप्त ते अग्ने समिधः सप्त जिह्वा इति सप्तवत्या पूर्णाहुतिं जुहोति। १।

गतः ॥

अग्निर्वायुरादित्यो विष्णुर्यज्ञं नयतु प्रजानन्नेनं यज्ञहनो विदन्देवेभ्यो यज्ञं प्रब्रूतात्प्र यज्ञपतिं तिर स्वाहेति चतस्रो ऽतिमुक्तीर्जुहोति। २।

यज्ञं नयत्वित्यादेरनुषङ्गः सर्वत्र ॥
~~~~~~~~~~~~~~~~~~~~

निरूढपशुबन्धः



**एष पशुबन्धस्याहवनीयो यतः प्रणयति स गार्हपत्यः । ३ ।**

अतः परमस्मिन्नेवाहवनीयकर्माणि क्रियन्ते। तद्योनौ त्वाहवनीये गार्हपत्यकर्माणि ॥

**प्रणीते चेदग्निहोत्रकाल एतस्मिन्नेवाग्निहोत्रं जुहुयात् । ४ ।**

एष पशुबन्धस्याहवनीय इति वचनान्मा निवृत्तमस्मिन्नग्निहोत्रमित्यारम्भः नौत्तरवेदिके ऽग्निहोत्रं विद्यत इति कल्पान्तरकारमतनिरासार्थश्च ॥ प्रणीते सत्यौत्तरवेदिके यद्यग्निहोत्रं प्राप्तकालं स्यात्तदेतस्मिन्नौत्तरवेदिक एव जुहुयात्। अपर्येच्छालामुखीये यतः प्रणयति स गार्हपत्य इत्यत्रात एव न्यायात् ॥

**एवमन्यत्र विप्रक्रान्ते तन्त्रे । ५ ।**

एवमन्यस्मिन्नपीष्ट्यादितन्त्रे विप्रक्रान्ते प्रक्रम्यापरिसमाप्ते प्राप्तकालमग्निहोत्रं तस्यतस्याहवनीय एव जुहुयात्। भारद्वाजस्त्वत्राह विप्रक्रान्ते कर्मण्यग्निहोत्रकाल आगच्छेत्संस्थाप्य जुहुयादित्याश्मरथ्यः काल एव जुहुयादित्यालेखन इति ॥

**इध्माबर्हिराहरति । ६ ।**

अथ बर्हिराहरणादि प्रतिपद्यते समानमा कुम्भ्यालेपनात्। तत्र वेदो वेदिश्च प्रागेव कृतौ। शाखापवित्रानुमन्त्रणे तु पशुं हव्यमित्यूहः तथास्येमौ पर्णं चेति। निधानं प्रकृतावेव व्याख्यातम् ॥

त्रयोविंशतिदारुरिध्म आश्ववालः प्रस्तर ऐक्षवो विधृती कार्ष्मर्यमयाः परिधयः। ७।

आश्ववालः काशमयः। ऐक्षवी इक्षुशलाके इति भारद्वाजः॥

इति सप्तमी कण्डिका।

इति द्वितीयः पटलः॥

---

अग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते। १।

गतः॥

यथार्थं पात्राणि प्रयुनक्ति। २।

यथार्थं यैरर्थः प्राकृतेषु यैस्त्वान्यैरागन्तुभिरित्यर्थः॥

स्फ्यमग्निहोत्रहवणीं वसाहोमहवनीं द्वितीयां जुहूं पृषदाज्यधानीं द्वितीयामुपभृतं द्वे आज्यस्थाल्यौ हृदयशूलमसिं कुम्भीं प्लक्षशाखां शाकपवित्रं कार्ष्मर्यमय्यौ वपाश्रपण्यौ द्विशूलामेकशूलां चौदुम्बरं मैत्रावरुणदण्डमास्यदघ्नं चुबुकदघ्नं वा रशने च। ३।

स्फ्याग्निहोत्रहवणीग्रहणं प्रदर्शनार्थं द्वयं तावदपरत्रार्थवशात्प्रयोज्यम्। एवं स्रुवाद्यपि पूर्वत्रेति। तत्र वसाहोमहवन्यादीनां जुह्वादिसमाख्यानादृत्तनियमस्तावद्व्याख्यातः। तथा प्राकृतैर्जुह्वादिभिरेकवत्करणेनैषां द्वन्द्वप्रयोग इति सिद्धं भवति। हृदयशूलादीनां पाठक्रमेणैव

निरूढपशुबन्धः



द्वन्द्वता। दर्शितं च तत्सर्वं दर्शपूर्णमासयोः। निशातमग्रं शूलमित्युच्यते हृदयश्रपणार्थं शूलं यस्य काष्ठस्य तद्धृदयशूलम्। असिः स्वधितिः स च द्विधारः स्वधितेरन्यतरां धारामिति लिङ्गात्। द्वे शूले यस्याः सा द्विशूला। चुबुकमास्याधोभागः। रशने रज्जौ ये वक्ष्यति द्विगुणा द्विव्यायामेत्यादिना॥

**पवित्रे कृत्वा यजमान वाचं यच्छेति संप्रेष्यति। ४।**

सोमविधे पशाविति भावः। इष्टिविधे तु पवित्रे कृत्वा प्रणीताप्रणयनं वक्ष्यति॥

**वाग्यतः पात्राणि संमृश्य प्रोक्षणीः संस्कृत्य ब्राह्मणमामन्त्र्य पात्राणि प्रोक्षत्यत्र वाचं विसृजते। स्फ्यमादायोत्तरं परिग्राहं परिगृह्य दर्शपूर्णमासवत्संप्रेष्यति। आज्येन दध्नोदेहीति संप्रैषान्तं नमति। ५।**

ऐष्टिकैः पदार्थान्तरैरसंस्कारार्थमनुमन्त्रणम्। तत्र स्फ्याग्निहोत्रहवणीसंमर्शने स्फ्यप्रोक्षणे च संमर्शनप्रोक्षणमन्त्रयोर्द्विवदेकवदेवोहः प्रकृतावेव व्याख्यातः। तूष्णीं स्फ्यमादाय उत्तरपरिग्राहादि। संप्रैषं तु केचित्स्रुवं च स्वधितिं चेत्यपि कुर्वन्ति स्वधितेरपि संमार्गवचनात् स्रुवस्थानापन्नत्वाच्च। तदयुक्तं दर्शपूर्णमासवत्संप्रेष्यतीत्यतिदिश्य संप्रैषान्तं नमतीति वचनात् चातुर्मास्येषु पशुवत्संप्रैष इत्यतिदेशात् प्राशित्रहरणवदसंप्रेषितस्यापि संमार्गवचनोपपत्तेश्च॥

**स्रुचां संमार्जनकाले स्रुवं संमृज्य तस्यावृता स्वधितिम्। ६।**

स्वधितिरप्यवदानार्थत्वात्स्रुवत्संस्कारमर्हतीति भावः॥

जुहूवदसाहोमहवनीमुपभृद्वत्पृषदाज्यधानीम्। आज्यं निरुप्य दधि निर्वपति। ७।

गताः॥

अधिश्रयणवर्जं दधनिं क्रियते। ८।

अधिश्रयणप्रतिषेधात्पत्न्यवेक्षणमपि निवर्तते अमेध्यं वा एतत्करोति यत्पत्न्यवेक्षते गार्हपत्ये ऽधिश्रयति मेध्यत्वायेति लिङ्गात्। भारद्वाजस्त्वाह न पत्न्यवेक्षेताधिश्रयणप्रतिषेधादिति॥ तत्र च दध्याज्यस्थाल्योरूहेणादानं अदिती स्थो ऽच्छिद्रपत्रे इति। तथाज्यमसीत्यादेराज्यं दधि स्थ इत्यसमासेनैवोहः आज्येन दध्नोदेहीति लिङ्गात्॥

नैतस्य दध्नः संस्कारो विद्यत इत्यपरम्। ९।

अस्मिंस्तु पक्षे दर्शपूर्णमासवदेवाविकृतं सर्वम्। लौकिक एव तु दध्नि संस्कृतमाज्यमानीयते॥

इत्यष्टमी कण्डिका।

आज्यग्रहणकाले चतुर्जुह्वां गृह्णाति चतुरुपभृति। १।

जुह्वां पञ्चगृहीतस्य निवृत्त्यर्थं चतुर्गृहीतवचनमुपभृत्यष्टगृहीतदशगृहीतयोः॥

दधन्याज्यमानीय महीनां पयो ऽसीति पृषदाज्यधान्यां पञ्चगृहीतं पृषदाज्यं ज्योतिरसि विश्वरूपं विश्वेषां देवानां समिदिति वा। २।

निरूढपशुबन्धः



दुग्धमिति प्रथममन्त्रान्तः शेषस्य दधिघर्मे विनियोगात्। तत्रैक-मन्त्राणि कर्माणीति न्यायेन सकृन्मन्त्र इति केचित्। तदयुक्तं द्रव्यपृथक्त्वात् यथोक्तं भारद्वाजेन द्रव्यपृथक्त्वे ऽभ्यावर्तते यथाज्यग्रहणे लवने स्तरणे चेति ॥

## चतुर्ध्रुवायाम्। ३।

जुह्वद्व्याख्या ॥

## सादनकाल आज्यानि सादयति। ४।

स्तरणकाले सर्वां वेदिं स्तृणाति विशेषावचनात् अपरेणोत्तरवेदिं स्तृणातीति सौमिक्यां विशेषवचनात् दक्षिणस्यां वेदिश्रोण्यां बर्हिषीति लिङ्गाच्च। स्रुक्सादनकाले त्वाज्यवतीरेव सादयति न त्वनाज्यां वसाहोमहवनीं आज्यानीति वचनात् ॥

## उपभृद्वत्पृषदाज्यधानीम्। ५।

उपभृद्वदुपभृदसीति मन्त्रेण सादयति। तथा स्रुवमन्त्रेण स्वधितिं तत्स्थानापन्नत्वात् तस्यावृता स्वधितिमिति लिङ्गात् स्रुवधर्माः स्वधिताविति कल्पान्तरकारवचनाच्च। याजमाने त्वयं स्वधितिरभिजि-हर्तीत्यूहः ॥ स्रुवस्वधित्योः संभवाद्युगपत्सादनमित्येके। तदा तु द्विवदूहो मन्त्राणाम्। दधिस्थाल्यां तु दध्नः पूर्णेत्यूहः ॥

## पूर्ववदाज्यान्यभिमन्त्र्याग्रेणाहवनीयं यूपावटं परि-लिखत्यर्धमन्तर्वेद्यर्धं बहिर्वेदि। ६।

पूर्ववद्धिष्ण्यानि स्थेत्यभिमन्त्र्य परिलिखत्यवटं यथा पृष्ठ्यान्त्यः शङ्कुर्मध्ये भवति ॥

पूर्ववदभ्रेरादानं परिलेखनश्च । ७ ।

पूर्ववत्सावित्रेणादानं परिलेखनश्च मन्त्रः परिलिखितमिति ॥

अथ खनति यथा नाविरूपरं भविष्यतीति । ८ ।

यथा निखातस्य यूपस्य नाविर्भविष्यत्युपरमिति मन्यते तावन्तमवटं खनति ॥

अग्रेणावटं प्राञ्चं यूपं निधाय यत्ते शिक्वः परावधीत्तक्षा हस्तेन वास्या । आपस्तत्सर्वं जीवलाः शुन्धन्तु शुचयः शुचिमिति यूपं प्रक्षाल्याथैनं यवमतीभिः प्रोक्षति । पृथिव्यै त्वेति मूलमन्तरिक्षाय त्वेति मध्यं दिवे त्वेत्यग्रम् । ९ ।

यासु यवा भवन्ति ता यवमत्यः ॥

शुन्धतां लोकः पितृषदन इति प्रोक्षणीशेषमवटेऽवनीय यवोऽसीति यवमवास्य पितृणां सदनमसीति बर्हिषावस्तीर्य स्वावेशोऽसीति प्रथमपरापातिनं शकलमवास्य घृतेन द्यावापृथिवी आपृणेथामिति स्रुवेण शकले हुत्वा । १० ।

इति नवमी कण्डिका ॥

निरूढपशुबन्धे



यूपायाज्यमानायानुब्रूहीति संप्रेष्यत्यज्यमानायानुब्रूह्यञ्जमो यूपमनुब्रूहीति वा। १।

अवनयनावस्तरणे पित्रर्थे मन्त्रलिङ्गात् पितॄणां निखातमिति लिङ्गाच्च॥ अतः प्राचीनावीतिना क्रियते। व्यापृतायां स्रुवेणेत्येव सिद्धे स्रुववचनाज्ज्ञायते नर्ते वचनात्स्रुवेण होमः पशाविति। तेन प्रहृत्य स्रुवेणाभिजुहोति स्रुवेण वपामभिजुहोतीत्यादिवच्च न स्रुवस्योदितस्तच वसाहोमव्यन्या होम इष्यते जुह्वसमाख्यानात्॥

अथैनमसंस्कृतेनाज्येन यजमानोऽग्रतः शकलेनानक्ति। २।

एनं यूपमग्रत आरभ्या मूलात्। अनक्तमुपरमिति तु सत्याषाढः। असंस्कृतेनेति वचनाच्छकलाभिहोमादन्यत्सर्वं संस्कृतेनेति सिद्धं भवति। भारद्वाजस्त्वाह अप्राकृता आज्यनिर्वापणादूर्ध्वमाज्यस्थाल्या इत्याश्मरथ्यो लौकिकाज्यादित्यालेखनो ध्रौवादित्यालेखनिरिति॥

ऐन्द्रमसीति चषालमक्त्वा सुपिप्पलाभ्यस्त्वौषधीभ्य इति प्रतिमुच्य देवस्त्वा सविता मध्वानक्त्विति स्रुवेण संततमविच्छिन्दन्नग्निष्ठामश्रिमनक्त्योपरात्। ३।

अध्वर्युरिति शेषः यदग्निष्ठामश्रिमनक्ति यजमानमेव तेजसानक्तीति श्रुतेः उत्तरत्र यजमानग्रहणाच्च। प्रतिमुच्य यूपाग्रे क्षिप्त्वा संततं संततधारमविच्छिन्दन्नग्निष्ठामिति शेषः॥

रशनादेशे चिः सर्वतो यूपं संमृशति। ४।

यत्र रशनाभन्त्स्यते तत्र संमृशति ॥

अञ्जनादि यूपं यजमानो नोत्सृजत्या परिव्ययणात्। ५।

परिव्ययणं परिव्याणम्। अभिविधावाकारः ॥

यूपायोच्छ्रीयमाणायानुब्रूहीति संप्रेष्यत्युच्छ्रीयमाणायानुब्रूहीति वा। ६।

गतः ॥

उद्दिवं स्तभानान्तरिक्षं पृणेत्युच्छ्रयति। ७।

उच्छ्रयति उत्थापयति ॥

ते ते धामानीत्यवटेऽवदधाति। ८।

गतः ॥

विष्णोः कर्माणि पश्यतेति द्वाभ्यामाहवनीयेनाग्निष्ठां संमिनोति। ९।

आहवनीयेन संमिनोति तस्यार्जवेन स्थापयति ॥

यं कामयेत तेजस्वैनमित्युक्तम्। १०।

अग्निष्ठाया यथोक्तात्प्रकारादन्यथावस्थापने दोषः। तथात्वे गुणश्च ब्राह्मणे दर्शितः। स तत्रैवानुसंधेय इत्यर्थः ॥

अग्रमाहवनीयमुपनतं यूपस्यावनतं मूलम्। ११।

निरूढपशुबन्धः



यूपस्याग्रमाहवनीयं प्रति प्रह्वं भवति मूलं तु ततः किंचिदपनीतम्॥

अनाविरूपरं कृत्वा ब्रह्मवनिं त्वा क्षत्रवनिमिति प्रदक्षिणं पांसुभिः पर्यूह्य ब्रह्म दृंह क्षत्रं दृंहेति मैत्रावरुणदण्डेन समं भूमिपरिदृंहणं कृत्वा। १२।

इति दशमी कण्डिका।

---

उन्नम्भय पृथिवीमित्यद्भिः परिषिञ्चति। १।

अनाविरूपरं कृत्वा अनाविष्कृतोपरं यूपं कृत्वा। पर्यूह्य वेष्टयित्वा। समं यथा समीपभूमिसममवटस्थलं भवति। तथा परिदृंहणं कुट्टनं कृत्वा परिषिञ्चति परितः सिञ्चति॥

दर्भमय्यौ रशने भवतः। द्विगुणा द्विव्यायामा पशुरशना त्रिगुणा त्रिव्यायामा यूपस्य। २।

व्यायामश्चतुररत्निः॥

देवस्य त्वा सवितुः प्रसव इति रशनामादाय विष्णोः कर्माणि पश्यतेति सरशनेन पाणिना यूपमुन्मार्ष्टि। ३।

रशनां यूपरशनाम्॥

तद्विष्णोः परमं पदमित्यग्रं प्रेक्षते। यूपाय परिवो-

यमाणायानुब्रूहीति संप्रेष्यति। परिवीयमाणायानुब्रूहीति वा। ४।

गताः ॥

परिवीरसीति नाभिदघ्ने रशनया त्रिः प्रदक्षिणं यूपं परिव्ययति मध्यदेशे वा। ५।

तत्र रशनां त्रिः संभुज्य मध्यमेन गुणेन परिव्ययतीति बौधायनः ॥

यं कामयेतोर्जैनमित्युक्तम्। ६।

एवं परिवीतायाः रशनायाः कामवशादूर्ध्वमधो वा सारणमुक्तं ब्राह्मणे तदप्यनुसंधातव्यमित्यर्थः ॥

अधो दूरं परिव्ययेद्वृष्टिकामस्योपरि दूरमवृष्टिकामस्येत्येके। ७।

शाखान्तरे तु वृष्ट्यवृष्टिकामयोः परिव्याणमेवाधस्तादूरमुपरिष्टाद्दूरं चोक्तम्। तत्त्वस्मद्ब्राह्मणवन्नाभिदघ्ने परिवीतायाः साधारणमित्यर्थः ॥

यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषज्य न प्रवेष्टयेत्। ८।

यौ बन्धविशिष्टौ रशनाखण्डौ तावुपान्ते तयोः समीपे व्यतिषज्य मिथः संबध्य मुञ्चेत् न वेष्टयेत्। एवं कृते स्त्र्यस्य जायेत। अतो न तथा कुर्यादिति भावः ॥

यं कामयेत पुमानस्य जायेतेत्यान्तं तस्य प्रवेष्टया-

निरूढपशुबन्धः



णिमति स्वधितिमत्प्रवीय दिवः स्नुरसीति स्वरुमादाया-न्तरिक्षस्य त्वा सानाववगूहामीत्युत्तरेणाग्निष्ठां मध्यमे रशनागुणे ऽवगूहति। ९।

रशनाखण्डौ बन्धनादारभ्यान्ताद्वेष्टयित्वा तयोरग्रन्ते स्थूलमन्तं चिप्त्वा बन्धने यो मध्यगुणस्तस्मिन्स्वरुमवगूहति ॥

उत्तमे सर्वेषु वा। द्वयोरधरयोरिति वाजसनेयकम् । १०।

गतः ॥

इत्येकादशी कण्डिका।

इति तृतीयः पटलः ॥

पशुं स्नपयन्ति कूटकर्णकाणखण्डबण्डस्रोणसप्तशफ-वर्जम्। १।

पशुः छागः इन्द्राग्निभ्यां छागस्येति लिङ्गात्। कूटो भग्नशृङ्गः। कर्णः कर्णेन विकलः काणश्चक्षुषा खण्डो दन्तैः बण्डः पुच्छेन स्रोणः पादेन। तथा बण्डस्तु छिन्नपुच्छः स्यात्स्रोणः पङ्गुरित्यादि नैघ-ण्टुकाः। सप्तशफः सप्तखुरः एकेन पादेनैकशफ इति यावत् ॥ अत्रानुग्रहमाह भारद्वाजः यद्यङ्गहीनः स्याद्रूपतो वा व्यृद्धः संपद्येत वैष्णवीं सारस्वतीं वायव्यामिति हुत्वा सर्वप्रायश्चित्तानि जुहुयात् ॥

**यद्यङ्गहीनः स्यादङ्गतो वा विरुज्येत। २।**

अङ्गहीनः जनन एव विकलाङ्ग इति यावत्। अङ्गतो वा विरुज्येत रोगादिनैवं चेदङ्गहीनः पशुः कूटादिवर्जमेव पशुं स्नपयन्तीति पूर्वत्र संबन्धो बोध्यः। इदं विस्पष्टार्थं तदतिरिक्तस्य वैकल्यस्याप्रयोजकत्वात्॥ कूटादिविशिष्टमप्यङ्गीकृत्याह॥

**अथैकेषां वैष्णवीमाग्नावैष्णवीं सारस्वतीं बार्हस्पत्यामिति च हुत्वा प्रयोजयेत्। ३।**

वैष्णव्याद्याः प्रसिद्धा याः काश्चन ग्राह्याः सामान्यतो निर्देशात्। अत्र बौधायनः रूपतो वा वर्णतो वा यद्यङ्गहीनः पशुरिति प्रकृत्य आग्नेयीमित्याद्युक्तवान्॥

**यो ऽपन्नदन्मलं तत्पशूनामिति विज्ञायते। ४।**

यो ऽपन्नदन्पतितोत्थितदन्तो न भवति पशूनां मध्ये तन्मलं वर्जनीयमित्यर्थः। तथा च बह्वृचाः यदा वै पशोर्दन्ताः पुनर्जायन्ते ऽथ स मेध्यो भवतीति। एवं च प्रतिनिधिरप्ययं न कर्तव्यो भवति प्रतिषेधाच्च प्रतिनिधिर्निवृत्त इति न्यायात्॥ साङ्गसजातीयालाभे तु व्यङ्गो ऽपि विजातीयात्प्रतिनिधेः श्रेयानित्यपरम्। यथाह भारद्वाजः आम्नातप्रतिषेधे प्रतिनिधेरङ्गं बलीयः यशाल्पगावो यथापन्नदन्पशुरिति॥

**इषे त्वेति बर्हिषी आदत्ते। उपवीरसीति प्लक्षशाखां बहुपर्णशाखामप्रतिशुष्काग्रामसुषिराम्। ५।**

निरूढपशुबन्धः



इषे त्वेत्यावृत्तिरेकवचनात् ॥

यं कामयेतापशुः स्यादित्यपर्णया तस्य शुष्काग्रयोपाकुर्यात् । ६ ।

गतः ॥

तृणेनोपाकरोतीत्येके । ७ ।

यदि तृणेन तदा तस्यैव विभागः पशुसंज्ञपनवपान्तर्धानयोः ॥

बर्हिर्भ्यां प्लक्षशाखया च पुरस्तात्प्रत्यञ्चं पशुमुपाकरोति । उपो देवान्दैवीर्विशः प्रजापतेर्जायमाना इति चैताभ्यामुपस्पृशन्निन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीति । ८ ।

पुरस्तादाहवनीयस्य प्रत्यङ्मुखमवस्थितं पशुं बर्हिर्भ्यां प्लक्षशाखया चोपस्पृशन्नुपाकरोति । देवतार्थत्वेन संकल्पनमुपाकरणम् । उपो देवानिति यजुर्ऋग्द्वयं चोपाकरणार्थं नोपस्पर्शनार्थं यदेताभ्यामुपाकरोतीति लिङ्गात् ॥

पञ्चकृत्वो देवतोपदेशनमुपाकरणे नियोजने प्रोक्षणे वपाया उद्धरणे हृदयस्याभिघारण इति । ९ ।

पुनरुपाकरणग्रहणं दृष्टान्तार्थं यथोपाकरणे तथा दृष्टान्तेन यजुषा सर्वत्र देवतोपदेशनमिति ॥

प्रजानन्तः प्रतिगृह्णन्ति पूर्व इति पञ्च हुत्वाग्निं मन्थति । १० ।

गतः ॥

अपि वाग्निं मथित्वोपाकुर्यात्। ११।

अस्मिंस्तु पक्षे प्रजानन्त इति पश्वाज्यतयो ऽप्युत्कृष्यन्ते उपाकृत्य पशुं जुहोतीति श्रुतेः ॥

अग्नेर्जनित्रमसीत्यधिमन्थनं शकलं निदधाति। वृषणौ स्थ इति प्राञ्चौ दर्भौ। १२।

उक्तो ऽधिमन्थनः ॥

उर्वश्यसीत्यधरारणिमादत्ते। पुरूरवा इत्युत्तरारणिम्। १३।

अरणी अग्न्याधेयिक्यावन्ये वा अविशेषात्। तयोर्गार्हपत्यैकयोनित्वादन्ये एवेत्यन्ये ॥

देवो वां सविता मध्वानक्त्वित्याज्यस्थाल्या बिले ऽङ्क्त्वा घृतेनाक्ते वृषणं दधाथामित्युभे अभिमन्त्र्यायुरसीति समवधाय। १४।

इति द्वादशी कण्डिका।

---

अग्नये मथ्यमानायानुब्रूहीति संप्रेष्यति। मथ्यमानायानुब्रूहीति वा। १।

बिले ऽङ्क्त्वेति वचनात्स्रुवादिनाज्यमादायानक्ति ॥

निरूढपशुबन्धः



प्रथमायां त्रिरनूक्तायां त्रिः प्रदक्षिणमग्निं मन्थति। गायत्रं छन्दो ऽनुप्रजायस्वेति प्रथमं त्रैष्टुभमिति द्वितीयं जागतमिति तृतीयम्। २।

गतौ ॥

ततो यथा प्राप्तु मन्थति। ३।

यथा प्राप्तु शीघ्रतरं भवति तथा मन्थति ॥

यदि मथ्यमानो न जायेत रक्षोघ्नीरनुब्रूयात्। ४।

रक्षोघ्नीः कृणुष्वपाजीयाः। भारद्वाजस्त्वत्रानुग्रहमाह यदि निर्मथ्यो मथ्यमानो न जायेत तस्य स्थाने हिरण्यशकलं व्याहृतीभिर्जुहुया-दिति ॥

जातायानुब्रूहीति जाते संप्रेष्यति। प्रह्रियमाणायेति प्रहरन्। ५।

गतः ॥

भवतं नः समनसावित्यग्रेणोत्तरं परिधिमाहवनीये प्रहरति संधिना वा। ६।

संधिना परिधिसंधिनोत्तरेण ॥

अग्नावग्निश्चरति प्रविष्ट इति प्रहृत्य स्रुवेणाभिजुहोति। ७।

प्रहृत्येति ब्राह्मणानुकरणार्थं वैचित्र्यार्थं वा। अभिजुहोति उपरि जुहोति निर्मन्थ्यस्य ॥

सावित्रेण रशनामादाय पशोर्दक्षिणे बाहौ परिवी-योर्ध्वमुत्कृष्यर्तस्य त्वा देवहविः पाशेनारभ इति दक्षिणेऽर्धशिरसि पाशेनाक्ष्णया प्रतिमुच्य धर्षा मानुषानित्युत्तरतो यूपस्य नियुनक्ति। ८।

प्रत्यङ्मुखस्य पशोरुत्तरो बाहुर्दक्षिणो भवति। तथा दक्षिणमर्धशिरः पाशेन प्रतिमुच्य यथा शिरश्चो न गलति तथा वशीकृत्य बद्धा नियुनक्ति रशनाशेषेण यूपे बध्नाति। पूर्ववद्देवतोपदेशनमिन्द्राग्निभ्यां त्वा जुष्टं नियुनज्मीति ॥

दक्षिणत ऐकादशिनान्। ९।

लाघवार्थमेषामिह वचनम् ॥

अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीति प्रोक्षति। १०।

अत्र तु मन्त्रगतादेवाख्यातात्पूर्वं देवतोपदेशनप्रक्षेपेण मन्त्ररूपमुदाजह्रतुर्बौधायनभारद्वाजौ यथा अद्भ्यस्त्वौषधीभ्य इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामीति ॥

अपां पेरुरसीति पाययति। ११।

अपिबन्तमपि बलात्पाययति यद्युपपाय्यमान इति विधिना ॥

स्वात्तं चित्सदेवं हव्यमापो देवीः स्वदतैनमित्युपरिष्टादधस्तात्सर्वतश्च प्रोक्ष्य वेदं निधाय सामिधेनीभ्यः प्रतिपद्यते। १२।

निरूढ पशुबन्ध



सर्वत इत्येव सिद्धे क्रमार्थमुक्तमुपरिष्टादधस्तादिति। वेदं निधाय सामिधेनीभ्य इति वचनाद्वेद्यन्तपरिस्तरणहोतृषदनकल्पने न स्त इति केचित् ॥

इति त्रयोदशी कण्डिका।

इति चतुर्थः पटलः ॥

---

स्रुच्यमाघार्य प्रत्याक्रम्य जुह्वा पशुं समनक्ति। १।

प्रत्याक्रम्येति वचनात्स्रुच्यमाघार्य न दक्षिणतो गत्वा समनक्ति ॥

सं ते प्राणो वायुना गच्छतामिति शिरसि। सं यजत्रैरङ्गानीत्यंसोच्चलयोः। सं यज्ञपतिराशिषेति श्रोण्याम्। २।

अंसोच्चलयोरंसकोट्योः तयोश्चावृत्तिर्मन्त्रस्य ॥

ध्रुवासमञ्जनादि कर्म प्रतिपद्यते समानमा प्रवरात्। ३।

गतः ॥

षडृत्विजः। ४।

असमासार्थं वचनं ब्राह्मणानुकरणार्थं वा। शमितुश्चर्त्विक्त्वशङ्कानिरासार्थमित्यपरम् ॥

दैवं च मानुषं च होतारौ वृत्वा पुनराश्राव्य मैत्रावरुणं प्रवृणीते मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादिति। ५।

अग्निर्दैवो होतेति दैवमसौ मानुष इति मानुषं च वृत्वा मैत्रावरुणमप्यसौ मानुष इत्यनेन वृणीते होतृविकारत्वात् सौमिके च तथादर्शनात् व्यक्तपाठाच्च कल्पान्तरेषु ॥

तिष्ठति पशावेकादश प्रयाजान्यजति। ६।

एकादश प्रयाजान्यजति तांश्च तिष्ठति पशौ यजति। तत्र त्वसंभवपर्युदस्तत्वादेकादशे दशस्वेव पशोः स्थाननियमः। निषण्णं तु पशुं यद्यु वै निषीदेदिति विधिनोत्थापयेत् ॥

समिद्भ्यः प्रेष्येति प्रथमं संप्रेष्यति। प्रेष्य प्रेष्येतीतरान्। ७।

प्रथमं संप्रेष्यति प्रथमं प्रयाजं प्रति मैत्रावरुणं संप्रेष्यति ॥

चतुर्थाष्टमयोः प्रतिसमानीय दशमेष्वेकादशायाज्यमवशिनष्टि। ८।

चतुर्थप्रभृतयश्चत्वारो बर्हिषो विकाराः अष्टमप्रभृतयः स्वाहाकारस्य। बर्हिःस्वाहाकारार्थं च प्रकृतौ चतुर्थे समानयनम्। अतश्चतुर्थ एव सर्वानयने प्राप्ते विभागार्थमुक्तं चतुर्थाष्टमयोरिति ॥

तान्यजमानः प्राकृतैरादितश्चतुर्भिश्चतुरोऽनुमन्त्र्य चतुर्थस्यानुमन्त्रणेन दुरःप्रभृतींस्त्रीनुत्तमेन शेषम्। ९।

निरूढपशुबन्धः



तत्तद्विकारांस्तस्यतस्य मन्त्रेणानुमन्त्रयत इति भावः । अत एव न्यायात्तत्तद्देशत्वमपि तत्तद्विकाराणां द्रष्टव्यम् ॥

प्रत्याक्रम्य जुह्वा स्वरुस्वधिती अनक्ति । त्रिः स्वरुं सकृत्स्वधितेरन्यतरां धाराम् । १० ।

गताः ॥

स्वरुमन्तर्धाय स्वधितिना पशुं समनक्ति घृतेनाक्तौ पशुं त्रायेथामिति शिरसि । ११ ।

स्वधितेरधस्तात्स्वरुं कृत्वोभाभ्यां शिरस्यनक्ति ॥

न वा स्वधितिना स्वरुणैव । १२ ।

अनक्तीत्यन्वयः । तदा तु घृतेनाक्तः पशुं त्रायस्वेत्यूहः ॥

अक्तया शृतस्यावद्यति पशुमितरया विशास्ति । १३ ।

अक्तया स्वधितेर्धारया पक्वस्य पशोरङ्गान्यवद्यति । इतरया त्वनक्तया पशुं विशास्ति शमिता ॥

शमित्रे स्वधितिं प्रयच्छन्नाह शमितरेषा तेऽस्त्रिः स्पष्टास्त्विति । १४ ।

एषाक्तावदानार्था धारा स्फुटा विदितास्तु तया विशसनं परिहरणीयमित्यर्थः ॥

इति चतुर्दशी कण्डिका ।

**पर्यग्नये क्रियमाणायानुब्रूहीति संप्रेष्यति' पर्यग्नये ऽनुब्रूहीति वा । १ ।**

परितो ऽग्निर्यस्य स पर्यग्निः । तथा क्रियमाणाय पशव इत्यर्थः न तु परितः क्रियमाणायाग्नय इति । यथा चैतदेवं तथैकादशिनेषु व्यङ्क्ष्यामः ॥

**आहवनीयादुल्मुकमादायाग्नीध्रः परि वाजपतिः कविरिति त्रिः प्रदक्षिणं पर्यग्नि करोति पशुं यूपमाहवनीयं शामित्रदेशं चात्वालम् । आज्यानि चेत्येके । २ ।**

पर्यग्नीति क्रियाविशेषणम् । यथा पर्यग्निर्भवति पशुस्तथा करोतीत्यर्थः ॥ तत्र चात्वालान्तमपच्छिद्य पश्वादीनि पञ्च पर्यग्नि करोतीति प्रथमः कल्पः । आज्यानि चेत्येके इत्याज्यसमुच्चयेन द्वितीय इति योज्यम् । तथा च सत्याषाढः पञ्च पर्यग्नि करोति पशुं शामित्रदेशं चात्वालं यूपमाहवनीयं च त्रिः परिद्रवत्याज्यानि चेत्येक इति । पर्यग्नि करोति पशुमिति वापच्छिद्य ततो यूपादिपञ्चसमुच्चयेन द्वितीयः कल्पः । तथा च बौधायनभारद्वाजौ पशुमेव पर्यग्नि करोतीत्येकेषामिति । प्रथमा योजनैव तु सूत्रानुगता त्रिः प्रतिपर्येतीत्यभिपर्यग्निकृते देश इति च नित्यवद्वचनात् ॥

**प्रत्यपिसृज्योल्मुकं त्रिः प्रतिपर्येति । ३ ।**

पशोरेव पर्यग्निकरणमिच्छतामुल्मुकप्रत्यपिसर्ग एव न प्रतिपरिगमनं परिगमनस्यैवाभावात् । एकत्र स्थितेनापि स शक्यः पर्यग्निकर्तुमिति ॥

**प्रजानन्तः प्रतिगृह्णन्ति पूर्व इति पर्यग्नौ क्रियमाणे ऽपाव्यानि जुहोत्येकं द्वे त्रीणि चत्वारि वा।४।**

गतः ॥

**पशुपतेः पशवो विरूपाः सदृशा उत। तेषां यं वव्रिरे देवास्तं स्वराडनुमन्यतामिति द्वितीयाम्।५।**

द्विप्रभृतिषु कल्पेष्वेव द्वितीयाहुतिर्नियता ॥

**ये बध्यमानमिति प्रमुच्यमाने। प्रमुञ्चमाना इति प्रणीयमाने।६।**

शमित्रा यूपात्प्रमुच्यमाने नीयमाने च पशौ जुहोत्यध्वर्युः ॥

**रेवतीर्यज्ञपतिं प्रियधा विशतेति वपाश्रपणीभ्यां पशुमन्वारभेते अध्वर्युर्यजमानश्च। आश्राव्य प्रत्याश्राविते संप्रेष्यत्युपप्रेष्य होतर्हव्या देवेभ्य इति।७।**

गतौ ॥

**प्रास्मा अग्निं भरत स्तृणीत बर्हिरिति होतुरभिज्ञायाहवनीयादुल्मुकमादायाग्नीध्रः पूर्वः प्रतिपद्यते।८।**

पूर्वः प्रतिपद्यते पुरस्तात्पशोर्गच्छति ॥

**शमिता पशुं नयति।९।**

शमिता यूपात्पशुं प्रमुच्य गमनाय कर्षति। तत्र त्वध्वर्युराहुती जुहोति ये बध्यमानं प्रमुञ्चमाना इति ॥

**उरो अंतरिक्षेत्यन्तरा चात्वालोत्करावुदञ्चं पशुं नयन्ति। १०।**

अध्वर्य्वादयः शमित्रा सह पशुमुदञ्चं बहिर्वेदि नयन्ति तदर्थव्यापारान्कुर्वन्ति। यद्वा छत्त्रिन्यायेन शमित्रा सह गमनात्तेषां नेतृत्वोपचारः। पशुं तु नीयमानमपि पूर्ववदन्वारभेतैव यजमानः यः पशुं मृत्यवे नीयमानमन्वारभते वपाश्रपणी पुनरन्वारभत इति लिङ्गात्। तथाध्वर्युरप्यन्वारभेतेत्यपरे ॥

**नाना प्राणो यजमानस्य पशुनेत्यध्वर्युर्जपति। ११।**

गतः ॥

इति पञ्चदशी कण्डिका।

---

**ऊवध्यगोहं पार्थिवं खनतादित्यभिज्ञायोवध्यगोहं खनति। १।**

उदरगतमसुरभि शकृदाद्यूवध्यं यदूवध्यमुदरस्यापवातीति लिङ्गात्। तद्गूह्यते छाद्यते यस्मिन्नवटे स ऊवध्यगोहः। तं खनति कश्चिदृत्विक् परिकर्मी वा ॥

**अभिपर्य्यग्निकृते देश उल्मुकं निदधाति। २।**

आग्नीध्र इति शेषः। तच्चोत्तरेण चात्वालं शामित्रदेश इति सत्याषाढः ॥

**स शामित्रः। ३।**

निरूढपशुबन्धः



सो ऽग्निर्निरूढपशोः शामित्रः । श्रपणे शमितृसंबन्धात् पशुश्रपणार्थो ऽग्निः शामित्र इति समाख्यायते ॥

तं दक्षिणेन प्रत्यञ्चं पशुमवस्थाप्य पृथिव्याः संपृचः पाहीति तस्याधस्ताद्बर्हिरुपास्यत्युपाकरणयोरन्यतरत् । ४ ।

उपाकृतः पशुर्याभ्यां ते उपाकरणे ॥

तस्मिन्संज्ञपयन्ति प्रत्यक्शिरसमुदीचीनपादम् । ५ ।

शमितार इति शेषः । अहतस्य मारणं संज्ञपनम् ॥

अमायुं कृण्वन्तं संज्ञपयतेत्युक्त्वा पराङावर्तते ऽध्वर्युः । ६ ।

मायुः शब्दः तमकुर्वन्तमित्यर्थः ॥

स्वर्विदसि स्वर्वित्त्वा स्वरिहि स्वर्मह्यं स्वः पशुभ्यः । लोकविदसि लोकं वित्त्वा लोकमिहि लोकं मह्यं लोकं पशुभ्यः । गातुविदसि गातुं वित्त्वा गातुमिहि गातुं मह्यं गातुं पशुभ्यः । नाथविदसि नाथं वित्त्वा नाथमिहि नाथं मह्यं नाथं पशुभ्यः ॥ न वा उवेतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः । यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवः सविता दधातु ॥ आशानां त्वाशापालेभ्य इत्येषा । विश्वा आशा मधुना संसृजाम्यनमीवा आप ओषधयो भवन्तु । अयं यजमानो मृधो व्यस्यताम् । अगृभीताः पशवः सन्तु सर्वे

इत्युक्त्वा पराङावर्तते यजमानः॥ नाना प्राणो यजमानस्य पशुनेत्यध्वर्युर्जपति। ७।

इति षोडशी कण्डिका।

---

यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च। ता नः सन्तु पयस्वतीरस्मिन्गोष्ठे वयोवृधः॥ इह पशवो विश्वरूपा रमन्तामस्मिन्यज्ञे विश्वविदो घृताचीः। अग्निं कुलायमभिसंवसाना अस्माँ अवन्तु पयसा घृतेनेति पृषदाज्यमवेक्षमाणौ वाग्यतावासाते अध्वर्युर्यजमानश्च। १।

गताः॥

इन्द्रस्य भागः सुविते दधातनेमं यज्ञं यजमानं च सूरौ। यो नो द्वेष्ट्यनु तं रभस्वानागसो यजमानस्य वीरा इति च वाश्यमाने ऽवेक्षेते। २।

वाश्यमाने पशौ तमेव पशुमवेक्षेते इत्यर्थः मन्त्रलिङ्गात्। तथा पशुमभिमन्त्रयते यदि रूरोदेत्येव सत्याषाढः। चकारो वाग्यतासनसमुच्चयार्थः॥

यत्पशुर्मायुमकृतेति संज्ञप्ते संज्ञप्तहोमं जुहोति। ३।

संज्ञप्तिमात्रनिमित्तो होमो न तु मान्त्रवर्णिकमायुकरणादिनिमित्तः तेन नित्य इति ज्ञापयितुमुक्तं संज्ञप्ते संज्ञप्तहोममिति॥

निरूढपशुबन्धः



**शमितार उपेतनेति वपाश्रपणीभ्यां पशुमुपैतोऽध्वर्युर्यजमानश्च । ४ ।**

वपाश्रपणीभ्यां संगच्छतस्ते तु सह शृचशाखया निष्टप्तमित्याहवनीये प्रतितप्येमां साधारणार्थत्वेन कुम्भीधर्मत्वात्तासाम् । तथा धर्मा इत्यधिकृत्य भारद्वाजः ये सांनाय्योखायां पशुश्रपण्यां वपाश्रपण्योर्हृदयशूले शृचशाखायामिति क्रियेरन्निति ॥

**पशोः पाशं प्रमुञ्चत्यदितिः पाशं प्रमुमोक्तेतमिति । ५ ।**

पशोः पशुतः । पाशं रशनाम् ॥

**संवेष्ट्य रशनां ग्रीवासु निधायैकशूलयोपसज्य चात्वाल उदस्यत्यरातीयन्तमधरं करोमीति । ६ ।**

कर्णस्था धमन्यो ग्रीवा इत्युच्यन्ते । एकशूलयोपसज्य तत्सक्तं कृत्वा ॥

**यद्यभिचरेदरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशमिति तया वृक्षं स्थाणुं स्तम्भं वापिदध्यात् । ७ ।**

अभिचरतस्त्वनेन स्वशाखास्थेन मन्त्रेण तया रशनया वृक्षादिं बध्नीयात् न तु चात्वाल उदस्येत् । स्थाणुरशाखं तरुप्रकाण्डम् । स्तम्भः स्थूणा ॥

इति सप्तदशी कण्डिका ।

इति पञ्चमः पटलः ॥

ततः प्रतिप्रस्थाता पत्नीमुदानयति। १।

स्वायतनाद्वेदिसमीपं नयति ॥

नमस्त आतानेति पत्न्यादित्यमुपतिष्ठते। २।

अनेकाश्चेत्सर्वा युगपदुपतिष्ठन्ते ॥

अनर्वा प्रेहीति प्राचीमुदानयत्यनुमन्त्रयत इत्येके।३।

ततश्चात्वालं प्रति प्राचीं नयति नीयमानां चानुमन्त्रयते। बह्वीष्वे-कैकां नयति प्रेहीत्येकवचनात् ॥

आपो देवीः शुद्धायुव इति चात्वाले पत्न्यपो ऽवमृ-शत्यृत्विजो यजमानश्च। ४।

स्पृशन्त्यपः सर्वाः पत्न्यः ॥

न पत्नीत्येके। ५।

गतः ॥

अद्भिः पशोः सर्वान्प्राणानाप्याययति। ६।

प्राणाप्यायनमेव व्याकरोति ॥

सर्वाण्यङ्गान्यध्वर्युरभिषिञ्चति पत्न्याप्याययति। ए-तद्वा विपरीतम्। वाक्त आप्यायतामित्येतैर्यथालिङ्गम् । ७।

यद्यल्लिङ्गो मन्त्रस्तत्तदङ्गमध्वर्युपत्न्योरन्यतरो ऽभिषिञ्चति तत्तदेवेतर आप्याययति तेनतेनाप्यायनलिङ्गमन्त्रेणाभिमृशतीत्यर्थः। पत्न्यनेकत्वे ऽप्येकैवाप्याययति। पशुसंस्कारत्वात्तच्च चक्षुःश्रोत्रघ्राणेष्वावृत्तिः अधि-

ष्टानाभिधानात् तद्भेदाच्च । न चाध्रिगुवदिन्द्रियाभिधानोपपत्तिः पशोर्मृतत्वात् ॥

या ते प्राणाञ्छुग्जगामेति हृदयदेशम् । ८ ।

हृदयलिङ्गाभावाद्वचनम् ॥

मेढ्रं त आप्यायतामिति मेढ्रम् । ९ ।

आगन्तुत्वे ऽपि पादमन्त्रात्पूर्वमस्य प्रयोगः तथाविनियोगात् ॥

शुद्धाश्चरित्रा इति पादान् । १० ।

चरित्रशब्दस्य पादे प्रयोगमान्द्येनाव्यक्तलिङ्गत्वाद्वचनम् । बहुवचनाच्च युगपदाप्यायनं पदानाम् । तथा संप्रगृह्य पद इत्येव बौधायनः ॥

एकैकमाप्याय्य जपति शमद्भ्य इति पुरा स्तोकानां भूमेः प्रापणात् । ११ ।

अङ्गमङ्गमाप्याय्य तावदेव जपति शमद्भ्य इति यावदाप्यायनानामपां बिन्दवो भूमिं न प्राप्नुवन्ति ॥

शमोषधीभ्यः शं पृथिव्या इति भूम्यां शेषं निनीयौषधे त्रायस्वैनमित्युपाकरणयोरवशिष्टं दक्षिणेन नाभिमन्तर्धाय स्वधिते मैनं हिंसीरिति स्वधितिना पार्श्वतस्तिर्यगाच्छ्यति । १२ ।

दक्षिणेन नाभिं भूमिमध्ये बर्हिर्निधाय तस्योपरि तिर्यगवस्थितेन स्वधितिना पार्श्वप्रदेश एव च्छिनत्ति ॥

बर्हिषो ऽग्रं सव्येन पाणिनादत्ते। १३।

गतः ॥

अथ मध्यं यत आच्छ्यति तदुभयतो लोहितेनाङ्क्त्वा रक्षसां भागो ऽसीत्युत्तरमपरमवान्तरदेशं निरस्याथैनत्सव्येन पदाभितिष्ठतीदमहं रक्षो ऽवबाध इदमहं रक्षो ऽधमं तमो नयामीति। १४।

आलवस्थमूलापेक्षया बर्हिषः खण्डान्तरमिह मध्यमभिप्रेतं तृतीयखण्डाभावात्। तन्मध्यमुभयोरन्तयोरङ्क्त्वा निरस्याभितिष्ठति उपरि तिष्ठति द्वाभ्यां यजुर्भ्याम्। तत्रेदमहं रक्षो ऽधममित्यादि इदमेनमधमं तमो नयामीत्यन्तं द्वितीयम् ॥

इत्यष्टादशी कण्डिका।

इषे त्वेति वपामुत्खिद्य घृतेन द्यावापृथिवी प्रोर्णुवाथामिति वपया द्विशूलां प्रच्छाद्योर्जे त्वेति तनिष्ठे ऽन्तत एकशूलयोपतृणत्ति। १।

उत्खिद्य उत्पाद्य। तनिष्ठे ऽन्ततः तनुतमे वपान्ते। उपतृणत्ति भिनत्ति शूलप्रोतं करोतीति यावत् ॥

देवेभ्यः कल्पस्वेत्यभिमन्त्र्य देवेभ्यः शुन्धस्वेत्यद्भिरवोक्ष्य देवेभ्यः शुम्भस्वेति स्वधितिना वपां निमृज्या-

निरूढपशुबन्धः



च्छिन्नो रायः सुवीर इन्द्राग्निभ्यां त्वा जुष्टामुत्कृन्तामीत्युत्कृन्तति। २।

निमृज्य यदन्यद्वपायास्तन्निर्णुद्य। उत्कृन्तति छिनत्ति। जुष्टामुत्कृन्तामीति विशिष्टप्रयोगदर्शनार्थं पुनर्देवतोपदेशनवचनम् ॥

मुष्टिना शमिता वपोद्धरणमपिधायास्त आ वपाया होमात्। ३।

यतो वपोद्धृता तद्विवरं वपोद्धरणम् ॥

प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इति शामित्रे वपां प्रतितप्य नमः सूर्यस्य संदृश इत्यादित्यमुपस्थायोर्वन्तरिक्षमन्विहीत्यभिप्रव्रजति। ४।

गतः ॥

उल्मुकैकदेशमादायाग्नीध्रः पूर्वः प्रतिपद्यते। ५।

उल्मुकस्य शामित्रार्थस्यैकदेशं पुरस्तान्नयति ॥

वपाश्रपणी पुनरन्वारभते यजमानः। ६।

पुनरन्वारभत इति ब्राह्मणानुकरणार्थम्। यथा पशौ नीयमाने तथा वपायामपि नीयमानायामित्यर्थः ॥

उल्मुकैकदेशमाहवनीये प्रत्यपिसृजति। ७।

गतः ॥

निर्दग्धं रक्षो निर्दग्धा अरातय इत्याहवनीयस्यान्तमेऽङ्गारे वपां निक्रुद्यान्तरा यूपमाहवनीयं च दक्षिणातिहृत्य प्रतिप्रस्थात्रे प्रयच्छति। ८।

अन्तमे प्रथमप्राप्ते निकूद्य। कूडयतिर्दाहकर्मा। अतिहृत्य स्वयं यूपाद्बहिर्गच्छन्यूपाहवनीययोर्मध्येन हृत्वेत्यर्थः॥

तां दक्षिणत आसीनः प्रतिप्रस्थाताहवनीये श्रपयति। ९।

गतः॥

इत्येकोनविंशी कण्डिका।

---

वायो वीहि स्तोकानामिति बर्हिषोऽग्रमधस्ताद्वपाया उपास्यति। १।

वपाया अधस्ताद्भागे तया सहोपश्लेषयति। अधस्ताद्वपाया अग्नौ क्षिपतीति केचित्। तदयुक्तं प्रहरतीत्यवचनात् विपर्ययस्यैव ब्राह्मणे व्यक्तत्वाच्च यथा अग्रं वा एतत्पशूनां यद्वपाग्रमोषधीनां बर्हिरग्रेणैवाग्रं समर्धयत्यथो ओषधीष्वेव पशून्प्रतिष्ठापयतीति॥

त्वामु ते दधिरे हव्यवाहमिति स्रुवेण वपामभिजुहोति। २।

गतः॥

प्रादुर्भूतेषु स्तोकेषु स्तोकेभ्यो ऽनुब्रूहीति संप्रेष्यति।३।

अग्निसंयोगाद्ये मेदसो विन्दवश्च्योतन्ते स्तोकाः ॥

अलोहिनीं सुशृतां कृत्वा सुपिप्पला ओषधीः कृधीति दक्षिणस्यां वेदिश्रोण्यां बर्हिषि प्लक्षशाखायामासाद्य प्रयुता द्वेषांसीति वपाश्रपणी प्रवृह्य निधाय घृतवति शब्दे जुहूपभृतावादाय दक्षिणातिक्रम्याश्राव्य प्रत्याश्राविते संप्रेष्यति स्वाहाकृतीभ्यः प्रेष्य स्वाहाकृतिभ्यः प्रेष्येति वा।४।

यथा न लोहिता भवति तथाज्येनाञ्जन् सुशृतां कृत्वा प्रातर्दोहवदभिघार्योद्वास्य बर्हिषि प्लक्षशाखायां च सह सादयति। तथा च भारद्वाजः सांनाय्यवदभिघार्य तथोद्वास्य बर्हिषि प्लक्षशाखायां प्रतिष्ठापयतीति। वपाश्रपण्योः प्रवर्हणे मन्त्रस्तूष्णीं निधानं मन्त्रलिङ्गात् ॥ अथासन्नाभिमर्शने प्रातर्दोहमन्त्रगतानामिदंतदामूहः स्त्रीलिङ्गेन। घृतशब्दस्य स्थाने वपाशब्दः ॥

वषट्कृते हुत्वा प्रत्याक्रम्य शेषेण ध्रुवामभिघार्य पृषदाज्यमभिघारयत्यथ वपाम्। एतद्वा विपरीतम्।५।

यत्र वषट्कृते हुत्वेति यत्नस्तत्र वषट्कृत एव जुहोति न वषट्कारेण। पृषदाज्यमुभयमभिघारयति स्रुग्गतं स्थालीगतं च स्थालीगतस्यापि वनस्पतीज्यार्थत्वात् प्रयाजानिष्ट्वा हवींष्यभिघारयतीति श्रुतेश्च ॥

नोपभृतम् । ६ ।

रिक्तत्वादिति भावः ॥

आज्यभागौ यजति । ७ ।

उत्तरविकल्पार्थो ऽनुवादः ॥

तौ न पशौ करोति । न सोम इत्येके । ८ ।

तौ न तावत्स्वतन्त्रे पशौ करोति । तथा सोमे यः पशुर्न तत्रापीत्यर्थः । सोमे य इष्टिपशवो न तत्रेत्यन्ये ॥

स्वाहा देवेभ्य इति पूर्वं परिवाप्यं हुत्वा जुह्वामुपस्तीर्य हिरण्यशकलमवधाय कृत्स्नां वपामवदाय हिरण्यशकलमुपरिष्टात्कृत्वाभिघारयति । ९ ।

परितो वपां हूयेते इति परिवाप्यौ नाम होमौ ॥ तत्रेदं वक्तव्यं स्वाहा देवेभ्य इति मन्त्रस्यान्ते ऽपि स्वाहाकारेण भवितव्यं न वेति । नेति ब्रूयात् आदिगतस्यापि देवतापदमात्रेण व्यवेतस्य प्रदानार्थत्वात् । तत्र च लिङ्गम् । स्वाहाकारान्तेषु पठ्यमानेषु स्वाहा पित्र इति पाठः । तथाश्वलायनके ऽपि पठ्यते स्वाहा वाचे स्वाहा वाचस्पतये स्वाहा सरस्वत्या इति । यत्र तु पदादधिकेन व्यवायः स्वाहा त्वा सुभवः सूर्यायेत्यादौ तत्र भवितव्यमेवान्ते स्वाहाकारेण । तत्र च लिङ्गं स्वाहाधिमाधीताय स्वाहा स्वाहाधीतं मनसे स्वाहा स्वाहा मनः प्रजापतये स्वाहेत्यादि ॥ न तु सर्वस्यैवादिगतस्य स्वाहाकारस्य प्रदानार्थत्वं दर्शितं श्रुतौ पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उप-

रिष्टात्स्वाहाकृतयो ऽन्ये स्वाहा देवेभ्यो देवेभ्यः स्वाहेत्यभितो वपां जुहोति तानेवोभयान्प्रीणातीति । तत्किं व्यवायाव्यवायनिबन्धेन । नैवमनया दर्शितं तत्समानार्थे वाक्यान्तरे श्रुतेरेतदर्थनिर्णयात् यथा पुरस्तात्स्वाहाकारा वा अन्ये देवा उपरिष्टात्स्वाहाकारा अन्ये यद्वपां मह्निभोभयतः परियजति तानेवोभयान्प्रीणातीति । नहि तत्र यः प्राणतो य आत्मदा इत्यनयोर्मह्निभोरादिगतः स्वाहाकारो ऽस्ति येनैवमर्थः स्यात् । कस्तर्हि श्रुतेरर्थः । श्रूयताम् । स्वाहाकारेण तावद्धोमो लक्ष्यते । तदयमर्थः । प्रधानेज्यायाः पुरस्ताद्धोमभाजः केचिदुपरिष्टाद्धोमभाजो ऽन्ये तानुभयानुभयतो कृताभ्यामाहुतिभ्यां प्रीणातीति ॥ किं च । अस्यामेव व्याख्यायामभितो वपां जुहोतीति विधेरयमर्थवादो घटते न व्याख्यान्तरे । तदा यत्र क्वचित्काले ऽप्युभयत्र मन्त्रकृताभ्यामाहुतिभ्यामुभयप्रीणनसिद्धेस्तस्मा-द्यथोक्त एवार्थो ऽवदातः ॥ अथ हिरण्यशकले ऽनुग्रह उक्तो भार-द्वाजेन यदि हिरण्यं न स्यादाज्यात्प्रत्यवद्येदिति । बौधायनस्त्वाह आज्यस्रावं वा हिरण्यशकलं वा द्वितीये चतुर्थे चेति ॥ सांनाय्यवि-कारत्वे ऽपि वपाया हस्तेनैवावदानं न स्रुवेण स्रुवहस्तस्वधितीनां द्रवाद्यवदेयेषु योग्यतया व्यवस्थानात् । बौधायनस्त्वाह स्रुवेण वपां समवलुप्यन्नाहैन्द्राग्निभ्यां छागस्येति । नात्रावदानमन्त्रः स्वण्डमा-भावात् ॥

**एवं पञ्चावत्ता भवति । १० ।**

एवं हिरण्यशकलाभ्यां सह पञ्चावत्ता वपा भवति ॥

चतुरवत्तिनो ऽपि पञ्चावत्तैव स्यात् । ११ ।

गतः ॥

इति विंशी कण्डिका ।

इन्द्राग्निभ्यां छागस्य वपाया मेदसो ऽनुब्रूहीन्द्राग्निभ्यां छागस्य वपाया मेदसः प्रेष्येति संप्रैषौ । १ ।

संप्रैषावेवं भवतः । संप्रैषकालस्तु प्रकृतावेवोक्तो ऽवद्यन्नमुष्मा अनुब्रूहीति ॥

जातवेदो वपया गच्छ देवानिति वषट्कृते हुत्वा प्रत्याक्रम्य देवेभ्यः स्वाहेत्युत्तरं परिवप्यं हुत्वा वपोद्धरणमभिघारयत्युत्तरतस्तिष्ठन् । २ ।

कृते सांनाय्यवद्धुतानुमन्त्रणम् । वपोद्धरणमुत्तरतस्तिष्ठन्नभिघारयति । तथा पश्वभिघारणे ऽपि वक्ष्यत्युत्तरतः परिक्रम्येति ॥

प्रतिप्रस्थाताहवनीये वपाश्रपणी प्रहरति स्वाहोर्ध्वनभसं मारुतं गच्छतमिति प्राचीं द्विशूलां प्रतीचीमेकशूलाम् । एतद्वा विपरीतम् । ३ ।

उभे व्यत्यस्ताग्रे कृत्वा सह प्रहरति गच्छतमिति लिङ्गात् ॥

अथैने अध्वर्युः संस्रावेणाभिजुहोति । ४ ।

गतः ॥

अत्र यजमानो वरं ददात्यनड्वाहं तिस्रो वा धेनूस्तिस्रो वा दक्षिणाः । ५ ।

निरूढपशुबन्धः



अनड्वाहं वरमिति सामानाधिकरण्ये वरग्रहणानर्थक्याद्भेदेन योजनीयम्। वरं गोजातीयमात्रं वा ददात्यनड्वाहं धुर्यमेव वा वरं धेनूः पयस्विनीर्वा तिस्रः दक्षिणा याः काश्चिद्वा गास्तिस्र इति ॥

समुत्क्रम्य सहपत्नीकाः पञ्चभिश्चात्वाले मार्जयन्ते ॥ आपो हि ष्ठा मयोभुव इति तिस्रः ॥ इदमापः प्रवहतावद्यं च मलं च यत्। यद्वाभिदुद्रोहानृतं यद्वा शेपे अभीरुणम् ॥ आपो मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः। निर्मा मुञ्चामि शपथान्निर्मा वरुणादधि। निर्मा यमस्य पड्बीशात्सर्वस्माद्देवकिल्बिषादथो मनुष्यकिल्बिषादिति। ६।

दक्षिणां विधिवत्प्रतिगृह्य सर्वे समुत्क्रम्य सह गत्वा मार्जयन्ते। व्याख्यातं मार्जनम् ॥

इत्येकविंशी कण्डिका ।

इति षष्ठः पटलः ॥

---

पशुपुरोडाशस्य पात्रसंसादनादि कर्म प्रतिपद्यते। १।

पश्वर्थः पुरोडाशः पशुपुरोडाशः तस्य पात्रप्रयोगप्रभृति तन्त्रमारभते ॥

यथार्थं पात्रयोगः। २।

यैरर्थः पुरोडाशस्य तानि प्रयुनक्ति। पात्रान्तराणि तु पश्वर्थमेव प्रयुक्तान्यस्यापि प्रसङ्गेनोपकुर्वन्ति ॥

**निर्वपणकाले व्रीहिमयं पशुपुरोडाशं निर्वपत्येकादशकपालं द्वादशकपालं वा। ३।**

पवित्रे कृत्वा पात्राणि संमृश्य निर्वपणम्। न प्रणीता भवन्ति। पश्वर्थानामेवोपजीवनादिष्टिविधे सोमविधे तूक्तमन्या वा यजुषोत्पूयेति। भारद्वाजस्त्वाह यजुरुत्पूताभिः पिष्टानि श्रपयतीति। बौधायनस्त्वाह प्रोक्षणीशेषेण पिष्टानि संयुयादिति॥ पुनःपशुपुरोडाशवचनात्पशुपुरोडाशः सर्वो व्रीहिमयो भवति न यवमयः। कपालसंख्याप्येषैव सर्वत्र॥

**यद्देवतः पशुस्तद्देवतो भवति। ४।**

इदमपि सार्वत्रिकं वेदितव्यम्॥

**हविष्कृता वाचं विसृज्य पशुं विशास्ति। ५।**

हविष्कृता सह विसृष्टवाचोरध्वर्युयजमानयोः पशुं विशास्ति शमितेति शेषः शमितरेषा ते ऽग्निः स्पष्टास्त्विति लिङ्गात्॥

**हृदयं जिह्वा वक्षो यकृद्वृक्यौ सव्यं दोरुभे पार्श्वे दक्षिणा श्रोणिर्गुदतृतीयमिति दैवतानि। दक्षिणं दोः सव्या श्रोणिर्गुदतृतीयमिति सौविष्टकृतानि। क्लोमानं प्लीहानं पुरीततं वनिष्ठुमध्यूध्नीं* मेदो जाघनीमित्युद्धरति। ६।**

* This word has been corrected whenever it occurs; all MSS. read always अध्युद्धि instead of अध्यूध्नी.

निरूढपशुबन्धः



यकृत् कालखण्डं नाम सव्यपार्श्वस्थं मांसम्। वृक्कौ पार्श्वगतौ पिण्डौ। गुदं त्वविभक्तमेवोद्धरति विभागस्त्वस्य परस्ताद्भविष्यति। क्लोमादीना-मिडाद्यर्थ उद्धारः। क्लोमा नाम यकृत्सदृशं तिलकाख्यं मांसम्। प्लीहा गुल्मः। पुरीतत् अन्त्रम्। वनिष्ठुः स्थविष्ठान्त्रम्। अध्यूध्नी ऊधःस्थानीयं मांसम्। मेदः चर्म हृदयस्य वृक्कयोश्च। जाघनी पुच्छम्॥

## गुदं मा निर्लेषीरिति संप्रेष्यति। ७।

शमितारं संप्रेष्यत्यध्वर्युः। तत्र निर्लेषीरिति को ऽर्थः। तमाह॥

## मा विपर्यास्त* इत्यर्थो भवति। ८।

गुदं च वनिष्ठुं च मा विपर्यास्थाः तयोः सदृशाकृत्योर्मिथो विपर्यासं मा कृथा इत्यर्थः। तयोः सुषिरविपरिवर्तनं विपर्यास इत्यन्ये॥ विप-र्यास्त इति तु पठतां प्रामादिकस्तकारः॥

## उदक् पवित्रे कुम्भ्यां पशुमवधाय शूले प्रणीक्ष्य हृदयं शामित्रे श्रपयति। ९।

कुम्भ्यादीनां प्रतितपनादि पवित्रनिधानान्तं कर्म शामित्रे कृत्वोदक्-पवित्रायां कुम्भ्यां कृत्स्नमुद्धृतं पशुं दुग्धसेचनमन्त्रेण युगपदवधाय श्रपयति। हृदयं तु हृदयशूलप्रोतं कृत्वा प्रत्यक्षेण श्रपयति। श्रपणं तु शमितृकर्म शृतं हवीः शमितरिति लिङ्गात् अग्नेः शामित्रस-माख्यानाच्च॥

---

* Thus all MSS.

**अवहननादि कर्म प्रतिपद्यते। १०।**

अवहननादि प्रतिपद्याप्येभ्यो निनीय लौकिकैर्दर्भैः प्राशित्रं संमार्ष्टि। ऊहेनादाय ततः प्रस्तरे पवित्रे अपिसृज्य पुरोडाशमुद्वास्यासादयति॥

**वपया प्रचर्य पुरोडाशेन प्रचरति। सृते वा पशौ। ११।**

व्यवस्थितविकल्पार्थो वाशब्दः। एवं वपाप्रचारानन्तरं पुरोडाशं निरुप्यासाद्य शृते पशौ तेन प्रचरति। यद्वा पशुमालभ्य पुरोडाशं निर्वपति समेधमेवैनमालभते वपया प्रचर्य पुरोडाशेन प्रचरतीति ब्राह्मणानुसारेण पशुसंज्ञपनानन्तरमेव पुरोडाशं निरुप्य वपाप्रचारानन्तरं तेन प्रचरतीत्यर्थः। तथा च भारद्वाजः पशुमालभ्य पुरोडाशं निर्वपतीति विज्ञायते ऽनन्तरवादो ऽभिप्रेतो वपया प्रचर्य पुरोडाशेन प्रचरतीति। बौधायनश्चाह पशुमालभ्य पुरोडाशं निर्वपेदिति शालीकिरिति॥

**इन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहीन्द्राग्निभ्यां पुरोडाशस्य प्रेष्येति संप्रैषौ॥ इन्द्राग्निभ्यां पुरोडाशस्यावदीयमानस्यानुब्रूहीन्द्राग्निभ्यां पुरोडाशस्य प्रेष्येति वा। १२।**

पूर्ववद्व्याख्या॥

**अग्नये ऽनुब्रूह्यग्नये प्रेष्येति स्विष्टकृतः संप्रैषौ। १३।**

नात्र नारिष्ठाः न चान्तःपरिध्यर्पा निनयनम्। पश्वर्थानामेव प्रसङ्गाद्धुतानुमन्त्रणे ऽप्यग्नेरहमिति विकारः॥

इति द्वाविंशी कण्डिका।

निरूढपशुबन्धः



**प्राशित्रमवदायेडां न यजमानभागम्।१।**

अवद्यतीति विपरिणामेनान्वयः। तेषां प्राशित्रेडमेवावद्यति न तत्स-मसमयं यजमानभागमित्यर्थः॥

**हविराहुतिप्रभृतीडान्तः संतिष्ठते।२।**

यदतो ऽङ्गजातं प्रयाजानुयाजादि तत्सर्वं पश्वर्थमेवानुष्ठितं प्रसङ्गेनो-पकरोतीति भावः। एवं च तत्रालब्धप्रसङ्गं यद्वैशेषिकमङ्गं पुरोडा-शस्य यथा फलीकरणहोमः। कपालविमोचनं चेति तत्रैव कर्तव्य-मित्युक्तं भवति। तत्र च लिङ्गं सवनीयानामिडान्ते वैशेषिकाणामनु-क्रमणम्। भारद्वाजसत्याषाढौ चाहतुः अत्र पशुपुरोडाशस्य पिष्ट-लेपफलीकरणहोमौ जुहोति कपालविमोचनं चेति। स्वकाले कार्याणीत्यपरं उत्कर्षेदित्यपरमिति लिङ्गात्॥ यजमानभागस्य तु वाचनिको निषेधः। केचित्तु वाचनिकमिडान्तत्वमिष्ट्वा नान्यदपि प्रतिषेधन्ति। तेषां यजमानभागावदानप्रतिषेधो ऽनर्थकः स्यात् प्राशनाभावादेवावदाननिवृत्तेः॥

**उपहुतां मैत्रावरुणषष्ठा भक्षयित्वा पूर्ववत्प्रस्तरे मार्जयित्वा स्रुवेण पृषदाज्यस्योपहत्य वेदेनोपयम्य त्रिः पृच्छति शृतं हवी३ः शमितरिति।३।**

भक्षणवचनं मैत्रावरुणाय विधानार्थम्। तस्य चाप्राकृतस्यापि अनु-वाक्याप्रैषयोर्वक्तृत्वेन होत्रध्वर्युविकारत्वाल्लक्षणप्राप्तिरिति भावः। मार्जनवचनं तु भक्षणशेषत्वं मार्जनस्य ख्यापयितुम्। अतो यद्यदि-

डान्तमुक्तं तन्मार्जनान्तं भवति । पृषदाज्यग्रहणं स्थालीगतस्येष्टं स्रुग्गतस्यानुयाजार्थत्वात् । उपहत्य गृहीत्वा ॥

शृतमितीतरः प्रत्याह । ४ ।

शमिता तु सुपरीक्षितपाकः प्रत्याह । यो ऽशृतं शृतमाह स एनसेति दोषः श्रूयते ॥

अर्धाध्वे द्वितीयं प्राप्य तृतीयम् । ५ ।

द्वितीयं तृतीयं पृच्छतीत्यन्वयः ॥

पूषा मा पशुपाः पात्विति प्रथमे ऽभिप्रव्रजति । पूषा मा पथिपाः पात्विति द्वितीये । पूषा माधिपाः पात्विति तृतीये । ६ ।

प्रथमे द्वितीय इति प्रतिप्रश्ने कृत इति शेषः । तथा पृष्ट्वाभिक्रामेत्पूषा मेति द्वितीयं पृष्ट्वापक्रामेत्पूषा मेत्येव बौधायनः ॥

शूलात्प्रवृह्य हृदयं कुम्भ्यामवधाय सं ते मनसा मन इति पृषदाज्येन हृदयमभिघारयत्युत्तरतः परिक्रम्य । ७ ।

तृतीयेन गमनमन्त्रेणोत्तरतः परिक्रम्य हृदयमभिघारयति । न चात्रोत्तरतः परिक्रम्येत्यस्योत्तरसूत्रेण सह योजना शङ्कनीया त्रिभिः प्रश्नैस्त्रिभिर्मन्त्रैस्त्रिभिश्चाध्वनो ऽवच्छेदैर्विशिष्टस्य गमनस्योभयोरपि हृदयपश्वभिघारणयोरङ्गत्वात् तस्य चामिर्दृष्टत्वात् व्यक्तोक्तत्वाच्च भार-

निरूढपशुबन्धः



द्वाजसल्याषाढाभ्याम्। उत्तरतः परीत्य पृषदाज्येन हृदयमभिघार-यतीत्यर्थः॥

आज्येन पशुं यत्त आत्मा पशुषु प्रविष्ट इति।८।

पशुमाज्येनाज्यस्थाल्या आनीतेनाभिघारयति उत्तरत एव स्थितः॥

स्वाहोष्मणो व्यथिष्या इत्युद्यन्तमूष्माणमनुमन्त्रयते।९।

उद्यन्तं ऊर्ध्वं यन्तम्॥

पशुं हरन्पार्श्वतो हृदयशूलं धारयत्यनुपस्पृशन्ना-त्मानमितरांश्च।१०।

सांनाय्यवत्पशुमुद्वास्य हरन् कुम्भ्याः पार्श्वतो हृदयशूलं धारयति न च तेन हस्तधृतेनोपस्पृशत्यङ्गान्तरमन्यांश्च। धारणमपि तस्य रज्ज्वादिना बद्ध्वा न साक्षाद्धस्तेनेत्येके॥

अन्तरा यूपमाहवनीयं च दक्षिणातिहृत्य पञ्चहोत्रा षड्ढोत्रा वा दक्षिणस्यां वेदिश्रोण्यामासाद्य चतसृषूप-स्तृणीते जुहूपभृतोर्वसाहोमहवन्यां समवत्तधान्या-मिति।११।

अतिहरणं व्याख्यातम्। समवत्तधानी इडापात्रम्॥ तत्रेदमिन्द्रि-यमित्यासन्नाभिमर्शनमन्त्रे हविर्मयि श्रयतामिति संनामः। तत्र च लिङ्गानि छागस्य हविषो ऽनुब्रूहि मनोतायै हविषो ऽवदीयमानस्य

अथ हविषा प्रचरति यदि वपा हविरवदानं वेत्यादीनि। आश्वला-यनस्त्वाह वपा पुरोडाशो हविरिति पशोः प्रदानानीति॥

जुहूपभृतोर्हिरण्यशकलाववधाय बर्हिषि प्लक्षशाखायामवदानान्यवद्यन्संप्रेष्यति। १२।

इति त्रयोविंशी कण्डिका।

मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति। १।

बर्हिःप्लक्षशाखयोस्तत्तदङ्गं निधाय स्वधितेरक्तया धारयावदानमन्त्रेण छिनत्ति। प्रक्रान्ते चावदाने मनोतायै संप्रैषः॥

हृदयस्याग्रेऽवद्यति। अथ जिह्वाया अथ वक्षसो याथाकामीतरेषाम्। २।

त्रयाणामेवैतेषां क्रमनियमो याथाकाम्यमितरेषामङ्गानाम्॥

मध्यतो गुदस्यावद्यतीत्युक्तम्। ३।

उक्तमिदं ब्राह्मणे मध्यतो गुदस्यावद्यति मध्यतो हि प्राण उत्तम-स्यावद्यतीति। तेन दैवतानामवदानानां मध्यतोऽन्ततो वा गुदाव-दानमित्यर्थः॥

यथोद्धृतं वा। ४।

यः प्रथम उद्धरणे क्रम उक्तः स एवावदानेऽप्यस्तु॥

**दैवतानां द्विर्द्विरवदाय जुह्वामवदधाति। उपभृति सौविष्टकृतानां सकृत्सकृत्। ५।**

दैवतसौविष्टकृतविभागः प्रागेव दर्शितः॥ तत्र दैवतानि सर्वाण्यवदाय ततः सौविष्टकृतान्यवद्यति। तत्राह भारद्वाजः प्रत्यभिघार्य त्र्यङ्गाणि स्विष्टकृते सकृदिति। पञ्चावत्तिनस्तु त्रिस्त्रिर्दैवतेभ्यो द्विर्द्विः सौविष्टकृतेभ्य इति द्रष्टव्यं पञ्चावत्तं सर्वत्रेति नियमात् स्वधितिना धारां छिनत्ति द्विः पञ्चावत्तिन इति लिङ्गाच्च॥

**गुदं त्रैधं विभज्य स्थविमदुपयड्भ्यो निधाय मध्यमं द्वैधं विभज्य दैवतेष्ववदधाति। अणिमत्सौविष्टकृतेषु। ६।**

गुदस्यावदानकालः प्रागेवोक्तः। तस्यैवेदानीं विभागप्रकार उच्यते। यदा दैवतार्थं गुदादवद्यते तद्दैवतं त्रेधा विषमं विभज्य स्थूलखण्डमुपयड्ढोमार्थं निधाय मध्यमपरिमाणं खण्डमवदानमन्त्रेण द्वेधा छित्त्वा दैवतेष्ववदधाति। अणु तु खण्डं स्वकाले सौविष्टकृतेषु॥ पञ्चावत्तिनस्त्वत्रापि त्रेधा द्वेधा च विभागः पूर्ववत्॥

**अपि वा द्वैधं विभज्य स्थविमदुपयड्भ्यो निधायेतरत्त्रैधं विभज्य मध्यमं द्वैधं विभज्य दैवतेष्ववदधाति। अणिमत्सौविष्टकृतेषु स्थविष्ठमिडायाम्। ७।**

गुदादपीडावदानमिच्छतोऽयं विभागः॥

**त्रेधा मेदोऽवद्यति द्विभागं स्रुचोस्तृतीयं समवत्तधान्याम्। ८।**

अवत्तेषु स्रौविष्टकृतेषु मेदस्त्रेधा विभज्य तृतीयमिडार्थं निधायेतरौ भागौ स्रुचोः क्षिपति ॥

यूषे मेदो ऽवधाय मेदसा स्रुचौ प्राच्छाद्य हिरण्यशकलावुपरिष्टात्कृत्वाभिघारयति । ९ ।

यूषे पशुरसे मेदो मज्जयित्वा तेन स्रुग्गतान्यङ्गानि प्रच्छादयति ॥

समवत्तधान्यां षडाद्यानीडामवद्यति वनिष्ठुं सप्तमम् । षड्भ्यो वा वनिष्ठोः सप्तमात् । १० ।

अवशिष्टानामङ्गानां मध्ये यथोद्धृतं षडाद्यानि कृत्स्नानीडामवद्यति वनिष्ठुं च सप्तमम् । अत एव नावदानमन्त्रः न च यजमानभागः । यदा तु षड्भ्यः तदा सर्वं प्रकृतिवत् ॥

अनस्थिभिरिडां वर्धयति । ११ ।

शिष्टेष्वङ्गेषु यान्यनस्थीनि तैरिडां वर्धयति । कानि पुनस्तानि ॥

क्लोमानं सौहानं पुरीततमित्यन्ववधाय यूष्णोपसिच्याभिघारयति । १२ ।

इतिकरणो ऽध्यूध्नीमेदस्तृतीययोः प्रदर्शनार्थः । तत्र मेदः पूर्वमवदाय ततः क्लोमादीनीत्यपरे ॥

इति चतुर्विंशी कण्डिका ।

इति सप्तमः पटलः ॥

अपां त्वौषधीनां रसं गृह्णामीति वसाहोमहवन्यां वसाहोमं गृह्णाति। १।

वसा पशुरसः। स एव होमस्तत्साधनत्वादभिप्रेतः तं वसाहोमं गृह्णाति। श्रुतिप्रसिद्ध्या तु तथा निर्देशः॥

स्वधितिना धारां छिनत्ति। २।

दक्षिणेन गृह्णन्सव्येन छिनत्ति॥

द्विः पञ्चावत्तिनः। ३।

गतः॥

ओरस्मीति पार्श्वेन वसाहोमं प्रयौति। ४।

प्रयौति लोडयति॥

वातस्य त्वा ध्रज्या इति तेनैवापिदधाति। स्वधितिना वा प्रयौति। स्वधितिनापिदधातीत्येके। ५।

गताः॥

अथ यन्न शीर्ष्णो ऽवद्यति नांसयोर्नाणूकस्य नापरसक्थ्योरनवदानीयानि। ६।

अंसौ स्कन्धौ तावन्तरास्थिविशेषो ऽणूकः। श्रोण्योरुपरिदेशावपरसक्थिनी। एतेभ्यो ऽङ्गेभ्यो यन्नावद्यत्यनुद्धरणात् तेनैतान्यनवदानीयानीत्याख्यायन्ते यथा सुराग्रहांस्तानवदानीयानि च वाजसन इत्यादौ।

स्वयं च वक्ष्यति मारुत्या अनवदानीयानीति। अस्त्वेवं किं तैरि-दानीम् ॥

**तानि शृतैः संनिधाय संमृशत्यैन्द्रः प्राणो अङ्गेअङ्ग इति। ७।**

तान्यनवदानीयानि शृतैर्दैवतसौविष्टकृतैडैः सह निधायोभयानि संमृशतीत्यर्थः। तथा शृतमशृतं च पशुं संनिधाय संमृशतीति सत्याषाढः ॥

**अथ हविषा प्रचरति। ८।**

हविःशब्दो ऽङ्गावदानेषु प्रसिद्धः ॥

**इन्द्राग्निभ्यां छागस्य हविषो ऽनुब्रूहीन्द्राग्निभ्यां छागस्य हविषः प्रेष्येति संप्रैषौ। ९।**

गतः ॥

**याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहोति घृतं घृतपावानः पिबतेति। १०।**

मन्त्रमध्यगस्वाहाकारो न प्रदानार्थः मध्यमे स्वाहाकार इति लिङ्गात्। तेनान्ते स्वाहाकारेण जुहोति ॥

**उद्रेकेण दिशः प्रदिश इति प्रतिदिशं जुहोति। मध्ये पञ्चमेन। ११।**

उद्रेकः शेषः। पञ्चमेन मन्त्रेण ॥

निरूढ पशुबन्धः



**प्राञ्चमुत्तमं संस्थाप्य नमो दिग्भ्य इत्युपतिष्ठते। १२।**

षष्ठं होमं मध्यादारभ्य प्राञ्चं समाप्य ता एव दिश उपतिष्ठते मन्त्रलिङ्गात् ॥

**वषट्कृते जुहोति। १३।**

हविरिति शेषः। सांनाय्यवद्धुतानुमन्त्रणम् ॥

**अत्र वा दिशः प्रति यजेत्। उपरिष्टाद्वा वनस्पतेः स्विष्टकृतो वा। १४।**

अत्र कृते हविषि इष्टे वा वनस्पताविष्टे वा स्विष्टकृति दिशां यागः। वसाहोमस्तु सर्वत्र याज्याया अर्धर्च एव ॥

**प्रत्याक्रम्य जुह्वामुपस्तीर्य सकृत्पृषदाज्यस्योपहत्य द्विरभिघार्य वनस्पतयेऽनुब्रूहि वनस्पतये प्रेष्येति संप्रैषौ। वषट्कृते जुहोति। १५।**

प्रत्याक्रम्य कृत्वा नारिष्ठात्पृषदाज्यं गृह्णाति स्थाल्याः स्रुग्गतस्यानुयाजार्थत्वात्। द्विस्तु पञ्चावत्तिनः ॥

**स्विष्टकृद्वद्यजमानोऽनुमन्त्रयते। १६।**

यथा वनस्पतेरहं देवयज्ययायुष्मानित्यादि ॥

**उपर्याहवनीये जुह्वामौपभृतानि विपर्यस्यन्नाहाग्नये स्विष्टकृतेऽनुब्रूह्यग्नये स्विष्टकृते प्रेष्येति संप्रैषौ। १७।**

इडिपात्रः स्थित एवोपभृतानि जुह्वां गमयन्नाहानुवाक्यामंप्रैषं ततो याज्याया इत्यर्थः ॥

वषट्कृते हुत्वा प्रत्याक्रम्यायतने स्रुचौ सादयति ।१८।

उत्तरविधानार्थो ऽनुवादः ॥

इति पञ्चविंशी कण्डिका ।

अत्रेडाया निरवदानमेके समामनन्ति ।१।

अत्र स्रुक्सादनानन्तरं प्राकृत एव काल इति भावः। निरवदानं पृथक्करणम् ॥

अवान्तरेडामवद्यति ।२।

उत्तरविवक्षयानुवादः ॥

मेद उपस्तीर्य मेदसाभिघारयति ।३।

गतः ॥

यं कामयेतापशुः स्यादित्यमेदस्कं तस्मा इत्युक्तम् ।४।

तस्मादादर्तव्यं मेद इति भावः ॥

उपहूतां मैत्रावरुणषष्ठा भक्षयन्ति। प्रतिप्रस्थाता सप्तमः ।५।

षडुपुरोडाशादवशिष्टमेव वर्त्मा भक्षणम्। प्रतिप्रस्थातात्यत्राधिकः तस्यापि पश्वङ्गभूतवपाश्रपणात्मकप्राकृतकार्यान्वयादिति भावः॥

वनिष्ठुमग्नीधे षडवत्तं संपादयति। ६।

यदा कृत्स्नो वनिष्ठुरिडायामवत्तस्तदा तमिडांशेन सहाग्नीधे प्रयच्छति स चेडावद्भक्षयति। यदा वनिष्ठ्वेकदेशो ऽवत्तस्तदावत्तशिष्टं मार्जनान्ते प्रयच्छति स त्वाग्नीध्रभागवद्भक्षयति॥

अध्यूध्नीं होत्रे हरति। ७।

अध्यूध्नी अपीडायामेवाधिकांशो होतुर्नियम्यते अनन्यत्वात॥

अग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीत्परिधींश्चाग्निं च सकृत्सकृत्संमृड्ढीति संप्रेष्यति। ८।

उपयजो नाम वक्ष्यमाणा होमाः तदर्था औपयजाः तेषां होतोपयष्टा। व्याख्यातः शेषः॥ नन्वेते ऽङ्गाराः कुत्राहर्तव्याः कुत्र चोपयष्टोपसीदति कश्चासौ। तत्सर्वं क्रमादाह॥

आग्नीध्रादौपयजानङ्गारानाहरति। होत्रीय उपयजति। ९।

सौमिके पशाविति शेषः। लाघवार्थमिह वचनम्॥

शामित्रान्निरूढपशुबन्ध उत्तरस्यां वेदिश्रोण्याम् । १०।

शामित्रादाहरति श्रोणामुपयजतीत्यर्थः। बौधायनेन त्वचोक्तं अतो ह स्माह बौधायनः आहवनीयादेवोदीचो ऽङ्गारान्निर्वर्त्य तेषूपयष्टोपयजेदिति। तेन पश्वश्रपणादूर्ध्वं शामित्रानुगतौ उपयजामप्रयोजकत्वे ऽप्याहवनीयाङ्गारेषूपयागो युक्तः। न तु गुदहोमलोप इति द्रष्टव्यम् ॥

गुदकाण्डमेकादशधा तिर्यक् छित्त्वासंभिन्दन्नपर्यावर्तयन्ननूयाजानां वषट्कृतेवषट्कृत एकैकं गुदकाण्डं प्रतिप्रास्थाता हस्तेन जुहोति समुद्रं गच्छ स्वाहेत्येतैः प्रतिमन्त्रम्। ११।

संभेदः संकरो दारणं वा। सुच्यभ्यन्तरभागस्य बहिःपरिवर्तनं पर्यावर्तनम् ॥

सर्वाणि हुत्वाद्भ्यस्त्वौषधीभ्य इति बर्हिषि लेपं निमृज्य मनो मे हार्दि यच्छेति जपति। पृषदाज्यं जुह्वामानीय पृषदाज्यधानीमुपभृतं कृत्वा तेनैकादशानूयाजान्यजति। १२।

गतौ ॥

देवेभ्यः प्रेष्येति प्रथमं संप्रेष्यति। प्रेष्य प्रेष्येतीतरान्। १३।

प्रथममनूयाजं प्रति देवेभ्यः प्रेष्येति प्रशास्तारं संप्रेष्यति। केवलं प्रेष्येतीतराननूयाजान् ॥

निरूढ पशुबन्धः



**ताान्यजमानः प्राकृतैरनुमन्त्रयते । १४ ।**

प्राकृतैर्ङ्गानुमन्त्रणमन्त्रैरिति शेषः ॥

इति षड्विंशी कण्डिका ।

---

**प्रथमेनाद्यांश्चतुरो दशमं च। द्वितीयेन प्राग्वनस्पतेः। उत्तमेन शेषम् । १ ।**

आद्याश्चत्वारो दशमश्च प्रथमविकाराः ततः परे चत्वारो द्वितीयस्य नवमैकादशावुत्तमस्य । अतस्तेनतेन मन्त्रेण तांस्ताननुमन्त्रयते। यथा बर्हिषो ऽहं देवयज्यया प्रजावान् द्वारामहं देवयज्यया प्रजावान् बर्हिषो वारितीनामित्यादि तथोर्जाहुत्योरहं देवयज्यया पशुमान् दैव्ययोर्होत्रोरहं तिसृणां देवीनामहमित्यादि तथा वनस्पतेरहं देवयज्ययायुष्मानित्यादि । तथा तत्तद्विकाराणां तत्तद्देशत्वमप्यनुसंधातव्यम् ॥

**उत्तरयोर्विकारेषूभौ होतारं चोदयतो ऽध्वर्युर्मैत्रावरुणश्च यजेति । २ ।**

दर्शितमेतत्प्रकृतौ यदुत्तरावनूयाजौ द्वियजाविति । इदानीं तद्विकाराणामपि संपाद्यत इति वेदितव्यम् ॥

**अत्र स्वरोरञ्जनमेके समामनन्ति । ३ ।**

द्वितीयमत्राञ्जनं स्वरोः पक्षे विधीयते न तु पूर्वस्यैवाञ्जनस्य कालविकल्पमात्रं तस्य पशुसंस्कारार्थत्वेन तत्रैव नित्यत्वात् । तथा च

मन्त्रवर्णः घृतेनाक्तौ पशुं त्रायेथामिति। व्यक्तं चैतद्भारद्वाजीयादौ नित्यवदुभयत्राञ्जनवचनात्॥

**प्रत्याक्रम्य जुह्वां स्वरुमवधायानूयाजान्ते जुहोति द्यां ते धूमो गच्छत्वन्तरिक्षमर्चिः पृथिवीं भस्मना पृणस्व स्वाहेति। ४।**

अनूयाजान्त इति वैचित्र्यार्थम्। अनूयाजसमाप्तिदेश इत्येके॥

**समानमा प्रत्याश्रावणात्। ५।**

तत्राह भारद्वाजः सर्वा जुह्वप्रभृतो वाजवतीभ्यां व्यूहति सर्वासु स्रुक्षु प्रस्तरमनक्तीति॥

**सूक्तवाकप्रैषो विक्रियते। ६।**

विक्रियते कर्तृतो मन्त्रतश्च। कथम्॥

**तं मैत्रावरुणो ब्रूयादग्निमद्य होतारमवृणीतेति। ७।**

इषिता दैव्या इत्याध्वर्यवप्रैषो निवर्तते॥

**ध्रुवावर्जं चतसृभिः परिधीनभिजुहोति। ८।**

अतिरिक्तत्वाद्ध्रुवायाः प्राकृते परिध्यभिहोमेऽनन्वयाच्च सिद्धस्यैव ध्रुवावर्जनस्य वचनमसंदेहार्थम्॥

**दक्षिणेन विहारं जाघनीं हृत्वा तया पत्नीः संयाजयन्ति। ९।**

निरूढपशुबन्धः



पूर्वस्मिन्गार्हपत्ये पत्नीसंयाजाः। तत्र पाण्डुकयोरपि स्रुचोः कस्तम्भ्यां सादनं विमोचनार्थत्वात्। तथा च भारद्वाजः सर्वाः स्रुचः कस्तम्भ्यां सादयतीति। सादनमन्त्रस्य तूहः प्रकृतावेव दर्शितः॥

आज्येन सोमत्वष्टाराविष्टोत्तानायै जाघन्यै देवानां पत्नीभ्योऽवद्यति। नीच्या अग्नये गृहपतये। १०।

यत्र न सन्ति लोमानि स उत्तानो भागः इतरो ऽन्यः। सर्वाण्यवदानानि जाघन्या एव भवन्ति आज्यस्थानापन्नत्वात्। तथा जाघनीं प्रकृत्याह भारद्वाजः चतुःकृत्वश्चतुरवदानस्य पञ्चकृत्वः पञ्चावदानस्य मात्रोपस्तरणाभिघारणानि भवन्तीति॥

उत्तानायै होत्र इडामवद्यति नीच्या अग्नीधे। ११।

इडास्थानित्यनुमन्त्रणे घृतशब्दस्यानूहः प्रकृतावेव दर्शितः॥

तां पत्न्यै प्रयच्छति तां साध्वर्यवेऽन्यस्मै वा ब्राह्मणाय। १२।

गतौ॥

बाहुं शमित्रे। १३।

बाहुर्दोः। स लेको हविःशेषभक्षणदशायामभक्षितस्तिष्ठति॥

तं स ब्राह्मणाय यद्यब्राह्मणो भवति। १४।

अत एव च लिङ्गादिष्टशिष्टं मांसं ब्राह्मणाय देयं भक्ष्यं चास्येति सिद्धं भवति॥

**यज्ञ यज्ञं गच्छेति त्रीणि समिष्टयजूंषि हुत्वानुपस्पृशन्हृदयशूलमुदङ् परेत्यासंचरेऽप उपनिनीय शुष्कार्द्रयोः संधावुद्वासयति शुगसीति द्वेष्यं मनसा ध्यायन्। १५।**

संपत्नीयादि समानमा समिष्टयजुषः। तत्र पिष्टलेपफलीकरणहोमौ पशुपुरोडाश एव व्याख्यातौ। ततस्त्रीणि समिष्टयजूंषि हुत्वा प्राकृत एव स्थाने बर्हिरनुप्रहृत्य ततः प्रातर्दोहवद्यजमानभागप्राशनं यदा षड्भ्य इडा भवति। ततो वेद्यभिस्तरणादि आध्वर्यवशेषं संस्थाप्य पूर्ववदनुपस्पृशन्हृदयशूलं हुत्वा द्विपदां चतुष्पदां च पशूनामसंचरेऽपास्यति॥ तत्र च शुगसि तमभिशोचेत्येव मन्त्रः। न तु शत्रोर्नामग्रहणं अनदःशब्दात् मनसा ध्यायन्निति वचनाच्च॥

**सुमित्रा न आप ओषधय इति तस्मिंश्चात्वाले वा सहपत्नीका मार्जयित्वा धाम्नोधाम्नो राजन्नुदुत्तममित्यादित्यमुपस्थायैधोऽस्येधिषीमहीत्याहवनीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते। १६।**

व्याख्यातं मार्जनम्। तत्तस्मिन्हृदयशूले कुर्वन्ति। तथा चाश्वलायनः तस्योपरिष्टादप उपस्पृशन्तीति॥ समिधामेकैकस्येनाधानं मन्त्रलिङ्गात्। समिदसीत्येतावान्द्वितीयो मन्त्रः॥ पत्न्यास्तूपस्थानमन्त्रे पयस्वत्यग्न आगमं तां मेति विकारः॥ अथ प्रणीतामार्जनविष्णुक्रमेषु याजमानक्रमप्राप्तेषु तेषां प्रवृत्तिविकल्पं शाखान्तरोक्तं दर्शयति॥

इति सप्तविंशी कण्डिका।

निरूढपशुबन्धः



इष्टिविधो वा अन्यः पशुबन्धः सोमविधो ऽन्यः। स यत्रैतदपः प्रणयति पूर्णपात्रं निनयति विष्णुक्रमा-न्क्रामति स इष्टिविधो ऽतो ऽन्यः सोमविध इति वाज-सनेयकम्। १।

इष्टेरिव विधा यस्य स इष्टिविधः। तथा सोमविधः। के पुनस्ते विधे। सो ऽयं कर्ता यत्रैतद्यथाप्रसिद्धं पश्वर्थमपः प्रणयति तास्तान्ते ऽन्तर्वेदि निनयति विष्णुक्रमांश्च क्रामति स इष्टिविधः। यत्रैतत्त्रयं न करोति स सोमविधः। एतदुक्तं भवति त्रयमेव तत्पशौ कर्तव्यं वा न वेति॥ तत्र यदा दृष्टार्थाः प्रणीतास्तदार्थलुप्तत्वादासां दृष्टा-र्थपक्षे प्रणयनमुच्यते। यदा त्वदृष्टार्थास्तदा नित्यप्राप्तौ पक्षे निव-र्त्यन्ते। विष्णुक्रमाणां तु नित्यप्राप्तानामेव पक्षे निवृत्तिर्वचनादिति द्रष्टव्यम्॥

यूपं यजमान उपतिष्ठते नमः स्वरुभ्यः सन्नान्मावगातापश्चाद्दघ्वान्नं भूयासम्॥ शृङ्गाणीवेच्छृङ्गिणां संद-दृश्रिरे चषालवन्तः स्वरवः पृथिव्याम्। ते देवासः स्वरवस्तस्थिवांसो नमः सखिभ्यः सन्नान्मावगात॥ आशासानः सुवीर्यमिति च। २।

यत्प्रागयज्ञ शं च म इति जपात्तत्सर्वोपतिष्ठते। तथा चोत्तरसूत्रे ऽपि वक्ष्यति॥

उपस्थाय यज्ञ शं च म इति जपति। ३।

यूपमुपस्थाय ततो यज्ञ शं च म इति जपति। स्रोत्रेन पशुना वेष्ट्वा जपतीत्यनेनैव जपस्य सिद्धत्वात्क्रमार्थमिदं वचनम्॥ अथ यूपप्रसङ्गात् संस्थिते कर्मणि यूपस्पर्शने प्रायश्चित्तमाह॥

आहुत्यै वा एतं वनस्पतिभ्यः प्रच्यावयन्त्युपयज्य मनुष्याः प्रयान्ति। यूपो वै यज्ञस्य दुरिष्टमामुञ्चते। यद्यूपमुपस्पृशेद्दुरिष्टं यज्ञस्यामुञ्चेत्तमभिमन्त्रयेत वायवेष ते वायविवत्येकम्। वायवेतौ ते वायविति द्वौ। वायवेते ते वायविति बहून्। ४।

आहुत्यै आहुत्यर्थं वनस्पतीज्यया स्योपकर्तुमेनं यूपं वनस्पतिसकाशा-द्यज्ञार्थं निर्वहन्ति मनुष्याः तेनोपयज्य पश्विज्यां कृत्वा गृहान्प्रयान्ति च। अत एव लिङ्गादवगतं उदवसाय पशुना यष्टव्यमिति। उपय-ज्येति यजेश्छान्दसः संप्रसारणाभावः॥ एवमाहुत्या परिक्रीतो यूपो यद्यज्ञस्य दुरिष्टं तदात्मन्यारोपयति। तमेतमामुक्तकिल्बिषं यूपं यदि कश्चिदुपस्पृशेत्तत्किल्बिषमात्मनि संक्रमयेत्। अतस्तन्निबर्हणार्थं तमेव यूपमभिमन्त्रयेत वायवेष त इति। तत्र यूपैकादशिन्यादौ द्विबहूनां युगपत्काले स्पर्शने द्वितीयतृतीयाभ्यामभिमन्त्रणं न त्वाद्य-स्यावृत्तिः तयोराम्नानसामर्थ्यात्॥ एष सर्वार्थो विधिर्न केवलं यजमानस्य। कस्मात्। संस्थिते कर्मणि सर्वेषामेव यूपस्पृष्टौ दोषस्म-रणात् हिरण्यकेशिना सर्वाधिकारेण गृह्यकाण्डे तद्वचनाच्च॥

ऐन्द्राग्नो निरूढपशुबन्धः सौर्यः प्राजापत्यो वा।५।

एतास्तिस्रो देवता निरूढे पशौ विकल्पन्ते॥

निरूढपशुबन्धः



तेन संवत्सरेसंवत्सरे यजेत। षट्सुषट्सु मासेष्वित्येके। ६।

तेन प्रतिसंवत्सरं सकृद्यजेत षट्सुषट्सु वा मासेषु। किं तत्रानियतः कालः। नेत्याह॥

ऋतुव्यावृत्तौ सूयवस आवृत्तिमुख आवृत्तिमुखे वा। ७।

ऋतुव्यावृत्तिः ऋत्वन्तः। नवसलिलसंवृद्धाः शोभना यवसाः शष्पाणि यस्मिन्काले स सूयवसः प्रावृडिति यावत्। आवृत्तिमुखमित्ययनाख्या। तदयमर्थः। यदा सकृत्संवत्सरेज्या तदा यस्य कस्यचिदृतोर्व्यावृत्तौ सूयवसे यजेत। यदा तु षट्सु मासेषु तदावृत्तिमुखयोरिति॥ तथा च कात्यायनः पश्विज्या संवत्सरेसंवत्सरे प्रावृड्व्यावृत्तिमुखयोर्वेति। केचित्पुनर्ऋतुव्यावृत्तावित्यनेन षट्स्वृतुव्यावृत्तिषु षट्कृत्वः संवत्सरस्य यागमुक्तं मन्यन्ते। तदयुक्तं मन्यन्त आवृत्तिमुखवदनभ्यासादेकवचनाच्च। एवं सकृद्द्विर्वा संवत्सरस्य पश्विज्या कार्येत्युक्तम्॥ इदानीं सकृदपि तदक्रियायां न केवलमदृष्ट एव प्रत्यवायः किं तु दृष्टो ऽपि। तस्मान्नानिष्टपशुनातिक्रमितव्यः संवत्सर इति दर्शयन्नादरविशेषार्थं श्रुतिमेव तत्रोदाहरति॥

मांसीयन्ति ह वा अग्नयो ऽजुह्वतो यजमानस्य। ते यजमानमेव ध्यायन्ति। यजमानं संकल्पयन्ति। पचन्ति ह वा अन्येष्वग्निषु वृथामांसम्। अथैतेषां

नान्या मांसाशा विद्यते। यस्यो चैते भवन्ति तं ततो नानीजानं पशुना संवत्सरो ऽतीयात्। आयुष्यो ह वा अस्यैष आत्मनिष्क्रयण इति वाजसनेयकं भवति भवति। ८।

मांसमजुह्वतो यजमानस्याग्नयो मांसीयन्ति मांसमात्मन इच्छन्ति। ते यजमानमेव ध्यायन्ति कदा खिन्नो मांसं दास्यतीति। ततस्खेनमदित्सन्तं संकल्पयन्ति इममेव यजमानाधमं भक्षयिष्याम इति॥ कथमेवं नृशंसमभिमंस्यन्त इति चेत् किमत्र नृशंसम्। लौकिकेषु ह्यग्निषु वृथामांसं लौकिकमांसं मनुष्याः पचन्ते अश्नन्ति च तत्पच्यमानमग्नयः॥ अथैतेषां यजमाननियन्त्रितानामग्नीनामन्तरेण पशिज्यां न मांसान्तराशास्ति। तस्मात्कारणाद्यस्य खल्वेते ऽग्नयो भवन्ति य आहिताग्निरिति यावत् तं पशुनानीजानमनिष्टवन्तं न कश्चित्संवत्सरो ऽतीयात् तत्रैव संवत्सरे यजेत। आयुषे हितो ह्यस्य यजमानस्यैष पशुः यदग्निभ्यो बिभक्षयिषद्भ्य आत्मानं निष्क्रीणाति। तस्मान्नैवैनमतिपादयेदिति॥

इत्यष्टाविंशी कण्डिका।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बसूत्रवृत्तौ सूत्रदीपिकायामष्टमः पटलः।

इति सप्तमः प्रश्नः॥

# LIST OF ERRATA.

Page 1 line 13 disjoin एतं एतमिति
,, 4 ,, 9, 10 read इदं तावदग्रे विदांकुर्वन्तु तत्रभवन्तः
,, 7 ,, 2 transpose the strokes ॥ from behind ॰करणी-यत्वात् after पृथक्करोति
,, 8 ,, 3 प्रतियोगिकेन is to be conjectured for प्रतियोगित्वेन
,, 14 ,, 8 disjoin विना युग्मानां
,, 18 ,, 16 read स्थविष्ठो instead of स्तविष्ठो
,, 22 ,, 14 ,, हव्यशोधने ,, ,, हव्यशोधन
,, 24 ,, 7 disjoin पिण्डपितृयज्ञं कुरुते
,, 28 ,, 5 ,, कर्मिषु प्रयनीयम्। उपबर्हणमुपधानम् ॥
,, 35 ,, 17 read वहन्तीर॰ instead of वृहन्तीर॰
,, 45 ,, 3 insert जीवो between च and जीवन्नेष
,, 62 ,, 3 read ॰हुतमसि instead of ॰ऊतमसि
,, 91 ,, 21 ,, हवींषी— ,, ,, हवीषी—
,, 107 ,, 12 ,, मूलेभ्यः ,, ,, मूलेभ्य
,, 109 ,, 7 ,, विष्ठामनु ,, ,, निष्ठामनु
,, 112 ,, 17 ,, चोंसृचानि॰ ,, ,, चोंसचानि॰ (in part of the impression)
,, 141 ,, 3 put a stroke after होतोत्तरम्
,, 150 ,, 7 read दिवे instead of द्विवे
,, 156 ,, 19 ,, मध्ये ,, ,, मध्य
,, 170 ,, 16 ,, ॰तर्भुयामिति ,, ,, ॰तर्भयामिति
,, 216 ,, 11 ,, ब्रह्मण ,, ,, बह्मण
,, 223 note expunge the point after 'others'
,, 226 ,, 4 read निमुक् instead of नि क्
,, ,, ,, 19 ,, ॰यासमि॰ ,, ,, ॰यासुमि॰
,, 229 ,, 15 ,, यज्ञो ,, ,, यज्ञा
,, 249 ,, 13 ,, दुवस्यतेत्येषा ,, ,, दुवस्यतेत्यषा
,, 257 ,, 20 ,, मधुमत्सं॰ ,, ,, मघमत्सं॰

Page 258 note 16 read प्रथमं instead of प्रथम
„ 264 „ 13 „ स्पष्टम्
„ 286 „ 3 „ ०च्छ्रेयान्स्यादिति „ „ ०च्छेयान्स्यादिति
„ 305 „ 6 put a stroke behind ०हरति
„ 310 „ 1 read पुनरूर्जैति instead of पुनरूजति
„ 333 „ 14 „ पूर्णे „ „ पूण
„ „ „ 19 „ पूर्णे० „ „ पुर्णे०
„ 353 „ 5 „ उत्तरामाहुति० „ „ उत्तरामहुति०
„ 357 „ 2 „ ०घर्षं „ „ ०घष
„ 391 „ 14 „ बभ्रुः „ „ बभ्रः
„ 410 „ 2 disjoin वि ष्टषो
„ 412 „ 13 read शाखापवित्रं instead of शाकपवित्रं.

---

Page 15 line 4 read सहस्रवल्शा instead of सहस्रवश्मा
„ „ „ 11 „ आयपिता „ „ आयुपिता
„ 25 „ 17 „ दर्वीँ „ „ दर्वीं
„ 36 „ 7 „ प्रवाह्यन्ते „ „ प्रवाह्मन्ते
„ 42 „ 2 „ गांदोह as one word and correct accordingly Taitt. Br. 3. 7. 4. 14.
„ 78 „ 9 „ सवितोत्पुनात्वि० instead of सवितोत्पूनात्वि०
„ 79 „ 20 „ ०संभवात् „ „ ०संभवात
„ 82 „ 1 „ पृथुं „ „ पृथं
„ 87 „ 4 „ ०माग्नीध्रो „ „ ०माग्नीध्नो
„ 137 „ 2 „ तत्संबन्धा० „ „ तत्संवन्धा०
„ 142 „ 16 „ बर्हिषि „ „ वर्हिषि
„ 158 „ 3 „ पत्नीसंयाजाः „ „ पत्नीपसंयाजाः
„ 164 „ 16 „ वितताः „ „ वितता
„ 183 „ 13 „ } ब्रह्मन् „ „ ब्रह्मन्
„ 184 „ 4 „ }
„ 191 „ 8 „ परस्मै च „ „ परमे
„ „ „ 21 „ रुद्राना० „ „ रुद्राना०
„ 252 „ 16 „ ०ब्रह्मौदनं „ „ ०द्रह्मौदनं
„ 258 „ 16 „ प्रथमं „ „ प्रथम

| | | | | |
|---|---|---|---|---|
| ,, 265 | ,, 9 | ,, शुष्मायाः | ,, ,, | शुष्मायाः |
| ,, 424 | ,, 16 | ,, ॰न्नूद्वीति | ,, ,, | ॰न्नूद्वीति |
| ,, 425 | ,, 5 join | यथाप्राप्त | | |
| ,, 438 | ,, 12 read | प्रोख्ो- | ,, ,, | प्रोखा- |
| ,, 451 | ,, 5 | ,, व्यथिष्या | ,, ,, | व्यथिष्या |
| | | and cf. Pâṇ. 3. 4. 10. | | |
| ,, 460 | ,, 8 | ,, प्रतिप्रस्थाता | instead of | प्रतिप्रास्थाता |
| ,, 469 | ,, 26 | ,, 226 ,, 3 | ,, ,, | 226 ,, 4 |
| ,, 470 | ,, 1 | ,, line | ,, ,, | note |



